ततस्तथैव यत्नं विधत्त यूयमिति शिष्याणामुपदेशो दीयते ॥ सप्तमे त्विदमभिहितं ॥ तद्यथा ॥ निःशीला गृहस्थाः कुशीलास्त्वन्यतीर्थिकाः पार्श्वस्थादयो वा ते परित्यक्ता येन साधुना स परित्यक्तनिःशीलकुशील इति ॥ तथा सुशीला उद्युक्तविहारिणः संविग्नाः संवेगमग्रास्तत्सेवाशीलः शीलवान् भवतीति । अष्टमे त्वेतत्प्रतिपाद्यते । तद्यथा । ज्ञात्वा वीर्यद्वयं पंमितवीर्ये प्रयत्नो विधीयत इति ॥ नवमे चार्थाधिकारस्त्वयं ॥ तद्यथा ॥ यथाऽवस्थितोधर्मः कथ्यते ॥ दशमेतु समाधिः प्रतिपाद्यते ॥ एकादशेतु सम्यग्दर्शनज्ञानचारित्रात्मको मोक्षमार्गः कथ्यते ॥ द्वादशे त्वयमर्थाधिकारः ॥ तद्यथा । समवसृता अवतीर्णा व्यवस्थिताश्चतुर्षु मतेषु क्रियाऽक्रियाऽज्ञानवैनयिकाख्येष्वभिप्रायेषु त्रिषष्ठ्युत्तरशतत्रयसंख्याः पाखंडिनः स्वीयं स्वीयमर्थं प्रसाधयंतः समुत्थितास्तदुपन्यस्तसाधनदोषोद्भावनतो निराक्रियंते ॥ त्रयोदशे त्विदमभिहितं ॥ तद्यथा ॥ सर्ववादिषु कपिलकणादाक्षपादशौद्धोदनिजैमिनिप्रभृतिमतानुसारिषु कुमार्गप्रणेतृत्वं साध्यते ॥ चतुर्दशेतु ग्रंथाख्येऽध्ययनेऽयमर्थाधिकारः ॥ तद्यथा । शिष्याणां गुणदोषकथना तथा शिष्यगुणसंपदुपेतेन च विनेयेन नित्यं गुणानुरूपगुरुकुलवासो विधेय इति ॥ पंचदशे त्वादानीयाख्येऽध्ययनेऽर्थाधिकारोऽयं ॥ तद्यथा ॥ आदीयंते गृह्यंते उपादीयंते इत्यादानीयानि पदान्यर्थो वा ते च प्रागुपन्यस्तपदैरर्थैश्च प्रायशोऽत्र संकलिताः ॥ तथा आयतं चरित्रं सम्यक्चरित्रं मोक्षमार्गप्रसाधकं तच्चात्र व्यावर्ण्यत इति ॥ षोमशेतु गाथाख्येऽल्पग्रंथेऽध्ययनार्थोऽयं व्यावर्ण्यते । तद्यथा ॥ पंचदशभिरध्ययनैर्योर्थो निहितः सोत्र पंमितवचनेन संक्षिप्तानिधानेन प्रतिपाद्यत इति ॥ 'गाहा सोलसगाणं पिंडत्थोवन्नित्तं समासेण ॥ इत्तो इक्किक्कं पुण अज्झयणं कित्तयिस्सामि' ॥१॥ तत्राद्यमध्ययनं समयाख्यं तस्य चोपक्रमादीनि चत्वार्यनुयोगद्वाराणि भवंति ॥ तत्रोपक्रमणमुपक्रम्यते वाऽनेन शास्त्रं न्यासदेशं निक्षेपावसरमानीयत इत्युपक्रमः । सच लौकिको नामस्थापनाद्रव्यक्षेत्रकालभावभेदेन षड्रूप आवश्यकादिष्वेवप्रपंचितः ॥ शास्त्रीयोप्यानुपूर्वीनामप्रमाणवक्तव्यतार्थाधिकारसमवताररूपः षोढैव । तत्रानुपूर्व्यादीन्यनुयोगद्वारानुसारेण ज्ञेयानि तावद्यावत्समवतारस्तत्रैतदध्ययनमानुपूर्व्यादिषु यत्र यत्र समवतरति तत्र तत्र समवतारयितव्यं ॥ तत्र दशविधायामानुपूर्व्यां गणनानुपूर्व्यां समवतरति सापि त्रिधा । पूर्वानुपूर्वी पश्चानुपूर्वी अनानुपूर्वी चेति ॥ तत्रेदमध्ययनं पूर्वानुपूर्व्यां प्रथमं पश्चानुपूर्व्यां षोडशम् । अनानुपूर्व्यां तु चिंत्यमानमस्यामेवैकादिकायामेकोत्तरिकायां षोडश गच्छतायां श्रेण्यामन्योन्याभ्यासद्विरूपोनसंख्याभेदं भवति ॥ अनानुपूर्व्यांतु षोडशभेदसंख्यापरिज्ञानोपायोयं । तद्यथा । 'एकाद्या गच्छपर्यंताः परस्परसमाहताः ॥ राशयस्तद्धि विज्ञेयं विकल्पगणिते फलं' ॥१॥ प्रस्तारानयनोपायस्त्वयं ॥ पुव्वाणुपुव्विहेट्ठा

१ २ ३ ४ ५ इत्यादि॥तत्र 'गणितेंत्यविजक्ते तु लब्धं शेषैर्विनाजयेत् ॥ आदावंते च तत्
२ १ ३ ४ ५ स्थाप्यं विकल्पगणिते क्रमात्'॥१॥ अयं श्लोकः शिष्यहितार्थं विव्रियते। त
१ ३ २ ४ ५ त्र सुखावगमार्थं षट् पदानि समाश्रित्य तावत् श्लोकार्थो योज्यते । तत्रैवं
३ १ २ ४ ५ षट् पदानि स्थाप्यानि । १२३४५६ । एतेषां परस्परताडनेन सप्तशतानि
२ ३ १ ४ ५ विंशत्युत्तराणि गणितमुच्यते । तस्मिन् गणितेंऽत्योत्र षट्कस्तेन जागे हृते विं
३ २ १ ४ ५ शत्युत्तरं शतं लज्यते तच्च पश्चां पंक्तीनामंत्यपंक्तौ षट्कानां न्यस्यते । तदधः
१ २ ४ ३ ५ पंचकानां विंशत्युत्तरमेवशतम्॥एवमधोधश्चतुष्कत्रिकद्विकैकानां प्रत्येकं विंश
त्युत्तरशतं न्यस्यमेवमंत्यपंक्तौ सप्त शतानि विंशत्युत्तराणि जवंत्येषा च गणितप्रक्रियाया आ
दिरुच्यते । तथा यत्तद्विंशत्युत्तरं शतं लब्धं तस्य च पुनः शेषेण पंचकेन जागेनापहृते ल
ब्धा चतुर्विंशतिस्तावंतस्तावन्तश्च पंचकचतुष्कत्रिकद्विकैकाः प्रत्येकं पंचमपंक्तौ न्यस्या याव
द्विंशत्युत्तरं शतमिति॥ तदधोग्रतो न्यस्तमंकं मुक्त्वा येन्ये तेषां यो यो महत्संख्यः स सोध
स्ताच्चतुर्विंशतिसंख्य एव तावत् न्यस्यो यावत्सप्तशतानि विंशत्युत्तराणि पंचमपङ्क्तावपि
पूर्णानि जवंति ॥ एषा च गणितप्रक्रियेत्यनिधीयते ॥ एवमनया प्रक्रियया चतुर्विंशतेः शे
षचतुष्ककेन जागे हृते षट् लज्यंते तावंतश्चतुःपंक्तौ चतुष्ककाः स्थाप्यास्तदधः षट्त्रिकाः
पुनर्द्विका नूय एकका: पुनः पूर्वन्यायेन पंक्तिः पूरणीया ॥ पुनः षट्कस्य शेषत्रिकेण
जागे हृते द्वौ लज्येते तावन्मात्रौ त्रिकौ तृतीयपंक्तौ शेषं पूर्ववत् । शेषपंक्तिद्वये शेषमंकद्व
यं क्रमोत्क्रमाच्यां व्यवस्थाप्यमिति ॥ तथा जाम्नि षड्विधनाम्न्यवतरति । यतस्तत्र षड्
जावाः प्ररूप्यंते । श्रुतस्यच क्षायोपशमिकजाववर्तित्वात् । प्रमाणमधुना प्रमीयतेनेने
ति प्रमाणं॥तत् इव्यक्षेत्रकालजावन्नेदाच्चतुर्द्धा । तत्रास्याध्ययनस्य क्षायोपशमिकजावव्य
वस्थितत्वाद्भावप्रमाणेऽवतारः । जावप्रमाणं च गुण, नय, संख्या, न्नेदात्रिधा । तत्रापि गु
णप्रमाणे समवतारः । तदपि जीवाजीवन्नेदाद् द्विधा । समयाध्ययनस्य च क्षायोपशमिक
जावरूपत्वात्तस्य च जीवानन्यत्वाज्जीवगुणप्रमाणे समवतारः । जीवगुणप्रमाणमपि ज्ञान,
दर्शन, चारित्र, न्नेदात्रिविधं । तत्रास्य बोधरूपत्वात् ज्ञानगुणप्रमाणे समवतारः॥ तदपि
प्रत्यक्षानुमानोपमानागमन्नेदाच्चतुर्द्धा । तत्रास्यागमप्रमाणे समवतारः ॥ सोपि लौ
किक, लोकोत्तर, न्नेदाद् द्विधा । तदस्य लोकोत्तरे समवतारस्तस्य च सूत्रार्थतदुजयरूपत्वा
त्रैविध्यं । त्रिष्वपि समवतारः । यदि वाऽत्मानंतरपरंपरन्नेदादागमस्त्रिविधस्तत्र तीर्थ
कृतामर्थापेक्षयाऽत्मागमो गणधराणामनंतरागमस्तच्छिष्याणां परंपरागमः । सूत्रापेक्षया
तु गणधराणामात्मागमस्तच्छिष्याणामनंतरागमस्तदन्येषां परंपरागमः । गुणप्रमाणानंत
रं नयप्रमाणावसरस्तस्य चेदानीं पृथक्त्वानुयोगे नास्ति समवतारो जवेद्वा पुरुषापे
क्षया ॥ तथा चोक्तं ॥ मूढनइयं सुयं कालियंतुणणया समोरयंति इहं ॥ अपु

हत्ते समुयारो णत्थि पुहुत्ते समोयारो ॥"१ ॥ तथा ॥ आसज्ज उ सोयारं नएनय वि
सारउ बूया' ॥ संख्याप्रमाणं त्वष्टधा ॥ नाम, स्थापना, द्रव्य, क्षेत्र, काल, परिमा
ण, पर्यव, भाव, भेदात् । तत्रापि परिमाणसंख्यायां समवतारः ॥ सापि कालिकदृष्टि
वादभावात् द्विधा ॥ तत्रास्य कालिकपरिमाणसंख्यायां समवतारस्तत्राप्यंगानंगयोरं
गप्रविष्टे समवतारः । पर्यवसंख्यायां त्वनंताः पर्यवाः ॥ तथा संख्येयान्यक्षराणि संख्ये
याः संघाताः संख्येयानि पदानि संख्येयाः श्लोकाः संख्येया गाथाः संख्येया वेदाः
संख्येयान्यनुयोगद्वाराणि । सांप्रतं वक्तव्यतायाः समवताराश्चिंत्यते ॥ साच स्व, पर,
समय, तदुभयभेदात्त्रिधा । तत्रेदमध्ययनं त्रिविधायामपि समवतरति । अर्थाधिकारो द्वेधा॥
अध्ययनार्थाधिकार उद्देशार्थाधिकारश्च । तत्राध्ययनार्थाधिकारोऽभिहितः । उद्देशार्थाधि
कारं तु गाथांतरितं निर्युक्तिकृद्वक्ष्यति । सांप्रतं निक्षेपावसरः सच त्रिधा । ओघनिष्पन्नो ना
मनिष्पन्नः सूत्रालापकनिष्पन्नश्च । तत्रौघनिष्पन्नेऽध्ययनं तस्यच निक्षेप आवश्यकादौ प्रबं
धेनाभिहित एव । नामनिष्पन्नेतु समय इति॥ २७॥नाम तन्निक्षेपार्थं निर्युक्तिकार आह॥ "ना
मंठवणा दविए खेत्ते काले कुतित्थसंगारे ॥ कुलगणसंकरगंडी । बोधव्वा भावसमएय" ॥२८॥
(नामं ठवणाइत्यादि) । नाम, स्थापना, द्रव्य, क्षेत्र, काल, कुतीर्थ, संगार, कुल, गण,
संकर, गंडी, भाव, भेदात् द्वादशधा समयनिक्षेपः । तत्र नामस्थापने क्षुण्णे । द्रव्यसमयो
द्रव्यस्य सम्यगयनं परिणतिविशेषः स्वभाव इत्यर्थः । तद्यथा । जीवद्रव्यस्योपयोगः
पुद्गलद्रव्यस्य मूर्तत्वं धर्माधर्माकाशानां गतिस्थित्यवगाहदानलक्षणोऽथवा योयस्य द्र
व्यस्यावसरो द्रव्यस्योपयोगकाल इति ॥ तद्यथा ॥ 'वर्षासु लवणममृतं शरदि जलं गो
पयश्च हेमंते ॥ शिशिरे चामलकरसो घृतं वसंते गुडश्चांते' ॥ १ ॥ क्षेत्रसमयः क्षेत्रमाका
शं तस्य समयः स्वभावः । यथा ॥ 'एगेणवितेपुण्णे दोहिंविपुण्णे सयंपि माएज्जा ॥ लक्खस
एणविपुण्णे, कोडिसहस्सं पि माएज्जा' ॥१॥ यदि वा देवकुरुप्रभृतीनां क्षेत्राणामीदृशोऽनु
भावो यदुत तत्र प्राणिनः सुरूपा नित्यसुखिनो निर्वैराश्च भवंतीति क्षेत्रस्य वा परिकर्मणाव
सरः क्षेत्रसमय इति ॥ कालसमयस्तु सुषमादेरनुभावविशेषः । उत्पलपत्रशतभेदाभि
व्यंग्यो वा कालविशेषः कालसमय इति ॥ अत्र च द्रव्यक्षेत्रकालप्राधान्यविवक्षया द्रव्यक्षे
त्रकालसमयता द्रष्टव्येति । कुतीर्थसमयः पाखंडिकानामात्मीयानात्मीय आगमविशेष
स्तदुक्तं वानुष्ठानमिति ॥ संगारः संकेतस्तद्रूपः समयः संगारसमयः ॥ यथा सिद्धार्थसार
थिदेवेन पूर्वकृतसंगारानुसारेण गृहीतहरिशवो बलदेवः प्रतिबोधित इति ॥ कुलसमयः
कुलाचारो यथा शकानां पितृशुद्धिः आभीरकाणां मंथनिका शुद्धिः । गणसमयो यथा॥
मल्लानामयमाचारो यथा यो ह्यनाथो मल्लो म्रियते स तैःसंस्क्रियते पतितश्चोध्रियत इति ।
संकरसमयस्तु संकरोभिन्नजातीयानां मीलकस्तत्र च समये एकवाक्यता ॥ यथा वाममा

गोदावनाचारप्रवृत्तावपि शुचिकरणमिति । गंडीसमयो यथा शाक्यानां भोजनावसरे गंडीताडनमिति । भावसमयस्तु नो आगमत इदमेवाध्ययनमनेनैवात्राधिकारः शेषाणां तु शिष्यमतिविकासार्थमुपन्यास इति ॥२७॥सांप्रतं प्रागुपन्यस्तोद्देशार्थाधिकाराभिधित्सया ऽह ॥ "महपंचभूय एक्क, प्पएय तज्जीवतस्सरीरेय ॥ तहय अगार गवाती अत्तछट्ठो अफलवादी ॥३०॥ बीए नियवाईणं, अण्णाणियतहय नाणवाईणं ॥ कम्मं च यन्नगच्छइ, चउव्विहं भिक्खुसमयंमि ॥ ३१॥ तइए आहाकम्मं, कडवाई जहयतेयवाईणं ॥ किच्चुवमा य चउत्थे, परप्पवाई अविरएसु" ॥ ३२ ॥ महपंचभूय इत्यादिगाथात्रयं । अस्याध्ययनस्य चत्वार उद्देशकास्तत्राद्यस्यषडर्थाधिकारा आद्यगाथयाऽभिहिताः ॥ तद्यथा । पंचभूतानि पृथिव्यप्तेजोवाय्वाकाशाख्यानि महांति च तानि सर्वलोकव्यापित्वात् भूतानि च महाभूतानि इत्ययमेकोऽर्थाधिकारः । तथा चेतनाचेतनं सर्व मेकात्मविवर्त इत्यात्माऽद्वैतवादः प्रतिपाद्यत इत्यर्थाधिकारो द्वितीयः । स चासौ जीवश्च तज्जीवः कायाकारो भूतपरिणामस्तदेव शरीरं जीवशरीरयोरैक्यमिति यावदिति तृतीयोर्थाधिकारः । तथाऽकारको जीवः सर्वस्याः पुण्यपापक्रियाया इत्येवंवादीति चतुर्थोधिकारः ॥ तथात्मा षष्ठ इति पंचानां भूतानामात्मा षष्ठः प्रतिपाद्यत इत्ययं पंचमोर्थाधिकारः । तथा फलवादीति । न विद्यते कस्याश्चित् क्रियायाः फलमित्येव वादी च प्रतिपाद्यत इति षष्ठोर्थाधिकार इति । द्वितीयोद्देशकेचत्वारोर्थाधिकाराः॥तद्यथा । नियतिवादस्तथाऽज्ञानिकमतं ज्ञानवादी च प्रतिपाद्यते । कर्म च चयमुपचयं चतुर्विधमपि न गच्छति भिक्षुसमये शाक्यागमे चतुर्थोर्थाधिकारः ॥ चातुर्विध्यंतु कर्मणो ऽविज्ञोपचितं ॥ अविज्ञानमविज्ञा तयोपचितमनाभोगकृतमित्यर्थः । यथा मातुः स्तनाद्याक्रमणेन पुत्रव्यापत्तावप्यनाभोगान्नकर्मोपचीयते । तथा परिज्ञानं परिज्ञा केवलेन मनसा पर्यालोचनं तेनापि कस्यचित्प्राणिनो व्यापादनाभावात् कर्मोपचयाभाव इति । तथा ईरणमीर्यागमनं तेन जनितमीर्याप्रत्ययं तदपि कर्मोपचयं न गच्छति प्राणिव्यापादनाभिसंधेरभावादिति । तथा स्वप्नांतिकं स्वप्नप्रत्ययं कर्म नोपचीयते । यथा स्वप्नभोजने तृप्त्यभाव इति तृतीयोद्देशकेत्वयमर्थाधिकारः । तथा आधाकर्मगतविचारस्तद्भोजिनां च दोषोपदर्शनमिति । तथा कृतवादी च भण्यते । तद्यथेश्वरेण कृतोयं लोकः प्रधानादिकृतो वा ॥ यथा च ते प्रतिवादिन आत्मीयं कृतवादं गृहीत्वोपस्थितास्तथा भण्यंत इति द्वितीयोधिकारः । चतुर्थोद्देशकाधिकारस्त्वयं । तद्यथा॥ अविरतेषु गृहस्थेषु यानि कृत्यान्यनुष्ठानानि स्थितानि तैरसंयमप्रधानैः कर्तव्यैः परप्रवादी परतीर्थिक उपमीयत इति । इदानीमनुगमः सच द्वेधा । सूत्रानुगमो निर्युक्त्यनुगमश्च । तत्र निर्युक्त्यनुगमस्त्रिविधः । तद्यथा । निक्षेपनिर्युक्त्यनुगम उपोद्घातनिर्युक्त्यनुगमः सूत्रस्पर्शिकनिर्युक्त्यनुगमश्च । तत्र निक्षेपनिर्युक्त्यनुगमोऽनु

गत उपनामनिष्पन्ननिक्षेपयोरंतर्गतत्वात् । तथाच वक्ष्यमाणस्य सूत्रस्य निक्षेपावसरत्वात् । उपोद्घातनिर्युक्त्यनुगमस्तु षड्विंशति द्वारप्रतिपादकागाथाद्वयादवसेयस्तच्चेदं उद्देशे निद्देशेय इत्यादि । सूत्रस्पर्शिकनिर्युक्त्यनुगमस्तु सूत्रे सति संभवति ॥ सूत्रं च सूत्रानुगमे सचावसरप्राप्त एव । तत्राऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयं । तच्चेदं ॥ बुज्झिज्झत्ति तिउट्टिज्जाइत्यादिश्लोकः । अस्य संहितादिक्रमेण व्याख्या । ( बुध्यतेत्यादि ) । सूत्रमिदं सूत्रकृतांगादौ वर्तते । अस्यच ऽऽचारांगेन सहायं संबंधः । तद्यथा आचारांगेभिहितं । ' जीवो छक्कायपरूवणा यतेसिं वहेणबंधोत्ति ' इत्यादि तत्सर्वं बुध्येतेत्यादि । यदि चेह केषांचिद्वादिनां ज्ञानादेवमुक्त्यवाप्तिरन्येषां क्रियामात्रात् । जैनानां तूभाभ्यां निःश्रेयसाधिगम इत्येतदनेन श्लोकेन प्रतिपाद्यते । तत्रापि ज्ञानपूर्विका क्रिया फलवती भवतीत्यादि बुध्येतेत्यनेन ज्ञानमुक्तं ॥ त्रोटयेदित्यनेनच क्रियोक्ता ॥ तत्रायमर्थो बुध्येतावगच्छेत् बोधं विदध्यादित्युपदेश. । किंपुनस्तद्बुध्येत तदाह । बंधनं बध्यते जीवप्रदेशैरन्योन्यानुवेधरूपतया व्यवस्थाप्यत इति बंधनं ज्ञानावरणाद्यष्टप्रकारं कर्म तद्धेतवो वा मिथ्यात्वाऽविरत्यादयः परिग्रहारंभादयो वा । नच बोधमात्रादभिलषितार्थावाप्तिर्भवतीत्यतः क्रियां दर्शयति । तच्च बंधनं परिज्ञाय विशिष्टया क्रियया संयमानुष्ठानरूपया त्रोटयेदपनयेदात्मनः पृथक्कुर्यात्परित्यजेद्वा । एवं चाभिहिते जंबूस्वाम्यादिको विनेयो बंधादिस्वरूपं विशिष्टं जिज्ञासुः प्रश्न ॥ किमाह किमुक्तवान् बंधनं वीरस्तीर्थकृत् किंवा जानन्नवगच्छंस्तद्बंधनं त्रोटयति ततो वा त्रुट्यतीति श्लोकार्थः ॥ १ ॥ बंधनस्वरूपनिर्वचनायाह ॥ ( चित्तमंतमचित्तं वेत्यादि ) ॥ इह बंधनं कर्म तद्धेतवो वाऽभिधीयंते ॥ तत्र न निदानमंतरेण निदानिनो जन्मेति निदानमेव दर्शयति ॥ तत्रापि सर्वारंभाः कर्मोपादानरूपाः प्रायश आत्मात्मीयग्रहोत्थानामिति कृत्वाऽऽदौ परिग्रहमेव दर्शितवान् ॥ चित्तमुपयोगो ज्ञानं तद्विद्यते यस्य तच्चित्तवत् द्विपदचतुष्पदादि । ततोन्यदचित्तवत् कनकरजतादि तदुभयरूपमपि परिग्रहं परिगृह्य कृशमपि स्तोकमपि तृणतुषादिकमपीत्यर्थः । यदि वा कसनं कसः परिग्रहग्रहणबुध्या जीवस्य गमनपरिणाम इति यावत् । तदेवं स्वतः परिग्रहं परिगृह्यान्यान्वा ग्राहयित्वा गृण्हतो वान्याननुज्ञाय दुःखयतीति दुःखमष्टप्रकारं कर्म तत्फलं वा असातोदयादिरूपं तस्मान्न मुच्यत इति । परिग्रहाग्रह एव परमार्थतोनर्थमूलं भवति । तथा चोक्तं । 'ममाहमिति चैष यावदभिमानदाहज्वरः कृतांतमुखमेव तावदिति न प्रशांत्युन्नयः ॥ यशःसुखपिपासितैरयमसावनर्थोत्तरैः परैरपसदः कुतोपि कथमप्यपाकृष्यते' ॥ १ ॥ तथाच ॥ द्वेषस्यायतनं धृतेरपचयः क्षांतेः प्रतीपो विधिर्व्याक्षेपस्य सुहृन्मदस्य भवनं ध्यानस्य कष्टो रिपुः ॥ दुःखस्य प्रभवः सुखस्य निधनं पापस्य वासो निजः प्राज्ञस्यापि परिग्रहो ग्रहइव क्लेशाय नाशायच' ॥ १ ॥ २ ॥

सयं निवायए पाणे, अडवाऽन्नेहिं घायए ॥ हणंतं वा णुजा
णाइ, वेरं वड्डइ अप्पणो ॥३॥ जेसिंस कुले समुप्पन्ने जेहिं वा सं
वसे नरे ॥ ममाइ लुप्पई बाले, अन्ने अन्नेहि मुछिए ॥ ४ ॥

अर्थ–हवे ज्यां परिग्रह त्यां आरंभ होय, अने ज्यां आरंभ त्यां प्राणातिपात होय एवुं देखाडेछे. ते परिग्रहवंत पुरुष असंतोषी थतो ते परिग्रह उपार्जवाने अर्थे, अने उपार्जन करेलो परिग्रह राखवाने अर्थे सयंके० पोते, पाणेके० प्राणीउनो, निवायएके० निपात एटले विनाश करे, अडवाके० अथवा अन्नेहि घायएके० अनेरा पासे प्राणीउनी घात करावे; वाके० अथवा हणंतं के० जे प्राणीउने हणतो होय अर्थात् प्राणीउनो विनाश करतो होय तेने अणुजाणाइके० अनुमोदवे करी. प्राणीउनी घात करतो थको अथवा करावतो थको अप्पणोके० आत्माने वेरंवड्ढइके० वैरनी वृद्धी करेछे. ते थी जे दुःख परंपरारूप बंधन तेथकी छुटे नहीं ॥३॥ वली पण बंधन आश्रयी कहेछे. जेसिंस कुले समुप्पन्नेके० रागोडादिक जे कुलमां उत्पन्न थयो, अथवा जेहिंवा संवसे के० जेनीसाथे वास वसे, एटले पांसुक्रीडादिक करे. एवा नरेके० मनुष्य जे माता, पिता, नाई, बेहेन, नार्या, अने मित्रादिक तेने विषे ममाइके० ममत्वनो करनार एटले मातापितादिकनी साथे स्नेह करतो एवो बालेके० अज्ञानी जीवते लुप्पइके० कर्मे संसारचक्रमांहे न मतो थको पीडायछे, ते मनुष्य केवोछे तोके अन्नेअन्नेहिके० अन्य अन्य एटले प्रथम माता पिता, तदनंतर नाईने विषे, तदनंतर पुत्रपौत्रादिक, एम अन्य अन्यने विषे मुछिएके० मूर्छित एटले मूर्छा पामतो थको स्नेहे करी पीडायछे. ॥ ४ ॥

---

दीपिका ॥ अथवा प्रकारांतरेण बंधनमेवाह । सयंतीति ॥ सपरिग्रहवान् स्वयमात्मना प्राणानतिपातयेत् जीवान् हिंस्यात् । अथवा अन्यैः परैरपि घातयति घ्नतश्चान्याननु जानीते तदेवं कृतकारितानुमतिनिः प्राणिघातं कुर्वन्नात्मनो वैरं वर्धयति ततश्च बंधनान्न मुच्यते इति नावः ॥ ३ ॥ पुनर्बंधनमेवाश्रित्याह । जेसिंमिति । यस्मिन् कुले जातो यैर्वा मित्रैर्नार्यादिनिर्वा सह संवसेन्नरः तेषु मित्रपितृमातृनार्यादिषु ममायमिति ममत्ववान् लुप्यते ममत्वजनितेन कर्मणा बाध्यते । बालो मूर्खः विवेकरहितत्वादन्येषु च मूर्छितो ममत्वबहुल इत्यर्थः ॥ ४ ॥

---

टीका ॥ तथाच परिग्रहेष्वप्राप्तनष्टेषु कांक्षाशोकौ प्राप्तेषु च रक्षणमुपनोगे चाऽतृप्तिरि त्येवं परिग्रहे सति दुःखात्मकाद्बंधनान्न मुच्यत इति परिग्रहवतश्चावश्यंनाव्यारंभस्त स्मिंश्च प्राणातिपात इति दर्शयितुमाह । सयंनिवायएपाणे इत्यादि । यदि वा प्रकारांत

रेण बंधनमेवाह । सर्पतीत्यादि । स परिग्रहवानसंतुष्टो नूयस्तदर्जनपरः समार्जितोप इवकारिणि च द्वेषमुपगतस्ततः स्वयमात्मना त्रिभ्यो मनोवाक्कायेन्य आयुर्बलशरीरेन्यो वा पातयेत् च्यावयेत् प्राणान् प्राणिनः । अकारलोपा द्वा अतिपातयेत् प्राणानिति । प्रा णाश्चामी । पंचेंद्रियाणि त्रिविधं बलंच, उच्छ्वासनिश्वासमथान्यदायुः ॥ प्राणा दशैते नगव द्भिरुक्ता,स्तेषां वियोजीकरणं तु हिंसा ॥ १ ॥ तथा स परिग्रहाग्रही न केवलं स्वतो व्या पादयति अपरैरपि घातयति घ्नतश्चान्यान् समनुजानीते तदेव कृतकारितानुमतिनिः प्राण्युपमर्दनेन जन्मांतरशतानुबंध्यात्मनो वैरं वर्धयति । ततश्च दुःखपरंपरारूपबंधनान्न मुच्यत इति । प्राणातिपातस्य चोपलक्षणार्थत्वात् मृषावादादयोपि बंधहेतवो दृष्टव्या इति ॥ ३ ॥ पुनर्बंधनमेवाश्रित्याह । ( जेस्सिमित्यादि ) । यस्मिन् राष्ट्रकूटादौ कुले जातो यैर्वा सह पांसुक्रीमितैर्नार्यादिनिर्वा सह संवसेन्नरस्तेषु मातृपितृभ्रातृनगिनीनार्यावय स्यादिषु ममायमिति ममत्ववान् स्निह्यन् लुप्यते विलुप्यते ममत्वजनितेन कर्मणा नारकतिर्यङ्मनुष्यामरलक्षणे संसारे भ्रम्यमाणो बाध्यते पीड्यते। कोसौ बालोऽज्ञः स दसद्विवेकरहितत्वादन्येष्वन्येषु च मूर्छितो गृध्नोध्युपपन्नो ममत्वबहुल इत्यर्थः । पूर्वं तावन्मातापित्रोस्तदनुनार्यायां पुनः पुत्रादौ स्नेहवानिति ॥ ४ ॥

वित्तं सोयरिया चेव, सवमेयं नताणइ॥ संखाए जीवियं चेवं,
कम्मुणा उ तिउट्टइ ॥५॥ एए गंथे विउक्कम्म, एगे समणमाह
णा ॥ अयाणंता विउस्सित्ता सत्ता कामेहिं माणवा ॥ ६ ॥

अर्थ—हवे जे प्रथम कर्युं हतुंके, कहेवुं जाणतो थको बंधन त्रोडे ते कहेछे. वित्तं के० धनधान्यादिक सचित्त तथा अचित्त वस्तु अने सोयरियाके० नाइ प्रमुख कौटुंबि क स्वजनादिक चेवके० वली सवमेयंके० ए सर्व जे कुटुंबादिक स्नेहवंतछे, ते शारीरी, मानसी वेदना नोगवता थकां ए जीवने नताणइके० त्राण नणी न थाय. एवुं जाणी ने जीविपंचके० जे प्राणीउनुं जीवतव्य अल्पछे. एवंके० एवुं संखाएके० जाणीने, जी वितव्य प्राणीउने एटले परिग्रह प्राणिघात अने स्वजन स्नेहादिक बंधननां स्थानने ज्ञ परिज्ञाये जाणीने, प्रत्याख्यान परिज्ञाये ढांमिने, कम्मुणाउ तिउट्टइके० कर्म थकी त्रुटे अ र्थात् कर्म थकी वेगलो थाय. ॥ ५ ॥ हवे स्वसमयनो अधिकार कह्यो परसमयनो अधिकार कहेछे. एएगंथेके० ए अरिहंतना नावित ग्रंथ जे करुणारसमय छे. ते ने ढांमीने स्वेछायें रचित ग्रंथोने विषे विउक्कम्मके० आसक्त थका, एगेसमणके० एक शाक्यादिकना श्रमण, बीजा बृहस्पतिमतानुसारी एवा माहणा के० ब्राह्मण ए अया णंताके० परमार्थना अजाण थका विउस्सित्ता के० विविध प्रकारें बल्प्रबलपणे पोताना

ग्रंथनेविषे सत्ता एटले बंधाणा, एतावतां आपणा मतना कदाग्रही एवा छतां माणवाके० पु रुष जे छे, ते पोतपोतांना मतना अनुरागेकरी, कामेहि के० इच्छामदनादिक तेनेविषे सत्ता के० आसक्त थका प्रवर्त्ते छे एटले पोतानो मार्ग लोकोमांहे प्रसिद्धपणे सारो करी देखाडे छे.

॥ दीपिका–किं जानन् बंधनं त्रोटयतीत्यस्योत्तरमाह । ( वित्तमिति ) । वित्तं द्रव्यं तच्च सचित्तमचित्तं वा । सोदर्या भ्रातृभगिन्यादयः सर्वमेतद्वित्तादिकं संसारे पीड्यमानस्य जंतो र्न त्राणाय न रक्षणाय भवतीति । एतत् संख्याय ज्ञात्वा तथा जीवितं स्वल्पमिति सं ख्याय ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया प्रत्याख्याय कर्मणः सकाशात् त्रुटयति अ पगछत्यसौ । तुर्निश्चये त्रुटयेदेव । यदि वा कर्मणा क्रियया संयमानुष्ठानरूपया बंधनात् त्रुटयति कर्मणः पृथग्भवतीत्यर्थः ॥ ५ ॥ स्वसमयं प्रतिपाद्य परसमयंप्रतिपादयितुका म आह । (एएइति) । एतान् पूर्वोक्तान् ग्रंथान् सूत्रार्थान् व्युत्क्रम्य परित्यज्य एके केचित् श्रमणब्राह्मणाः श्रमणाः शाक्यादयो ब्राह्मणाश्च ( अयाणंता ) परमार्थमजानानाः ( विउस्सित्ता ) विविधमुत्प्राबल्येन सिता बद्धाः स्वसमयेषु प्रतिबद्धाः संतः कामेषु च सक्ता वर्त्तंतइति ॥ ६ ॥

॥टीका–सांप्रतं यदुक्तं प्राक् किंवा जानन् बंधनं त्रोटयतीत्यस्य निर्वचनमाह।(वित्तमित्या दि) । वित्तं द्रव्यं तच्च सचित्तमचित्तं वा । तथा सोदर्या भ्रातृभगिन्यादयः सर्वमपि चैत द्वित्तादिकं संसारांतर्गतस्यासुमतोऽतिकटुकाः शरीरमानसवेदनास्समनुभवतो न त्राणाय रक्षणाय भवंतीत्येतत्संख्याय ज्ञात्वा । तथा जीवितं च प्राणिनां स्वल्पमपि तत्संख्याय ज्ञप रिज्ञया । प्रत्याख्यानपरिज्ञया तु सचित्ताचित्तपरिग्रहप्राण्युपघातस्वजनस्नेहादीनि बं धनस्थानानि प्रत्याख्याय कर्मणः सकाशात्त्रुट्यति अपगछत्यसौ । तुरवधारणे । त्रुटयेदे वेति । यदि वा कर्मणा क्रियया संयमानुष्ठानरूपया बंधनात्त्रुटयति । कर्मणः पृथग्भ वतीत्यर्थः ॥ ५ ॥ अध्ययनार्थाधिकाराभिहितत्वात्स्वसमयप्रतिपादनानंतरं परसमयप्र तिपादनाभिधित्सयाऽह । (एएगंथेविउक्कम्मेत्यादि) । एतानंतरोक्तान् ग्रंथान् व्युत्क्रम्य प रित्यज्य स्वरुचिविरचितार्थेषु ग्रंथेषु सक्ताः सिताः बद्धा एके न सर्वे इति संबंधः । ग्रंथा तिक्रमश्चैतेषां तदुक्तार्थानभ्युपगमात् । अनंतरग्रंथेषु चायमर्थोऽभिहितस्तद्यथा जीवा स्तित्वे सति ज्ञानावरणीयादि कर्मबंधनं तस्य हेतवो मिथ्यात्वाविरतिप्रमादादयः परिग्रहा रंभादयश्च । तत्त्रोटनं च सम्यक्दर्शनाद्युपायेन मोक्षसद्भावश्चेत्येवमादिकः । तदेवमेके श्रमणाः शाक्यादयो बार्हस्पत्यमतानुसारिणश्च ब्राह्मणा एतानर्हदुक्तान् ग्रंथानतिक्रम्य परमार्थमजानाना विविधमनेकप्रकारमुत्प्राबल्येन सिता बद्धाः स्वसमयेष्वभिनिविष्टाः । तथा च शाक्या एवं प्रतिपादयंति । यथा सुखदुःखेच्छाद्वेषज्ञानाधारभूतो नास्त्यात्मा

कश्चित् किंतु विज्ञानमेवैकं विवर्ततइति । क्षणिकाः सर्वसंस्काराइत्यादि । तथा सां ख्या एवं व्यवस्थिताः । सत्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोहंकार स्तस्माद्गणश्च षोडशकस्तस्मात्षोडशकादपि पंचभूतानि चैतन्यं पुरुषस्य स्वरूपमित्या दि । वैशेषिकाः पुनराहुः । द्रव्य, गुण, कर्म, सामान्य, विशेष, समवायाः षट् पदा र्थाइति । तथा नैयायिकाः प्रमाणप्रमेयादीनां पदार्थानामन्वयव्यतिरेकपरिज्ञाना न्निःश्रेयसाधिगमइति व्यवस्थिताः । तथा मीमांसकाश्चोदनालक्षणोधर्मो नच सर्वज्ञः क श्चिद्विद्यते मुक्त्यभावश्चेत्येवमाश्रिताः । चार्वाकास्त्वेवमभिहितवंतो यथा नास्तिकश्चि त्परलोकयायी भूतपंचकाद्व्यतिरिक्तः पदार्थो नापि पुण्यपापे स्तइत्यादि । एवंचांगीकृत्यै ते लोकायतिकाः । मानवाः पुरुषाः सक्ता गृद्धा अध्युपपन्नाः कामेष्विच्छामदनरूपेषु । त थाचोचुः । एतावानेव पुरुषो, यावानिंद्रियगोचरः ॥ भद्रेवृकपदं पश्य, यद्वदंत्यबहुश्रुताः ॥ १ ॥ पिब खाद च साधु शोभने, यदतीतं वरगात्रि तन्न ते ॥ नहि भीरु गतं निवर्तते, समुदयमात्रमिदं कलेवरं ॥ २ ॥ एवं ते तंत्रांतरीयाः स्वसमयार्थवासितांतःकरणाः सं तो भगवदर्हदुक्तं ग्रंथार्थमज्ञातपरमार्थाः समतिक्रम्य स्वकीयेषु ग्रंथेषु सिताः संबद्धाः कामेषु च सक्ताइति ॥ ६ ॥

संति पंच महब्भूया, इहमेगेसि माहिया ॥ पुढवी आउ तेऊ वा, वाउ आगासपंचमा ॥ ७ ॥ एए पंच महब्भूया, तेब्भो एगोत्ति आहिया ॥ अहतेसिं विणासेणं, विणासो होइ देहिणो ॥ ८ ॥

अर्थ—हवे ग्रंथकार प्रथम चार्वाकनुं मत देखाडेछे. संतिपंचमहब्भूया के० ते चार्वा क एम कहेछे के जगत्मां सर्वलोकव्यापी पंचमहाभूत छे. इहके० आ लोकमांहे, एगेसिं के० कोइ एक भूतवादी तेना मतने विषे आहियाके० कह्याछे. ते कोण? तोके० पुढवी हे० पृथ्वी कठिणरूप छे, आवके० अप्प ते द्रव्य लक्षणछे, तेऊके० तेज उष्णरूप, वाउके० वायु चलन लक्षण अने पंचमाके० पांचमुं आगासके० आकाश अवकाश लक्षण छे, ॥७॥ हवे एनुंज विशेष कहेछे. एएपंचमहब्भूयाके० ए पूर्वे कह्याते जे पंचमहा भूत तेब्भो के० ते थकीज एगोत्ति के० कोइ एक चिद्रूप ते भूत थकी अव्यतिरिक्त एवो आहिया के० आत्मा होय छे; परंतु जेम ए पांच भूत थकी पृथक् भूत एवो अन्य-कोइ बीजो आत्मा छे, एवी रीते जे बीजा दर्शनी कल्पना करेछे तेम नथी. केमके ए परलो कनो जनार, सुखदुःखनो भोगवनार जीव एवो पदार्थ कोइ बीजो नथी, एम ते चार्वाक कहेछे तेमने कोइ परवादी एम पूछे के, अहो चार्वाको जो! तमारे मते पंचम हाभूत थकी अन्य कोइ आत्मा एवो पदार्थ नथी, तो मरण पाम्यो एम कोण कहेवाय?

हवे एनो उत्तर चार्वाक दर्शनीओ कहेछे. अहएसिंके० अथ एटले हवे एसिं एटले ए पंच महाभूत जे छे तेना विणासेणं के० विनाश थकी, देहिणो के० जीवनो पण विणासो होइ के० विनाश होयछे. परंतु जे एवुं कहेछे के आत्मा चवीने अन्यत्र स्थाने जायछे. कर्मना वशथकी सुखी डुःखी थायछे, ते सर्व मुग्धरंजन जाणवुं ॥ ८ ॥

॥ दीपिका–सांप्रतं नास्तिकमतमाश्रित्याह । ( संतीति ) संति पंचमहाभूतानि इह अस्मिन् लोके एकेषां भूतवादिनामाख्यातानि तत्वार्थकृतानि । तैर्वा भूतवादिभिर्नास्तिकैराख्यातानि स्वयमंगीकृतानि । परेषां च प्रतिपादितानि तानि चामूनि । ( पुढवीत्यादि ) । पृथ्वी १ आपो जलं २ तेजो वन्हिः ३ वायुः ४ आकाशं पंचमं येषां तानि । ननु सांख्यादिभिरपि भूतानि मन्यंतएव । तत्कथं चार्वाकमतापेक्ष्यैव भूतोपन्यास इति चेडुच्यते । सांख्यादिभिर्हि प्रधानाहंकारादिकं तथा कालदिगात्मादिकं चान्यदपि वस्तुजातमंगीक्रियते । चार्वाकैस्तु भूतव्यतिरिक्तं नात्मादि किंचिन्मन्यतइति तन्मताश्रयेणैवायं सूत्रोपन्यास इति ॥७॥ चार्वाकमतांगीकारमेवाह । (एतइति) । एतानि पंचमहाभूतानि तेभ्यो भूतेभ्यः कायाकारपरिणतेभ्य एकः कश्चिच्चिद्रूपो भूताव्यतिरिक्त आत्मा भवति नतु कश्चिदपरः परलोकयायी जीवाख्यः पदार्थोस्तीत्येवमाख्यातवंतस्ते । ननु यदि भूतेभ्योन्यः कश्चिदात्मा नास्ति कथं तर्हि मृतइति व्यपदेशइत्याशंकायामाह । (अहतेसिंति) । अथ तेषां भूतानां विनाशोऽपगमे देहिनो देवदत्तादेर्विनाशो भवति ततश्च मृतइत्युच्यते न पुनर्जीवापगमइति । अत्रैतन्मतनिर्लोठनयुक्तयो वृत्तितोऽवसेयाः ॥८॥

॥ टीका–सांप्रतं विशेषेण सूत्रकार एव चार्वाकमतमाश्रित्याऽह । ( संतिपंचमहब्भूयाइत्यादि) । संति विद्यंते महांति च तानि भूतानि च महाभूतानि । सर्वलोकव्यापित्वान्महत्वविशेषणं । अनेन च भूताभाववादिनिराकरणं डृष्टव्यं । इहास्मिन् लोके एकेषां भूतवादिनामाख्यातानि प्रतिपादितानि तत्तीर्थकृता तैर्वा भूतवादिभिर्बार्हस्पत्यमतानुसारिभिराख्यातानि स्वयमंगीकृतान्यन्येषां च प्रतिपादितानि । तानि चामूनि । तद्यथा । पृथिवी कठिनरूपा । आपो द्रवलक्षणाः । तेज उष्णरूपं । वायुश्चलनलक्षणः । आकाशं सुषिरलक्षणमिति तच्च पंचमं येषां तानि । तथा । एतानि सांगोपांगानि प्रसिद्धत्वात् प्रत्यक्षप्रमाणावसेयत्वाच्च न कैश्चिदपह्नोतुं शक्यानि । ननु च सांख्यादिभिरपि भूतान्यभ्युपगतान्येव । तथाहि । सांख्यास्तावदेवमूचुः । तद्यथा । सत्वरजस्तमोरूपात्प्रधानान्महान् बुद्धिरित्यर्थः । महतोऽहंकारोऽहमितिप्रत्ययस्तस्मादप्यहंकारात्षोडशकोगण उत्पद्यते । सचायं । पंच स्पर्शादीनि बुद्धींद्रियाणि वाक्पाणिपादपायूपस्थरूपाणि पंच कर्मेंद्रियाणि । एकादशं मनः । पंचतन्मात्राणि । तद्यथा । गंधरसरूपस्पर्शशब्दत

न्मात्राख्यानि । तत्र गंधतन्मात्रात्पृथिवी गंधरसरूपस्पर्शवती । रसतन्मात्रादापो रस
रूपस्पर्शवत्यः । रूपतन्मात्रात्तेजो रूपस्पर्शवत् । स्पर्शतन्मात्राद्वायुः स्पर्शवान् । शब्द
तन्मात्रादाकाशं गंधरसरूपस्पर्शवर्जितमुत्पद्यतइति । तथा वैशेषिका अपि भूतान्यभि
हितवंतः । तद्यथा । पृथिवीत्वयोगात्पृथिवी । साच परमाणुलक्षणा नित्या । द्व्यणुकादि
प्रक्रमनिष्पन्नकार्यरूपतया त्वनित्या । चतुर्दशभिर्गुणैरूप, रस, गंध, स्पर्श, संख्या, परि
माण, पृथक्त्व, संयोग, विभाग, परत्वा,परत्व, गुरुत्व, द्रवत्व, वेगाख्यैरुपेता । तथा
प्त्वयोगादापस्ताश्च रूपरसस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्व
स्वाभाविकद्रवत्वस्नेहवेगवत्यस्तासु च रूपं शुक्लमेव रसो मधुरएव स्पर्शः शीतएवेति ।
तेजस्त्वाभिसंबंधात्तेजः । तच्च रूपस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वनै
मित्तिकद्रवत्ववेगाख्यैरेकादशभिर्गुणैर्गुणवत् । तत्र रूपं शुक्लं भास्वरं च । स्पर्शउष्णएवेति ।
वायुत्वयोगाद्वायुः । सचानुष्णशीतस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वनै
वेगाख्यैर्नवभिर्गुणैर्गुणवान् । द्रुत्कंपशब्दानुष्णशीतस्पर्शलिंगं । आकाशमिति पारिभाषिकी
संज्ञा एकत्वात्तस्य । तच्च संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्व
वत् । शब्दलिंगंचेत्येवमन्यैरपि वादिभिर्भूतसद्भावाश्रयणे किमिति लोकायतिकमतापेक्ष
या भूतपंचकोपन्यासइत्युच्यते । सांख्यादिभिर्हि प्रधानात्साहंकारिकं तथा कालदिगात्मा
दिकं चान्यदपि वस्तुजातमभ्युपेयते । लोकायतिकैस्तु भूतपंचकव्यतिरिक्तं नात्मादिकं किं
चिदभ्युपगम्यते इत्यतस्तन्मताश्रयणेनैव सूत्रार्थो व्याख्यायतइति ॥ ७ ॥ यथा चैतच्च
था दर्शयितुमाह । (एएपंचमहब्भूयाइत्यादि) । एतान्यनंतरोक्तानि पृथिव्यादीनि पंच महा
भूतानि यानि तेभ्यः कायाकारपरिणतेभ्य एकः कश्चिच्चिद्रूपो भूताव्यतिरिक्त आत्मा
भवति न भूतेभ्यो व्यतिरिक्तोऽपरः कश्चित्परः परिकल्पितः परलोकानुयायी सुखदुःखभो
क्ता जीवाख्यः पदार्थोस्तीत्येवमाख्यातवंतस्ते । तथाहि । एवं प्रमाणयंति । न पृथिव्यादि
व्यतिरिक्त आत्माऽस्ति तद्ग्राहकप्रमाणाभावात् ॥ प्रमाणं चात्र प्रत्यक्षमेव नानुमानादिकं ।
तत्रेंद्रियेण साक्षादर्थस्य संबंधाभावाद्व्यभिचारसंभवः । सति च व्यभिचारसंभवे सदृशे च
बाधासंभवे तल्लक्षणमेव दूषितं स्यादिति सर्वत्रानाश्वासः । तथाचोक्तं । हस्तस्पर्शादि
वांधेन, विषमे पथि धावता ॥ अनुमानप्रधानेन, विनिपातो न दुर्लभः ॥ १ ॥ अनुमानं
चात्रोपलक्षणमागमादीनामपि । साक्षादर्थसंबंधाभावाद्धस्तस्पर्शनेनैव प्रवृत्तिरिति ।
तस्मात्प्रत्यक्षमेवैकं प्रमाणं । तेन च भूतव्यतिरिक्तस्यात्मनो न ग्रहणं । यत्तु चैतन्यं ते
ष्पूपलभ्यते तद्भूतेष्वेव कायाकारपरिणतेष्वभिव्यज्यते मद्यांगेषु समुदितेषु मदशक्तिवदि
ति । तथा न भूतव्यतिरिक्तं चैतन्यं तत्कार्यत्वाद्घटादिवदिति । तदेवं भूतव्यतिरिक्तस्या
त्मनोऽभावाद्भूतानामेव चैतन्याभिव्यक्तिर्जलस्य बुद्बुदादिव्यक्तिवदिति । केषांचिल्लोकाय

तिकानामाकाशस्यापि नूतत्वेनान्युपगमाद्भूतपंचकोपन्यासो न दोषायेति । ननुच यदि नूतव्यतिरिक्तोऽपरः कश्चिदात्माख्यः पदार्थो न विद्यते कथं तर्हि मृतइति व्यपदेश इत्याशं क्याह् । अथैषां कायाकारपरिणतौ चैतन्याभिव्यक्तौ सत्यां तदूर्ध्वंतेषामन्यतमस्य विनाशे ऽपगमे वायोस्तेजसश्चोनयोर्वा देहिनो देवदत्ताख्यस्य विनाशोऽपगमो नवति ततश्च मृ तइति व्यपदेशः प्रवर्तते न पुनर्जीवापगमइति नूताव्यतिरिक्तचैतन्यवादिपूर्वपक्षइति । अत्र प्रतिसमाधानार्थं निर्युक्तिकृदाह् । "पंचएहं संजोए,अष्मगुणाणंच चेयणाइगुणो । पंचिंदि यगणाणं,णअसमुणियं मुणइ असो ॥३१॥(पंचएहंसंजोएइत्यादि)।पंचानां पृथिव्यादीनां नूतानां संयोगे कायाकारपरिणामे चैतन्यादिकः । आदिशब्दात् नापाचंक्रमणादिकश्च गुणो न नवतीति प्रतिज्ञा । अन्यादयस्त्वत्र हेतुत्वेनोपात्ता. । दृष्टांतस्त्वन्यूह्यः । सुलनत्वात्तस्यनो पादानं । तत्रेदं चार्वाकः प्रष्टव्यः । यदेतन्नूतानां संयोगे चैतन्यमनिव्यज्यते तत्किं तेषां संयो गेपि स्वातंत्र्यएवाऽहोस्वित्परस्परापेक्ष्या पारतंत्र्ये इति । किंचाऽतः ॥ न तावत्स्वातंत्र्ये यत आह् । (अष्मगुणाणंचेति) चैतन्यादन्ये गुणा येषां तान्यन्यगुणानि । तथा ह्याधारकाठिन्य गुणा पृथिवी इव्यगुणा आपः पक्तृगुणं तेजः । चलनगुणो वायुः अवगाहदानगुणमा काशमिति । यदि वा प्रागनिहिता गंधादयः पृथिव्यादीनामेकैकपरिहान्याऽन्येगुणाश्चैत न्यादिति । तदेवं पृथिव्यादीन्यन्यगुणानि । च शब्दो द्वितीयविकल्पवक्तव्यतासूचनार्थः। चैतन्यगुणे साध्ये पृथिव्यादीनामन्यगुणानां सतां चैतन्यगुणस्य पृथिव्यादीनामेकैकस्या प्यनावान्नतत्समुदायाच्चैतन्याख्यो गुणः सिद्ध्यतीति । प्रयोगस्तत्र नूतसमुदायः स्वातंत्र्ये सति धर्मित्वेनोपादीयते न तस्य चैतन्याख्यो गुणोस्तीति । साध्यो धर्मः पृथिव्यादीनामन्यगुणत्वात् । योयोन्यगुणानांसमुदायस्तत्रतत्राऽपूर्वगुणोत्पत्तिर्न नवती ति । यथा सिकतासमुदाये स्निग्धगुणस्य तैलस्य नोत्पत्तिरिति घटपटसमुदाये वा न स्तंनाद्याविर्नावइति । दृश्यते च कार्ये चैतन्यं तदात्मगुणो नविष्यतीति न नूताना मिति । अस्मिन्नेवसाध्ये हेत्वंतरमाह् । (पंचिंदियगणाणंति) । पंच च तानि स्पर्शनर सनघ्राणचक्षुःश्रोत्राख्यानींद्रियाणि तेषां स्थानान्यवकाशास्तेषां चैतन्यगुणानावान्न नूतसमुदाये चैतन्यं । इदमत्र हृदयं । लोकायतिकानां हि अपरस्य इष्टुरनन्युपगमा दिंद्रियाण्येव इष्टृणि । एतेषां च यानि स्थानान्युपादानकारणानि तेषामचिद्रूपत्वान्न नूत समुदाये चैतन्यमिति। इंद्रियाणां चामूनि स्थानानि। तद्यथा। श्रोत्रेंद्रियस्याकाशं सुपिरात्म कत्वात् । घ्राणेंद्रियस्य पृथिवी तदात्मकत्वात् । चक्षुरिंद्रियस्य तेजस्तद्रूपत्वात् । एवं र सनेंद्रियस्यापः । स्पर्शनेंद्रियस्य वायुरिति । प्रयोगश्चात्र नेंद्रियाण्युपलब्धिमंति तेषामचे तनगुणारब्धत्वात् । यद्यदचेतनगुणारब्धं तत्तदचेतनं। यथा घटपटादीनि। एवमपिच नू तसमुदाये चैतन्यानावएव साधितो नवति । पुनर्हेत्वंतरमाह् । ( ण असमुणियंमुण

ऽश्रुणोति )। इहेंद्रियाणि प्रत्येकं भूतात्मकानि तान्येवापरस्य द्रष्टुरभावाद्द्रष्टृणि तेषां च
प्रत्येकं स्वविषयग्रहणादन्यविषये चाप्रऽवृत्तेर्नान्यदिंद्रियज्ञातमन्यदिंद्रियं जानातीत्यतो
मया पंचापि विषया ज्ञाता इत्येवमात्मकः संकलनाप्रत्ययो न प्राप्नोत्यनुभूयते चायं
तस्मादेकेनैव द्रष्टा भवितव्यम्। तस्यैव च चैतन्यं न भूतसमुदायस्येति । प्रयोगः पुनरे
वं भूतसमुदाये चैतन्यं तदारब्धेंद्रियाणां प्रत्येकविषयग्राहित्वे सति संकलनाप्रत्यया
भावात् । यदि पुनरन्यगृहीतमप्यन्यो गृण्हीयाद्देवदत्तगृहीतं यज्ञदत्तेनापि गृह्येत न चैत
द् दृष्टमिष्टं चेति। ननुच स्वातंत्र्यपक्षेऽयं दोषः। यदा पुनः परस्परसापेक्षाणां संयोगपारतं
त्र्याभ्युपगमेन भूतानामेव समुदितानां चैतन्याख्यो धर्मः संयोगवशादाविर्भवति । यथा
किण्वोदकादिषु मद्यांगेषु समुदितेषु प्रत्येकमविद्यमानापि मदशक्तिरिति तदा कुतो
ऽस्य दोषस्यावकाशइति । अत्रोत्तरं । गाथायां चशब्दाक्षिप्तमभिधीयते । यत्तावदुक्तं । य
था भूतेभ्यः परस्परसव्यपेक्षसंयोगभाग्भ्यश्चैतन्यमुत्पद्यते । तत्र विकल्पयामः । किमसौ
संयोगः संयोगिभ्यो भिन्नोऽभिन्नो वा । भिन्नश्चेत्षष्ठभूतप्रसंगो न चान्यत्पंचभूतव्यतिरिक्तसं
योगाख्यभूतग्राहकं भवतां प्रमाणमस्ति। प्रत्यक्षस्यैवैकस्याभ्युपगमात्तेन च तस्याग्रहणात्
प्रमाणांतराभ्युपगमे च तेनैव जीवस्यापि ग्रहणमस्तु । तथा ऽभिन्नो भूतेभ्यो भूतानामेव
संयोगस्तत्राप्येतच्चिंतनीयं किंभूतानि प्रत्येकं चेतनावंत्यचेतनावंति वा । यदि चेत
नावंति तदा एकेंद्रियसिद्धिस्तदा समुदायस्य पंचप्रकारचैतन्यापत्तिः । अथाचेतनानि त
त्रोक्तो दोषो नहि। यद्यत्र प्रत्येकमविद्यमानं तत्समुदाये भवदुपलभ्यते सिकतासु तैलवदि
त्यादिना । यदप्यत्र पूर्वोक्तं तथा मद्यांगेष्वविद्यमानाऽपि प्रत्येकं मदशक्तिः समुदाये
प्रादुर्भवतीति । तदप्ययुक्तं । यतस्तत्र किण्वादिषु याच यावती शक्तिरुपलभ्यते । तथा
हि ॥ किण्वे बुभुक्षापनयनसामर्थ्यं भ्रमिजननसामर्थ्यं चोदकस्य तृडपनयनसामर्थ्यमित्या
दिनेति भूतानां प्रत्येकं चैतन्याऽनभ्युपगमे दृष्टांतदार्ष्टांतिकयोरसाम्यं । किंच भूते चैत
न्याभ्युपगमे मरणाभावो मृतकायेपि पृथ्व्यादीनां भूतानां सद्भावात्। नैतदस्ति। तत्र मृतका
ये वायोस्तेजसो वाऽभावान्मरणसद्भाव इत्यशिक्षितस्योल्लापः । तथाहि । मृतकाये शो
फोपलब्धेर्न वायोरभावः कायस्य च पक्तिस्वभावस्य दर्शनान्नाग्नेरिति । अथसूक्ष्मःकश्चि
द्वायुविशेषोग्निर्वा ततोपगतइति मतिरित्येवं च जीव एव नामांतरेणाभ्युपगतो भवति ।
यत्किंचिदेतत् । तथा न भूतसमुदायमात्रेण चैतन्याविर्भावः । पृथिव्यादिष्वेकत्र व्यव
स्थापिते चैतन्यानुपलब्धेः । अथकायाकारपरिणतौ सत्यां तदाभिव्यक्तिरिष्यते।तदपि न ।
यतो लेप्यमयप्रतिमायां समस्तभूतसद्भावेऽपि जडत्वमेवोपलभ्यते । तदेवमन्वयव्यतिरेका
भ्यामालोच्यमानो नायंचैतन्याख्यो गुणो भूतानां भवितुमर्हति । समुपलभ्यते चायं श
रीरेषु। तस्मात् पारिशेषात् जीवस्यैवायमिति स्वदर्शनपक्षपातं विहायांगीक्रियतामिति ।

यच्चोक्तं प्राक् न पृथिव्यादिव्यतिरिक्त आत्माऽस्ति तद्ग्राहकप्रमाणाभावात् । प्रमाणं चा. त्र प्रत्यक्षमेवैकमित्यादि तत्र प्रतिविधीयते । यत्तावदुक्तं प्रत्यक्षमेवैकं प्रमाणं नानुमानादि कमित्येतदनुपासितगुरोर्वचः । तथाहि । अर्थाविसंवादकं प्रमाणमित्युच्यते प्रत्यक्षस्य च प्रामाण्यमेव व्यवस्थाप्यते । कश्चित्प्रत्यक्षव्यक्तीर्धर्मित्वेनोपादाय प्रमाणयति । प्रमाण मेता अर्थाऽविसंवादकत्वादनुभूतप्रत्यक्षव्यक्तिवत् । नच ताभिरेव प्रत्यक्षव्यक्तिभिः स्वसंविदिताभिः परंव्यवहारयितुमयमीशस्तासां स्वसन्निविष्टत्वान्मूकत्वाच्च । प्रत्यक्ष स्य नानुमानं प्रमाणमित्यनुमानेनैवानुमाननिरासं कुर्वंश्चार्वाकः कथं नोन्मत्तः स्या देवं ह्यसौ तदप्रामाण्यं प्रतिपादयेत् । यथा नानुमानं प्रमाणं विसंवादकत्वादनुभूतानु मानव्यक्तिवदित्येतच्चानुमानमथपरप्रसिध्यैतदुच्यते । तदप्ययुक्तं । यतस्तत्परप्रसिद्धम नुमानं भवतः प्रमाणमप्रमाणं वा । प्रमाणं चेत्कथमनुमानमप्रमाणमित्युच्यते । अथाप्र माणं कथमप्रमाणेन सता तेन परः प्रत्याय्यते । परेण तस्य प्रामाण्येनाभ्युपगतत्वादिति चेत्तदप्यसांप्रतं । यदिनाम परो मौढ्यादप्रमाणमेव प्रमाणमित्यवध्यस्यति । किं भवताऽ तिनिपुणेनापि तेनैवाऽसौ प्रतिपाद्यते । यो ह्यन्यो गुडमेव विषमपि मन्यते किं तस्य मा रयितुकामेनापि बुद्धिमता गुडएव दीयते । तदेवं प्रत्यक्षानुमानयोः प्रामाण्याप्रामाण्ये व्यवस्थापयतो भवतोऽनिच्छतोपि बलादायातमनुमानस्य प्रामाण्यं । तथा स्वर्गापवर्गदे वतादेः प्रतिषेधं कुर्वन् भवान् केन प्रमाणेन करोति न तावत्प्रत्यक्षेण प्रतिषेधं कर्तुं पार्यते । यतस्तत्प्रत्यक्षं प्रवर्तमानं वा तन्निषेधं विदध्यान्निवर्तमानं वा । न तावत्प्रवर्तमानं तस्या ऽभावविषयत्वविरोधात् । नापि निवर्तमानं । यतस्तच्च नास्ति तेन च प्रतिपत्तिरित्यसं गतं । तथाहि । व्यापकविनिवृत्तौ व्याप्यस्यापि निवृत्तिरिष्यते ॥ न चार्वाकदर्शितप्रत्यक्षे ण समस्तवस्तुव्याप्तिः संभाव्यते । तत्कथं प्रत्यक्षविनिवृत्तौ पदार्थव्यावृत्तिरिति । तदेवं स्व र्गादेः प्रतिषेधं कुर्वता चार्वाकेणाऽवश्यं प्रमाणांतरमभ्युपगते । तथाऽन्याभिप्रायवि ज्ञानाभ्युपगमादत्र स्पष्टमेव प्रमाणांतरमभ्युपगतं । अन्यथा कथं परावबोधाय शा स्त्रप्रणयनमकारि चार्वाकेणेत्यलमतिप्रसंगेन । तदेवं प्रत्यक्षादन्यमपि प्रमाणमस्ति तेनात्मा सेत्स्यति किंपुनस्तदिति चेदुच्यते । अस्त्यात्मा । असाधारणतगुणोपल ब्धेश्चक्षुरिंद्रियवत् । चक्षुरिंद्रियं हि न साक्षादुपलभ्यते । स्पर्शनादींद्रियाऽसाधारणरूप विज्ञानोत्पादनशक्त्या त्वनुमीयते । तथात्मापि पृथिव्याद्यसाधारणगुणोपलब्धेरस्तीत्य नुमीयते । चैतन्यं च तस्यासाधारणगुणइत्येतत्पृथिव्यादिभूतसमुदाये चैतन्यस्य निराकृ तत्वादवसेयं । तथास्त्यात्मा समस्तेंद्रियोपलब्धार्थसंकलनाप्रत्ययसद्भावात् । पंचगवाक्षा न्यनन्योपलब्धार्थसंकलनाविधाय्येकदेवदत्तवत् । तथाऽत्माऽर्थद्रष्टा नेंद्रियाणि । तद्विग मे हि तदुपलब्धार्थस्मरणात् । गवाक्षोपरमेऽपि तद्वारोपलब्धार्थस्मर्तृदेवदत्तवत् । तथार्था

पस्याप्यात्मास्तीत्यवसीयते । तथापि सत्यपि पृथिव्यादिभूतसमुदाये लेप्यकर्मादौ न सु
खदुःखेच्छाद्वेषप्रयत्नादिक्रियाणां सद्भाव इत्यतः सामर्थ्यादवसीयते । अस्ति भूतातिरिक्तः
कश्चित्सुखदुःखेच्छादीनां क्रियाणां समवायिकारणं पदार्थः सचात्मेति । तदेवं प्रत्यक्षानुमा
नादिपूर्विकाऽन्याप्यर्थापत्तिरभ्यूह्या । तस्यास्त्विदं लक्षणं । प्रमाणषट्कविज्ञातो, यत्रार्थो
नान्यथा भवेत् ॥ अदृष्टं कल्पयेदन्यं, सार्थापत्तिरुदाहृता ॥ १ ॥ तथाऽगमादप्यस्तित्वमवसे
यं । सचायमागमः । अत्थिमेआया उववाइए इत्यादि । यदि वा किमत्राऽपरप्रमाणचिंतया
सकलप्रमाणज्येष्ठेन प्रत्यक्षेणैवात्मास्तीत्यवसीयते । तद्गुणस्य ज्ञानस्य प्रत्यक्षत्वात् । ज्ञान
गुणस्य च गुणिनोऽनन्यत्वात् । प्रत्यक्षएवात्मा रूपादिगुणप्रत्यक्षत्वेन पटादिप्रत्यक्षवत् ।
तथा ह्यहं सुख्यहं दुःख्येवमाद्यहंप्रत्ययग्राह्योऽस्त्यात्माप्रत्यक्षः । अहंप्रत्ययस्य स्वसंविद्रूपत्वा
दिति । ममेदं शरीरं पुराणं कर्मेति च शरीराद्भेदेन निर्दिश्यमानत्वादित्यादीन्यन्यान्यपि
प्रमाणानि जीवसिद्धावभ्यूह्यानीति ॥ तथा यदुक्तं । न भूतव्यतिरिक्तं चैतन्यं तत्कार्यत्वा
त् घटादिवदित्येतदप्यसमीचीनं । हेतोरसिद्धत्वात् । तथाहि । न भूतानां कार्यं चैतन्यं
तेषामतद्गुणत्वात् भूतकार्यचैतन्ये संकलनाप्रत्ययासंभवाच्चेत्यादिनोक्तप्रायमतोऽस्त्यात्मा
भूतव्यतिरिक्तो ज्ञानाधारइत्युक्तं । ननुच किं ज्ञानाधारभूतेनात्मना ज्ञानाद्भिन्नेनाश्रितेन
यावता ज्ञानादेव सर्वसंकलनाप्रत्ययादिकं सेत्स्यति किमात्मनांतर्गडुकल्पेनेति । तथाहि ।
ज्ञानस्यैव चिद्रूपत्वाद्भूतैरचेतनैः कायाकारपरिणतैः सह संबंधे सति सुखदुःखेच्छाद्वेषप्रय
त्नक्रियाः प्रादुष्यंति तथा संकलनाप्रत्ययो भवान्तरगमनंचेति । तदेवं व्यवस्थिते किमात्मना
कल्पितेनेत्यत्रोच्यते । नत्वात्मानमेकमाधारभूतमंतरेण संकलनात्र न्याय्या घटते । तथा
हि । प्रत्येकमिंद्रियैः स्वविषयग्रहणे सति परविषये चाप्रवृत्तेरेकस्य च परिछेत्तुरभावात् ।
मया पंचापि विषयाः परिछिन्ना इत्यात्मकस्य संकलनाप्रत्ययस्याभावादिति । अथालय
विज्ञानमेकमस्तीति चेदेवं सत्यात्मनएव नामांतरं भवता कृतं स्यात् । नच ज्ञानाख्यो
गुणो गुणिनमंतरेण भवतीत्यवश्यमात्मना गुणिना भाव्यमिति । सच न सर्वव्यापी
तद्गुणस्य सर्वत्रानुपलभ्यमानत्वात् घटवत् । नापि श्यामाकतंडुलमात्रोंगुष्ठपर्वमात्रो वा ।
तावन्मात्रस्योपात्तशरीराव्यापित्वात् त्वक्पर्यंतशरीरव्यापित्वात् त्वचोपलभ्यमानगुणत्वा
त् । तस्मात्स्थितमिदमुपात्तशरीरत्वक्पर्यंतव्याप्यात्मेति । तस्य चानादिकर्मसंबद्धस्य क
दाचिदपि सांसारिकस्यात्मनः स्वरूपेऽनवस्थानात् सत्यप्यमूर्तत्वे मूर्तेन कर्मणा संबंधो न
विरुध्यते । कर्मसंबंधाच्च सूक्ष्मबादरैकेंद्रियद्वित्रिचतुःपंचेंद्रियपर्याप्तापर्याप्तसाद्यवस्था बहु
विधाः प्रादुर्भवंति । तस्य चैकांतेन क्षणिकत्वे ध्यानाध्ययनश्रमप्रत्यभिज्ञानाद्यभावः । ए
कांतनित्यत्वे च नारकतिर्यङ्मनुष्यामरगतिपरिणामाभावः स्यात्तस्मात्स्यादनित्यः स्या
न्नित्यश्चात्मेत्यलमतिप्रसंगेन ॥ ८ ॥

जहा य पुढवीथूने, एगे नाणाहि दीसइ ॥ एवं नो कसिणे लोए
विन्नू नाणाहि दीसइ ॥ ए ॥ एवमेगेत्ति जप्पंति, मंदा आरंनणि
स्सिआ ॥ एगे किच्चा सयं पावं, तिव्वं डुक्कं नियछइ ॥ १० ॥

अर्थ–एम पंचनूतियागता एटले पंच नूतिक वादिनो मत कह्युं. हवे आत्माद्वैत वादिनो मत दृष्टांतेकरी कहिये ढैयें. जहाय के० जेम पुढवीथूनेएगे के० पृथ्वीरूप थून एक ढतां नाणाहिदीसइ के०नदी, समुड्, पर्वत, नगर अने ग्राम इत्यादि रूप नाना प्रकारे देखायढे. परंतु विचाले पृथ्वीनुं अंतर कांइ देखातुं नथी एटले पृथ्वी एकज ढे. एवंके० ए उक्त न्याये, नो ए वचन परने बोलाववाने अर्थेढे. एटले अहो ? दर्शनीउ तेम कसिणे लोएके० ए समस्त लोक चराचर स्वरूप एकज ढे एटले आत्मारूप ढे, परंतु विन्नू के० विद्वान् ते चराचररूप आत्मा. नाणाइ दीसइ के० नानाप्रकारे द्विपद चतुष्पद बहुप दादिरूप देखाय ढे. परंतु जे एम कहे के, शरीर शरीरने विषे आत्मा जुदो जुदो ढे ते मिथ्या ढे. यडुक्तं । एकएवहि नूतात्मा, नूते नूते व्यवस्थितः ॥ एकधा बहुधा चैव, दृश्यते जलचंड्वत् ॥ १ ॥ इत्यादि ॥ ए ॥ हवे जैन एनें उत्तर आपेढे. एवं के० ए पूर्वोक्त न्याये एगेत्ति के० एक एटले कोइ एक परवादी, पोताना ढंदने बलात्कारे एम जप्पंति के०बोले ढे. ते केवाढे, तोके मंदा के०मंद ढे. एटले सम्यक् ज्ञान विकल ढे; केमके, जो सर्वत्र आत्मा एकज ढे, बीजो नथी तो जगत्मांहे एगेके० एकेक जीव करसणी प्रमुख आरंनणिस्सिआ के० जीवहिंसात्मक आरंनने विषे निस्सिया एटले आसक्त थका सयंके० पोते पावं के० पापने किच्चा के० करीने तिव्वंडुक्कं के० तीव्र डुःखने नियछइ के० पामेढे. पण अनेरा नथी पामता, तथा जे जीव जगत्मां कांइ असमंजस चौरादिक कर्म करे ढे, ते ढेदनन्नेदनादिक अनेक विटंबनाउ पामेढे. अने जे नलां समाचरेढे ते साता पामेढे. माटे जो सर्वजीवनो आत्मा एकज होय तो सर्व जीवने विटंबना अथवा साता केम न थवी जोइये ? माटे ए तमारुं वचन मिथ्या ढे; केमके सर्वे जीव पोतपोतानी करणीए सुख डुःखने पामेढे ॥ १० ॥ ए सव्वगतवादिगता एटले सर्वगत वादीनुं मत कह्युं.

---

॥ दीपिका– अथ एकात्माऽद्वैतवादमुद्दिश्याह । ( जधायेति ) यथा च शब्दोऽपिशब्दार्थे । सच निन्नः । पृथिव्याःस्तूपः पृथिव्येव वा स्तूपः पृथिवीसंघाताख्योऽवयवी । सच एकोपि यथा नानारूपः सरित्समुड्पर्वतनगरग्रामाद्याधारतया विचित्रो दृश्यते । निम्नोन्नतमृडुकठिनरक्तपीतादिनेदेन वा दृश्यते । नच तावता पृथिवीत्वस्यैकस्य नेदो नवति। एवं नोइति परामंत्रणं । कृत्स्नोपि चेतनाचेतनरूपो लोक एको विद्वानेक एवात्मा विद्वान् ज्ञानपिंडः पृथिव्यादिनूताकारतया नाना दृश्यते।नच तावता तस्यैकस्यात्मतत्त्वस्य नेदो

भवति ॥ए॥ अस्योत्तरमाह । ( एवमिति ) एवमात्माद्वैतवादमाश्रिता एके जल्पंति । मंदा जडाः । मंदत्वं चैतेषां युक्तिविकलजीवाऽद्वैतपक्षाश्रयणात् । तथाहि । यद्येकएवात्मा स्यात्तदा एके कृषीवलादय आरंभे जीवहिंसात्मके निःश्रिता आसक्ताः स्वयंपापं कृत्वा तीव्रं नारकादिडुःखं ( निगछइत्ति ) आर्षत्वाद्बहुवचनार्थे एकवचनं । निश्चयेन गछंति । तएवारंभसक्तानान्ये इत्येतन्न स्यात् । यद्येक एवात्मा स्यात्तदा एकेनाप्यशुभे कर्मणि कृते सर्वेषां डुःखं स्यान्नचैवं दृश्यते । तस्मादेकएवात्मेति न युक्तं ॥ १० ॥

---

॥ टीका ॥ सांप्रतमेकात्माऽद्वैतवादमुद्देशार्थाधिकारप्रदर्शितं पूर्वपक्षयितुमाह । ( जहांपुढवीत्यादि ) दृष्टांतबलेनैवार्थस्वरूपावगतेः पूर्वंदृष्टांतोपन्यासः । यथेत्युपदर्शने । च शब्दोऽपिशब्दार्थे । सचभिन्नक्रमएकेइत्यस्यानंतरं इष्टव्यः । पृथिव्येव स्तूपा पृथिव्या वा स्तूपः पृथिवीसंघातावयवी । सचैकोपि यथा नानारूपः सरित्समुद्रपर्वतनगरसन्निवेशाद्याधारतया विचित्रो दृश्यते निम्नोन्नतमृडुकठिनरक्तपीतादिभेदेन वा दृश्यते । नच तस्य पृथिवीतत्त्वस्यैतावताभेदेन भेदो भवत्येवमुक्तरीत्या । भोइत्यादिपरामंत्रणं । कृत्स्नोपि लोकश्चेतनाचेतनरूप एकोविद्वान् वर्तते । इदमत्र हृदयं । एकएव ह्यात्मा विद्वान् ज्ञानपिंडः पृथिव्याद्याकारतया नाना दृश्यते नच तस्यात्मनएतावताऽत्मतत्त्वभेदो भवति । तथा चोक्तं । एकएव हि भूतात्मा, भूते भूते व्यवस्थितः ॥ एकधा बहुधा चैव, दृश्यते जलचंद्रवत् ॥ १ ॥ तथा पुरुषएवेदं सर्वं यद्भूतं यच्च भव्यं ॥ उतामृतत्वस्येशानो यदन्नेनातिरोहति, यदेजति यन्नेजति यद्दूरे यदंतरस्य सर्वस्य यत्सर्वस्यास्य वाह्यत इत्यात्माद्वैतवादः ॥ए॥ अस्योत्तरदानायाह । ( एवमेगे इत्यादि ) एवमित्यनंतरोक्तात्माद्वैतवादोपदर्शनं । एके केचन पुरुषकारणवादिनो जल्पंति प्रतिपादयंति । किंभूतास्ते इत्याह । मंदा जडाः सम्यक्परिज्ञानविकलाः ॥ मंदत्वं चैषां युक्तिविकलात्माऽद्वैतपक्षसमाश्रयणात् । तथाहि । यद्येकएवात्मा स्यान्नात्मबहुत्वं ततो ये सत्वाः प्राणिनः कृषीवलादय एके केचन आरंभे प्राण्युपमर्दकारिणि व्यापारे निःश्रिता आसक्ताः संबद्धा अध्युपपन्नास्ते च संरंभसमारंभैः कृत्वोपादाय स्वयमात्मना पापमशुभप्रकृतिरूपमसातोदयफलं तीव्रं डुःखं तदनुभवस्थानं वा नरकादिकं नियछतीति । आर्षत्वाद्बहुवचनार्थे एकवचनमकारि । ततश्चायमर्थो निश्चयेन यछंत्यवश्यतया गछंति प्राप्नुवंति तएवारंभासक्ता नान्यइत्येतन्न स्यादपित्वेकेनापि अशुभे कर्मणि कृते सर्वेषां शुभानुष्ठायिनामपि तीव्रडुःखाभिसंबंधः स्यादेकत्वादात्मनइति । नचैतदेवं दृश्यते । तथाहि । यएव कश्चिदसमंजसकारी सएव लोके तदनुरूपाविडंबनाः समनुभवन्नुपलभ्यते नान्यइति । तथा सर्वगतत्वे आत्मनो बंधमोक्षाद्यभावस्तथा प्रतिपाद्यप्रतिपादकविवेकाभावाच्छास्त्रप्रणयनाभावश्च स्यादिति । एतदर्थसंवादित्वाच्छ्लोकान्येव निर्युक्तिकृताधात्र व्याख्यायते । तद्यथा । पंचानां पृथिव्यादीनां भूतानामेकत्र

कायाकारपरिणतानां चैतन्यमुपलज्यते । यदि पुनरेकएवात्मा व्यापी स्यात्तदा घटादिष्वेव चैतन्योपलब्धिः स्यान्नचैवं । तस्मान्नैकआत्मा नूतानां चान्योन्यगुणत्वं न स्यादेकस्मा दात्मनोनिन्नत्वात् । तथा पंचेंद्रियस्थानानां पंचेंद्रियाश्रितानां ज्ञानानां प्रवृत्तौ सत्याम न्येन ज्ञात्वा विदितमन्यो न जानातीत्येतदपि न स्याद्यद्येकएवात्मा स्यादिति ॥ १० ॥

पत्तेअं कसिणे आया, जे बाला जे अ पंमिआ ॥ संति पिच्चा
न ते संति, नत्थि सत्तोववाइया ॥ ११ ॥ नत्थि पुण्णेच पावेवा,
नत्थि लोए इतो परे ॥ सरीरस्स विणासेणं, विणासो होइ देहिणो ॥१२

अर्थ—हवे तज्जीवतच्छरीरवादिनो मत कहेछे—ते तज्जीवतच्छरीरवादी एम कहेछे के, जेम पंचनूत मली कायाने आकारें परिणामी चेतना उपजावेछे. तो ते कारणे प त्तेअंकसिणेआया के० शरीर शरीर प्रत्ये आत्मा जुदो जुदो छे. जगत्मां जे बालाके० बाल अज्ञानी तथा जेअपंमिआके० जे पंमित एटले विवेकी छे, ते सर्व जुदा जुदा छे. परंतु एक आत्मा सर्वव्यापी न जाणवो. एटले जैनमत अने तेमनो मत एकज थयो. हवे गाथानां उत्तरार्द्धवडे तेमनो नेद देखाडेछे. ते परवादी एम कहेछे के, आत्मा घणा छे, परंतु ज्यांसुधी शरीर छे त्यांसुधी संति के० छे. पण जेवारे शरीर नही, तेवारे आत्मापण नहीं. एटले गत्यंतर गामी आत्माउ नथी. ए प्रकारे करी नेद देखाड्यो. वली तेहिज कहेछे. पिच्चानते संतिके० ते आत्माउ परलोकने विषे न जाय. एतावता शरीरथकी निन्न आपणां कर्मनो नोगवनार एवो आत्मा नथी. तथापि न त्थिसत्तोववाइयाके० सत्व जे प्राणीउ ते उपपातिक नथी. एटले नवांतरमां जई उपजे नहीं अर्थात् गतागति पण नथी. अही शिष्य पूछेछे के, पूर्वे जे नूतवादि कह्या अने ए तज्जीव तच्छरीरवादी ए बेहुने मांहोमांहे शुं विशेषछे? तेवारे गुरु कहेछे के, नूतवा दीने मतें जे पंचमहानूत तेहिज कायाने आकारे परिणमीने धावनवलनादिक क्रिया करे. अने एमने मतें पंचनूत कायाने आकारे परिणमी चैतन्य स्वरूप आत्मा उप जावे. परंतु नूतथकी आत्मा जुदो नथी. एटलुं विशेष छे. ॥ ११ ॥ हवे तेनी वक्त व्यता कहेछे, नत्थिपुण्णेचपावेवा के० तज्जीवतच्छरीरवादी एम कहेछे के, पुण्य नथी, पाप पण नथी, अने नत्थिलोएइतोपरे के० अतः उपरांत लोक पण नथी. जेटलुं दृष्टि गोचर आवेछे तेटलोज लोक छे. वली ग्रंथकार एनुं कारण कहेछे के; सरीरस्सविणासे णंके० शरीरने.विनाशेकरी विणासोहोइ देहिणो के० आत्मानो पण विनाश थाय. ए कार ण माटे आत्माने अनावे पुण्य पाप तथा लोकनी संनावना क्यां थकी थाय? ॥१२॥ "तज्जीवतच्छरीरवादिगता" एटले तज्जीवतच्छरीरवादिनुं ए प्रमाणे मत कह्युं.

॥ दीपिका– सांप्रतं तज्जीवतच्छरीरवादिमतं पूर्वपक्षयन्नाह । (पत्तेअमिति)। प्रत्येकं प्रति शरीरमात्मानः कृत्स्नाः सर्वेपि ये बाला अज्ञा ये च पंडितास्ते सर्वेपि पृथग्व्यवस्थिताः नहि एकएवात्मा सर्वव्यापी स्वीकार्यो बालपंडितविनागाभावप्रसंगात् । नन्वेवमात्मब हुत्वं जैनैरपि स्वीक्रियतएव तत्किमिति परमतमाश्रित्य सूत्रमिदमुच्यतइत्याशंकायामा ह । ( संतित्ति ) । संतिविद्यंते जीवाः शरीरं यावत् । शरीराभावे तु न संति । एतदे वाह । ( पिच्चानतेसंति ) प्रेत्य परलोके ते जीवा न संति । तेषां मते शरीराभिन्नः पर लोकयायी न कश्चिदात्माख्यः पदार्थोस्तीति जैनेभ्यो भेदः किमित्येवं ते मन्यंत इत्या ह । ( नत्थिसत्तोववाइया ) उपपातिका नवाद्भवांतरगामिनः सत्त्वाः प्राणिनो नहि न संति । ननु भूतवादिनोस्य च तज्जीवतच्छरीरवादिनः को भेद इत्यत्रोच्यते । भूतवादिनो भूतान्येव कायाकारपरिणतानि धावनवल्गनादिक्रियां कुर्वंति । अस्य तु कायाकारपरि णतेभ्योभूतेभ्यश्चैतनाख्य आत्मोपपद्यते अभिव्यज्यते वा तेभ्यश्चाभिन्न इत्यनयो र्विशेषः ॥ ११ ॥ तन्मतमेवाह । ( नत्थीति ) । नास्ति पुण्यं पापं च नास्त्यतोऽस्मा ल्लोकात्परोऽन्यो लोकः परलोको यत्र पुण्यपापानुभवइति । अत्र हेतुमाह । शरीरस्य वि नाशेन देहिनो आत्मनोपि विनाशो ऽभावो भवति । तथाच दर्शयते तन्मतलेशः । य था स्वभावादेव जगद्वैचित्र्यं । यडुक्तं । कंटकस्य च तीक्ष्णत्वं, मयूरस्य विचित्रता ॥ वर्णाश्च ताम्रचूडानां, स्वभावेन भवंति हीति ॥ १२ ॥

---

॥ टीका–सांप्रतं तज्जीवतच्छरीरवादिमतं पूर्वपक्षयितुमाह । (पत्तेअमित्यादि)। तज्जीव तच्छरीरवादिनामयमभ्युपगमः । यथा पंचभ्यो भूतेभ्यः कायाकारपरिणतेभ्यश्चैतन्यमुत्पद्यते अभिव्यज्यते वैकैकं शरीरंप्रति प्रत्येकमात्मनः कृत्स्नाः सर्वेप्यात्मान एवमवस्थिताः ॥ ये बालाअज्ञा ये च पंडिताः सदसद्विवेकज्ञास्ते सर्वे पृथग्व्यवस्थिताः । नह्येकएवात्मा सर्वव्यापित्वेनाभ्युपगंतव्यो बालपंडिताद्यविनागप्रसंगात् ।ननु प्रत्येकशरीराश्रयत्वेनात्म बहुत्वमर्हतानामपीष्टमेवेत्याशंक्याह । संति विद्यंते यावच्छरीरं विद्यंते तदभावे तु न विद्यंते। तथाहि । कायाकारपरिणतेषु भूतेषु चैतन्याविर्भावोभवति भूतसमुदायविघटने च चैत न्यापगमो न पुनरन्यत्र गच्छचैतन्यमुपलक्ष्यते ।तदेव दर्शयति । (पिच्चानते संतीति) प्रे त्य परलोके न ते आत्मानः संति विद्यंते । परलोकानुयायी त्वात्मा शरीराभिन्नः स्वकर्मफ लभोक्ता न कश्चिदात्माख्यः पदार्थोस्तीति भावः। किमित्येवमतआह। (नत्थिसत्तोववाइया)। अत्तिशब्दस्तिङंतप्रतिरूपको निपातो बहुवचने द्रष्टव्यस्तदयमर्थः। न संति न विद्यंते॥ तद भावेतु न विद्यंते सत्वाः प्राणिन उपपातेन निर्वृत्ता उपपातिका भवाद्भवांतरगामिनो न भवंतीति तात्पर्यार्थः । तथाहि । तदागमाः विज्ञानघनएवैतेभ्यो भूतेभ्यः समुत्थाय तान्ये

वानुविनश्यतीति नप्रेत्य संज्ञा अस्तीति । ननु प्रागुपन्यस्तभूतवादिनोऽस्य च तज्जीवतच्छरीर वादिनः को विशेष, इत्यत्रोच्यते । भूतवादिनो भूतान्येव कायाकारपरिणतानि धावनवल्ग नादिकां क्रियां कुर्वंत्यस्य तु कायाकारपरिणतेभ्यो भूतेभ्यश्चैतन्याख्य आत्मोत्पद्यते ऽभिव्य ज्यते वा तेभ्यश्चाभिन्नइत्ययं विशेषः ॥ ११ ॥ एवंच धर्मिणोऽभावाद्धर्मस्याप्यभावइति दर्शयि तुमाह । (नछिपुस्सेच पावेवा इत्यादि) । पुण्यमभ्युदयप्राप्तिलक्षणं तद्विपरीतं पापमेतद्भय मपि न विद्यते । आत्मनो धर्मिणोऽभावात् । तदभावाच्च नास्त्यतोऽस्माल्लोकात्परोऽन्यो लोको यत्र पुण्यपापानुभवइति । अत्रार्थेसूत्रकारः कारणमाह । शरीरस्य कायस्य वि नाशेन भूतविघटनेन विनाशेन देहिनआत्मनोप्यभावो भवति यतो न पुन शरीरे विनष्टे तस्मादात्मा परलोकं गत्वा पुण्यं पापं वाऽनुभवतीत्यतोधर्मिणआत्मनोभावात्तद्धर्मयोः पुण्यपापयोरप्यभावइति । अस्मिंश्चार्थे बहवो दृष्टांताः संति । तद्यथा । यथा जलबुद् दो जलातिरेकेण नापरः कश्चिद्विद्यते तथा भूतव्यतिरेकेण नापरः कश्चिदात्मेति । तथाच यथा कदलीस्तंभस्य बहिस्त्वगपनयने क्रियमाणे त्वङ्मात्रमिव सर्वं नांतः कश्चित्सारोस्त्ये वं भूतसमुदाये विघटति सति तावन्मात्रं विहाय नांतःसारभूतः कश्चिदात्माख्यः पदा र्थ उपलभ्यते । यथावाऽलातं भ्राम्यमाणमतद्रूपमपि चक्रबुद्धिमुत्पादयत्येव भूतसमुदायो पि विशिष्टक्रियोपेतो जीवभ्रांतिमुत्पादयतीति । यथा च स्वप्ने बहिर्मुखाकारतया विज्ञा नमनुभूयते आंतरेणैव बाह्यमर्थमेवमात्मानमंतरेण तद्विज्ञानं भूतसमुदाये प्रादुर्भवती ति । तथा । यथाऽदर्शे स्वच्छत्वात्प्रतिबिंबितो बहिःस्थितोप्यर्थोतर्गतो लक्ष्यते नचासौ त था । यथाच ग्रीष्मे भौमेनोष्मणा परिस्पंदमाना मरीचयो जलाकारं विज्ञानमुत्पादयंत्ये वमन्येपि गंधर्वनगरादयः स्वस्वरूपेणाऽतथाभूता अपि तथा प्रतिभासंते तथात्मापि भू तसमुदायाकारपरिणतौ सत्यां पृथगसन्नेव तथा भ्रांतिं समुत्पादयतीत्यमीषां च दृष्टांता नां प्रतिपादकानि केचित्सूत्राणि व्याचक्षते । अस्माभिस्तु सूत्राऽदर्शेषु चिरंतनटीकायां चादृष्टत्वान्नाजिंगितानीति । ननु च यदि भूतव्यतिरिक्तः कश्चिदात्मा न विद्यते तत्कृते च पुण्यापुण्ये न तत्कथमेतद्वैचित्र्यं घटते । तद्यथा कश्चिदीश्वरोऽपरो दरिद्रोन्यः सुभगो परोऽदुर्भगः सुखीदु खी सुरूपो मंदरूपो व्याधितो नीरोगीत्येवं प्रकारा विचित्रता किन्नि बंधनेत्यत्रोच्यते । स्वभावात् । तथाहि । कुत्रचिच्छिलाशकले प्रतिमारूपं विद्यते तच्च कुं कुमागरुचंदनादिविलेपनानुभोगमनुभवति धूपाद्यामोदं च । अन्यस्मिंस्तु पाषाणखंडे पाद क्षालनादि क्रियते नच तयोः पाषाणखंडयोः शुभाशुभे स्तः । यदुदयात्स तादृगवस्था विशेष इत्येवं स्वभावाज्जगद्वैचित्र्यं । तथाचोक्तं । कंटकस्य च तीक्ष्णत्वं मयूरस्य विचि त्रता ॥ वर्णाश्च ताम्रचूडानां,स्वभावेन भवति हीति॥ १॥तद्यावत्तच्छरीरवादिमतं गतं ॥१२॥

कुव्वं च कारयं चेव, सव्वं कुव्वं न विज्जई ॥ एवं अकारउ अप्पा; एवं ते उ पगप्भिआ ॥ १३ ॥ जे ते उवाइणो एवं, लोए तेसिं कउसिया ॥ तमाउ ते तमं जंति, मंदा आरंभनिस्सिया ॥१४॥ आत्मषष्ठवादीगतः ॥

अर्थ-हवे अक्रियावादिनो मत कहेछे. ते अकर्मवादी एम कहेछे के; आत्मा अमूर्त्तछे, नित्यछे, तथा सर्वव्यापी छे. ते कारणे कुव्वंचके० क्रियानो कर्त्ता नथी. तथा कारयंचेवके० अनेरा पासे करावनार पण नथी; एटले आत्मा पोते क्रियाने विषे न प्रवर्त्ते, तथा अनेराने पण प्रवर्त्तावे नही. पूर्वे चकार आव्योछे ते अतीत अनागतना कर्त्ताने निषेधवाने अर्थे छे. यद्यपि स्थितिक्रिया अने मुद्राप्रतिबिंबोदयन्याये भोजनक्रिया पण करे. तथापि समस्त क्रिया कारकपणुं नथी. एहिज भाव देखाडेछे. सव्वंकुव्वंन विज्जई के० सर्व क्रियानें एटले देशथकी देशांतर गमनरूप क्रियाने आत्मा करतो नथी. एवंअकारउ अप्पाके० ए रीते आत्मा अकारक छे. एवंतेउपगप्भिआके० एप्रकारे ते सांख्यवादी धृष्टपणुं करता थका, प्रकृति करे, पुरुष भोगवे, इत्यादिक अयोग्य वचन बोले एटले अक्रियावादिनुं मत कह्यु. ॥१३॥ हवे जेन, एना मतनुं निराकरण करेछे. जेते उवाइणो एवंके० जे, आत्मा शरीरथकी जुदो नथी. तथा आत्मा अकर्त्ता छे एम कहेछे. तेसिंके० तेने लोए कउसियाके० चतुर्गतिक संसाररूप लोक क्यां थकी होय? नि:केवल ते लोकमांहे वाचालपणुं देखाडेछे. एवा छतां तमाउते तमंजंतिके० ते अज्ञानरूप तम एटले अंधकार तेमाहेथकी निकलीने अनेरा तम एटले अंधकारमांहे जंति एटले जायछे, एटले ज्ञानवर्णादिक कर्म उपार्जन करेछे. अथवा तमनेविषे द्विअर्थे नरक पृथ्वी एवो अर्थ थायछे. माटे त्यांपण जायछे. ते नरक पृथ्वीयें केम जाय, तेनुं कारण कहेछे. ते लोक मंदाके० मंद एटले मूर्ख छे, वली आरंभनिस्सियाके० आरंभनिश्रित एटले आरंभ जे प्राणघात तेनां व्यापारे निश्रितछे, एकांते तेमां आसक्तछे, जे कारण माटे तेमना मते आत्मानो अभावछे, ते कारणे पुण्य पाप पण नथी. एवुं जाणीने ते नास्तिकवादी आरंभ करता थका शंका पामता नथी तथा जे एवुं कहेछे के आत्मा क्रिया करे नहीं, तेपण एमनी पेरेज आरंभी जाणवा ॥ १४ ॥ अक्रियावाइगता एटले सांख्यनुं मत ए प्रमाणे कह्युं.

॥दीपिका-अथाऽक्रियावादिमतमाह।(कुर्वन्निति) कुर्वन् कारयंश्चाऽऽत्मा न भवति। आत्मनो व्यापकत्वादमूर्तत्वाच्च कर्तृत्वानुपपत्तिः।तत एव कारयितृत्वमप्यात्मनो न युक्तं।एकश्चब्दोऽतीतानागतकर्तृत्वनिषेधको द्वितीयः समुच्चयार्थः. ॥ कर्तृत्वकारयितृत्वनिषेधादन्यापि क्रिया तस्य नास्तीत्याह । ( सव्वंति ) । सर्वा परिस्पंदादिकां देशाद्देशांतरप्राप्तिरूपां क्रियां

कुर्वन्नात्मा न विद्यते। सर्वव्यापित्वेनामूर्तत्वेन चाकाशस्येवात्मनो निष्क्रियत्वं सांख्यमते। (एवंतेउत्ति) एवमुक्तप्रकारेण ते सांख्याः प्रगल्भिताः प्रागल्भ्यवंतो धार्ष्टर्यवंतो विद्यंते॥१३॥ सांप्रतं तज्जीवतच्छरीराकारकवादिनोमतं निराकुर्वन्नाह। (जेतेइति)। ये तावच्छरीराऽव्यतिरिक्तात्मवादिन एवं पूर्वोक्तयुक्त्या भूताऽव्यतिरिक्तमात्मानमभ्युपगतवंतस्ते निराक्रियंते। तेषां लोकश्चतुर्गतिभवरूपः सुभग, दुर्भग, सुरूप, कुरूपेश्वर, दारिद्र्या,दिमय जगद्वैचित्र्यरूपः कुतः स्यात्। आत्माऽनंगीकारे पुण्यपापाभावे कथं विश्ववैचित्र्यमित्यर्थः। तेच नास्तिकास्तमसोऽज्ञानरूपात् तमो यांति। ज्ञानावरणावृताः पुनर्ज्ञानावरणरूपं तमः प्रविशंति। अथवा सद्विवेकप्रध्वंसित्वात्तमोदुःखं तस्मात्तमो महादुःखं यांति। यतस्ते मंदा जडाः परलोकनिरपेक्षत्वाच्चाऽरंभनिश्रिताः। अयमेवश्लोकोऽकारकवादिम तमाश्रित्य किंचिद्विव्रियते। येवादिनोऽकारकाः सांख्याः संति तेषां लोको जरामरण शोकहर्षादिरूपो नारकतिर्यगादिरूपो निष्क्रिये सत्यात्मनि कुतः कस्माद्धेतोः स्या त्र स्यादित्यर्थः। ततश्चदृष्टेष्टबाधारूपात्तमसोऽज्ञानात्ते तमो वेदनास्थानं यांति। यतो मं दाआरंभनिश्रिताश्चेति सांख्यमतं निरस्तं ॥ १४ ॥

॥टीका—इदानीमकर्मकवादिमताभिधित्सयाऽह। (कुव्वंचेत्यादि) कुर्वन्निति स्वतंत्रः कर्ताभि धीयते॥ आत्मनश्चामूर्तत्वात्सर्वव्यापित्वाच्च कर्तृत्वाऽनुपपत्तिः॥ अतएवहेतोः कारयितृत्वम प्यात्मनोनुपपन्नमिति। पूर्वश्चशब्दोऽतीतानागतकर्तृत्वनिषेधको द्वितीयः समुच्चयार्थः। त तश्चात्मा न स्वयं क्रियायां प्रवर्तते नाप्यन्यं प्रवर्तयति। यद्यपि च स्थितिक्रियां मुद्राप्र तिबिंबोदयन्यायेन च भुजिक्रियां करोति तथापि समस्तक्रियाकर्तृत्वं तस्य नास्तीत्येतद्द र्शयति। (सव्वंकुव्वंणविज्जइत्ति) सर्वां परिस्पंदादिकां देशाद्देशांतरप्राप्तिलक्षणां क्रियां कु र्वन्नात्मा न विद्यते। सर्वव्यापित्वेनामूर्तत्वेन चाकाशस्येवात्मनो निष्क्रियत्वमिति। तथा चोक्तं। अकर्ता निर्गुणो भोक्ता, आत्मा सांख्यनिदर्शन इति। एवमनेन प्रकारेणात्माऽका रक इति ते सांख्याः। तुशब्दः पूर्वेभ्यो व्यतिरेकमाह। ते पुनः सांख्या एवं प्रगल्भिताः प्रगल्भवंतो धार्ष्टर्यवंतः संतो भूयोभूयस्तत्र तत्र प्रतिपादयंति। यथा प्रकृतिः करोति पुरु ष उपभुंक्ते यथा बुध्यवसितमर्थं पुरुषश्चेतयते इत्याद्यकारकवादिमतमिति॥ १३ ॥ सां प्रतं तज्जीवतच्छरीराकारकवादिनो मतं निराचिकीर्षुराह। (जेतेउवाइणोइत्यादि) तत्र ये तावच्छरीराव्यतिरिक्तात्मवादिन एवमिति पूर्वोक्तया नीत्या भूतव्यतिरिक्तमात्मानमभ्यु पगतवंतस्ते निराक्रियंते। तत्र यत्तैस्तावदुक्तं। यथा न शरीराद्भिन्नोस्त्यात्मेति तदसंगतं। यतस्तत्प्रसाधकं प्रमाणमस्ति। तच्चेदं। विद्यमानकर्तृकमिदं शरीरमादिमत्प्रतिनियताका रकत्वात्। इह यद्यदादिमत्प्रतिनियताकारं तत्तद्विद्यमानकर्तृकं दृष्टं। यथा घटः। य

श्चाऽविद्यमानकर्तृकं तदादिमत्प्रतिनियताकारमपि न भवति यथाकाशं। आदिमत्प्रतिनियताकारस्य च सकर्तृत्वेन व्याप्तेः। व्यापकनिवृत्तौ व्याप्यस्य विनिवृत्तिरिति सर्वत्र योजनीयं। तथाविद्यमानाधिष्ठातृकानींद्रियाणि। करणत्वात्। यद्यदिह करणं तत्तद्विद्यमानाधिष्ठातृकं दृष्टं। यथा दंडादिकमिति। अधिष्ठातारमंतरेण करणत्वाऽनुपपत्तिः। यथाकाशस्य। हृषीकाणां चाधिष्ठाताऽत्मा सच तेभ्योऽन्य इति। तथा विद्यमानाधिष्ठातृकमिदमिंद्रियविषयकदंबकं। आदानादेयसद्भावात्। इह यत्र यत्राऽदानादेयसद्भावस्तत्र तत्र विद्यमान आदाता ग्राहको दृष्टः। यथा संदंशकायःपिंडयोस्तद्भिन्नोऽयस्कार इति। यश्चात्रेंद्रियैः करणैर्विषयाणामादाता ग्राहकः स तद्भिन्नश्चात्मेति। तथा विद्यमानभोक्तृकमिदं शरीरं भोग्यत्वादोदनादिवत्। अत्रच कुलालादीनां मूर्तत्वाऽनित्यत्वसंहतत्वदर्शनादात्मापि तथैव स्यादिति धर्मविशेषविपरीतसाधनत्वेन विरुद्धा शंका न विधेया। संसारिण आत्मनः कर्मणा सहान्योन्यानुबंधतः कथंचिन्मूर्तत्वाद्यभ्युपगमादिति। तथा यदुक्तं। नास्ति सत्त्वाऔपपातिका इति तदप्ययुक्तं। यतस्तदहर्जातबालकस्य यःस्तनाभिलाषः सोऽभिलाषपूर्वको ऽभिलाषत्वात् कुमाराभिलाषवत्। तथा बालविज्ञानमन्यविज्ञानपूर्वकं विज्ञानत्वात् कुमारविज्ञानवत्। तथाहि। यदहर्जातबालकोपि यावत्सएवायं स्तन इत्येवं नावधारयति तावन्नोपरत रुदितो मुखमर्पयति स्तने इत्यतोऽस्ति बालके विज्ञानलेशः सचाऽन्यविज्ञानपूर्वकः। तथान्यद्विज्ञानं भवांतरविज्ञानं तस्मादस्ति सत्त्व उपपातिक इति। तथा। यदभिहितं विज्ञानघनएवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यतीति। तत्राप्ययमर्थो विज्ञानघनो विज्ञानपिंड आत्मा भूतेभ्य उत्थायेति प्राक्तनकर्मवशात्तथाविधकायाकारपरिणते भूतसमुदाये तद्द्वारेण स्वकर्मफलमनुभूय पुनस्तद्विनाशे आत्मापि तदनु तेनाकारेण विनश्यापरपर्यायांतरेणोत्पद्यते, नपुनस्तैरेव सह विनश्यतीति। तथा यदुक्तं। धर्मिणो ऽभावात्तद्धर्मयोः पुण्यपापयोरभावइति तदप्यसमीचीनं। यतो धर्मी तावदनंतरोक्तिकदंबकेन साधितस्तत्सिद्धौ च तद्धर्मयोः पुण्यपापयोरपि सिद्धिरवसेया जगद्वैचित्र्यदर्शनाच्च। यत्तु स्वभावमाश्रित्योपलशकलं दृष्टांतत्वेनोपन्यस्तं तदपि तद्भोक्तृकर्मवशादेव तथा संवृत्तइति दुर्निवारः पुण्यापुण्यसद्भावइति। येपि बहवः कदलीस्तंभादयो दृष्टांता आत्मनो ऽभावसाधनायोपन्यस्तास्तेप्यभिहितनीत्याऽत्मनोभूतव्यतिरिक्तस्य परलोकयायिनः सारभूतस्य साधितत्वात्केवलं भवतो वाचालतां प्रख्यापयंति इत्यलमतिप्रसंगेन। शेषं सूत्रं विव्रियतेऽधुनेति। तदेवं तेषां भूतव्यतिरिक्तात्मनिन्हववादिनां योयं लोकश्चतुर्गतिकसंसारो भवाद्भवांतरगतिलक्षणः प्राक् प्रसाधितः सुभगदुर्भगसुरूपमंदरूपेश्वरदारिद्र्यादिगत्या जगद्वैचित्र्यलक्षणश्च स एवंभूतो लोकस्तेषां कुतो भवेत्। कयोपपत्त्या घटेत। आत्मनोऽनभ्युपगमान्न किंचिदित्यर्थः। तेच नास्तिकाः परलोकयायिजीवा

ऽनन्युपगमेन पुण्यपापयोश्चान्नावमाश्रित्य यत्किंचनकारिणोऽज्ञानरूपात्तमसः सकाशाद न्यत्तमो यांति । नूयोपि ज्ञानावरणादिरूपं मद्दत्तरं तमः संचिन्वंतीत्युक्तं नवति । यदि वा तमश्वतमो डुःखसमुद्घातेन सदसद्विवेकप्रध्वंसित्वाद्यातनास्थानं तस्मादेवंनूतात्त मसः परतरं तमो यांति । सप्तमनरकपृथिव्यां रौरव, मद्दारौरव, काल, मद्दाकालाप्र तिष्ठानाख्यं नरकावासं यांतीत्यर्थः । किमिति । यतस्ते मंदा जडा मूर्खाः सत्यपि यु क्त्युपपन्ने आत्मन्यसदननिनिवेशात्तदनावमाश्रित्य प्राण्युपमर्दकारिणि विवेकिजननिंदि ते आरंन्ने व्यापारे निश्चयेन नितरां चाश्रिताः संबद्धाः पुण्यपापयोरनाव इत्याश्रित्य परलो कनिरपेक्षयाऽरंननिश्रिताइति । तथा तज्जीवतच्छरीरवादिमतं निर्युक्तिकारोपि निराचिकी र्षुराह् । " पंचएह्मित्यादिगाथा प्राग्वदत्रापि " ॥ ३३ ॥ सांप्रतमकारकवादिमतमाश्रि त्यायमनंतरश्लोको नूयोपि व्याख्यायते । ये एते अकारकवादिन आत्मनोऽमूर्तत्वनि त्यत्वसर्वव्यापित्वेन्यो हेतुन्यो निष्क्रियत्वमेवान्युपपन्नास्तेषां यएषलोको जरामरणशोका क्रंदनहर्षादिलक्षणो नरकतिर्यङ्मनुष्यामरगतिरूपः सोयमेवंनूतो निष्क्रिये सत्यात्मन्य प्रच्युतानुत्पन्नस्थिरैकस्वनावे कुतः कस्माद्धेतोः स्यान्न कथंचित्कुतश्चित्स्यादित्यर्थः । तत श्च दृष्टेष्टबाधारूपात्तमसोऽज्ञानरूपात्ते तमोंतरं निकृष्टं यातनास्थानं यांति । किमिति । यतो मंदाजडाः प्राण्यपकारकाऽरंननिश्रिताश्च ते इति । अधुना निर्युक्तिकारोऽकारकवादि मतनिराकरणार्थमाह् । " कोवेएई य कयं, कयनासो पंचहा गई न ढि ॥ देवमणुस्सग यागइ, जाईसरणा इयाणं च " ॥ ३४ ॥ ( कोवेएइत्यादि ) । आत्मनोऽकर्तृत्वात्कृतं नास्ति ततश्चाकृतं को वेदयते । तथा निष्क्रियत्वे वेदनक्रियाऽपि न घटां प्रांचति । अथा ऽकृतमप्यनुनूयेत तथा सत्यकृतागमकृतनाशापत्तिः स्यात् । ततश्च एककृतपातकेन सर्वे प्राणिगणो डुःखितः स्यात् पुण्येन च सुखी स्यादिति । नचैतद्दृष्टमिष्टं वा । तथाव्यापि त्वान्नित्यत्वाच्चात्मनः पंचधा पंचप्रकारा नारक, तिर्यङ्,मनुष्या,मर, मोक्ष, लक्षणागति र्न नवेत् । ततश्च नवतां सांख्यानां कापायचीवरधारण,शिरस्तुंडमुंडन,दंडधारण, निक्षान्नोजित्व,पंचरात्रोपदेशानुसारयमनियमाद्यनुष्ठानं । तथा । पंचविंशतितत्त्वज्ञो, यत्र तत्राश्रमे रतः ॥ जटी मुंडी शिखी वापि, मुच्यते नात्र संशयइत्यादि सर्वमपार्थकमा प्नोति । तथा देवमनुष्यादिषु गत्याऽगती न स्यातां सर्वव्यापित्वादात्मनः । तथानित्यत्वा च्च विस्मरणान्नावाज्जातिस्मरणादिका च क्रिया नोपपद्यते । तथा । आदिग्रहणात्प्रकृ तिः करोति पुरुषउपनुंक्तइति नुजिक्रिया या समाश्रिता सापि न प्राप्नोति । तस्या अपि क्रियात्वादिति । अथ मुद्राप्रतिबिंबोदयन्यायेन नोगइति चेदेतत्तु निरंतराः सुहृदः प्रत्ये ष्यंति । वाङ्मात्रत्वात् । प्रतिबिंबोदयस्यापि च क्रियाविशेषत्वादेव । तथा नित्ये चावि कारिण्यात्मनि प्रतिबिंबोदयस्याजावायत्किंचिदेतदिति ॥३४॥ ननुच नुजिक्रियामात्रेण प्र

तिविवोदयमात्रेण च यद्यप्यात्मा सक्रियस्तथापि न तावन्मात्रेणास्माभिः सक्रियत्वमिष्यते किं तर्हि समस्तक्रियावत्वे सतीत्येतदाशंक्य निर्युक्तिकृदाह। "णहु अफलत्तो वणि त्ति, कालफलत्तणमिहं अहुमहेऊ॥ णाहुव्वोवढुय,त्तायणगा वित्तणेहेऊ" ॥ ॥ ३५ ॥ ( णहुअफलेत्यादि ) नहु नैवाऽफलत्वं द्रुमाभावे साध्ये हेतुर्भवति। नहि यदैव फलवांस्तदैव द्रुमोऽन्यदात्वद्रुम इति भावः। एवमात्मनोपि सुप्ताद्यवस्थायां यद्यपि कथंचिन्निष्क्रियत्वं तथापि नैतावता त्वसौ निष्क्रियइति व्यपदेशमर्हति। तथा स्तोकफलत्वमपि न वृक्षाभावसाधनायालं। स्वल्पफलोपि हि पनसादिर्वृक्षस्य व्यपदेशभाग्भवति। एवमात्मापि स्वल्पक्रियोपि क्रियावानेव॥ कदाचिदेषा मतिर्भवतो भवेत् स्तोकक्रियो निष्क्रियएव। यथैककार्षापणधनो न धनित्वमास्कंदत्येवमात्मापि स्वल्पक्रियत्वादक्रियइत्येतदप्युपचारः। यतोयं दृष्टांतः प्रतिनियतपुरुषापेक्षया चोपगम्यते समस्तपुरुषापेक्षया वा। तत्र यद्याद्यः पक्षस्तदा सिद्धसाध्यता। यतः सहस्रादिधनवदपेक्षया निर्धनएवासौ। अथ समस्तपुरुषा पेक्षया तदसाधु। यतोन्यान्जरच्चीवरधारिणोपेक्ष्य कार्षापणधनोपि धनवानेव। तथात्मापि यदिविशिष्टसामर्थ्योपेतपुरुषक्रियापेक्षया निष्क्रियोऽभ्युपगम्यते। न काचित्क्षतिः। सामान्यापेक्षया तु क्रियावानेवेत्यलमतिप्रसंगेन। एवमनिश्चिताकालफलत्वाख्यहेतु द्वयमपि न वृक्षाभावसाधकमित्यादि योज्यं। एवमडुग्धत्वस्तोकडुग्धत्वरूपावपि हेतू न गोत्वाभावत्वं साधयतः। उक्तन्यायेनैव दार्ष्टांतिकयोजना कार्येति॥ ३५॥ १४॥

संति पंच महब्भूया, इहमेगेसि आहिया॥ आयछ्छो पुणो आहु,
आया लोगेय सासए॥ १५॥ दुहउ ण विणस्संति, नोय उप्पज्ज
ए असं॥ सवे वि सवहा भावा, नियतीभावमागया॥ १६॥

अर्थ—हवे आत्मषष्टवादिनो मत कहेछे. ते वादी एम कहेछे के, इहमेगेसिआहियाके० आसंसारनेविषे एक आत्मषष्ठवादिना मते एम कह्युं के, संतिपंचमहब्भूयाके० पांच महाभूतछे. वली ते वादी एम कहेछे के, आयछ्छोपुणोआहुके० जेम पंच महाभूत तेम आत्मा छछोछे. वली अनेराने मते आत्मा अने पंच महाभूत अशाश्वताछे. तेम एने मते नथी, ते कहेछे के, आयालोगेयसासएके० आत्मा अने पृथिव्यादिकरूपजे लोक ते एने मते शाश्वता सर्वव्यापिछे. माटे अविनाशि रूपछे. ॥ १५ ॥ वली तेहनुं नित्यपणुं देखाडेछे. ते आत्मषष्ठ पृथिव्यादिक पदार्थ, निःकारण विनाश अथवा सकारण विनाश, ए दुहउके० बन्ने विनासे करी. णविणस्संतिके० विनास पामे नही. पृथ्वी, अप्प, तेज, वाउ, अने आकाश. ए कदापि पोतानुं स्वरूप छांमे नही. ते कारणे शाश्वताछे. तथा कोइए जेनो आकार कर्यो नथी, ते कारणमाटे आत्मा शाश्वत छे. यदुक्तं। नैनं छिंदंति शस्त्राणि,

नैनं दहति पावकः ॥ नचैनं क्लेदयंत्यापो, नशोपयति मारुतः ॥१॥ अछेद्योयमजेद्योय, म विकारी सउच्यते, ॥ नित्यः सर्वगतः स्थाणुरचलो यं सनातनः ॥२॥ इत्यादिवचनात् ॥ तथा नोयउप्पक्रएअसंके० जे असत् एटले अविद्यमान होय ते उपजे नही. केमके अवि द्यमान पदार्थने विषे करनारनो व्यापार स्फुरे नहीं. जो अछती वस्तु उपजे तो आकाश कुसुमगर्दजशृंगादिक पदार्थ पण उपजवानो संजवछे. ए कारणे सर्वविसर्वज्ञावा के० सर्वकालें पण पृथिव्यादिक सर्वे पदार्थो नियतिजावमागया के० नित्यजावे परिणाम पा म्याछे. ॥ १६ ॥ " आत्मषष्ठवादीगतः " एटले आत्म षष्ठवादीनुं मत ए प्रमाणे कह्युं.

---

॥ दीपिका– अथाऽत्मषष्ठवादिमतमाह । (संतित्ति) संति पंच महाजूतानि । इ हाऽस्मिन्संसारे एकेषामात्मषष्ठवादिनां सांख्यानां वैशेषिकाणां चैतदाख्यातं जूतान्या ख्यातानि वा । ते पुनर्वादिन एवमाहुः । यज्जूतानि आत्मषष्ठानि आत्मा षष्ठोयेषांतानि आत्मषष्ठानि । केषांचिद्बौद्धादिनामनित्यानि जूतानि आत्मा च न तथा एषामित्याह (आया) आत्मा लोकश्च पृथिव्यादिरूपः शाश्वतोनित्यः ॥ १५ ॥ शाश्वतत्वमेवाह । (डहउत्ति) ते जूतपदार्था आत्मषष्ठा उजयतो निर्हेतुकसहेतुकविनाशाज्यां न विनश्यं ति । बौद्धादिमते घटादिवस्तु हेतुं विनापि क्षणे क्षणेविनश्यति । वैशेषिकाणां तु लकु टादिहेतुयोगेन घटादीनां विनाशः । तेन द्विविधेनापि विनाशेन लोकात्मनोर्नविनाशइ ति तात्पर्यार्थः । यदिवा द्विरूपाच्चेतनाचेतनस्वजावान्न विनश्यत्यात्मा पृथिव्याद्या लो काश्च चेतनस्वजावान्नविनश्यंतीति न चोत्पद्यते ऽसदविद्यमानं । सर्वेपिजावाः सर्वथा नियतिजावं नित्यत्वमागताः प्राप्ताः ॥ १६ ॥

---

॥ टीका–सांप्रतमात्मषष्ठवादिमतं पूर्वपक्षयितुमाह (संतीत्यादि) संति विद्यंते पंचमहा जूतानि पृथिव्यादीनि इहास्मिन्संसारे एकेषां वेदवादिनां सांख्यानां शैवाधिकारिणां च ए तदाख्यातमाख्यातानि च जूतानि तेच वादिन एवमाहुरेवमाख्यातवंतः । यथा । आत्म षष्ठानि आत्मा षष्ठो येषां तानि आत्मषष्ठानि जूतानि विद्यंतइति । एतानि चात्मषष्ठा नि जूतानि यथा न्येषां वादिनामनित्यानि तथा नामीषामितिदर्शयति । आत्मा लोक श्च पृथिव्यादिरूपः शाश्वतोऽविनाशी । तत्रात्मनः सर्वव्यापित्वादमूर्तत्वाच्चाकाशस्येव शा श्वतत्वं पृथिव्यादीनां च तद्रूपाप्रच्युतेरविनश्वरत्वमिति ॥ १५ ॥ शाश्वतत्वमेव जूयः प्र तिपादयितुमाह । (डहउंणविणस्संतीत्यादि) ते आत्मषष्ठाः पृथिव्यादयः पदार्था उजय तइति निर्हेतुकसहेतुकविनाशद्वयेन न विनश्यंति । यथा बौद्धानां स्वतएव निर्हेतुको विना शः । तथाच ते ऊचुः । जातिरेव हि जावानां, विनाशे हेतुरिष्यते ॥ यो जातश्च न च ध्वस्तो,

नश्येत्पश्चात्स केन च ॥ १ ॥ यथाच वैशेषिकाणां लकुटादिकारणसांनिध्ये विनाशः स हेतुकस्तेनोन्नयरूपेणापि विनाशेन लोकात्मनोर्न विनाशइति तात्पर्यार्थः। यदि वा (डुहृत्ति)। द्विरूपादात्मनः स्वन्नावाच्चेतनाचेतनरूपान्न विनश्यतीति। तथाहि। पृथिव्यप्तेजो वाय्वाकाशानि रूपापरित्यागतया नित्यानि। न कदाचिदनीदृशं जगदिति कृत्वा आत्मापि नित्यएव कृतकत्वादिन्यो हेतुन्यः। तथा चोक्तं। नैनं छिंदंति शस्त्राणि, नैनं दहति पावकः॥ न चैनं क्लेदयंत्यापो न शोषयति मारुतः ॥ १ ॥ अच्छेद्योयमदाह्योयमविकार्योयमुच्यते॥ नित्यः सर्वगतः स्थाणुरचलोयं सनातनः॥२॥ एवं च कृत्वा नासडुत्पद्यते सर्वस्य सर्वत्र सद्भावादसति च कारकव्यापाराजावात् सत्कार्यवादः । यदि वा असडुत्पद्येत खरविषाणादेरप्युत्पत्तिःस्यादिति। तथा चोक्तं। असदकरणाडुपादानग्रहणात्सर्वसंन्नवान्नावात् शक्तस्य शक्यकरणात्कारणन्नावाच्च सत्कार्यं । एवंच कृत्वा मृत्पिंडेपि घटोस्ति । तदर्थिनां मृत्पिंडोपादानात् । यदि वा ऽसडुत्पद्येत ततो यतःकुतश्चिदेव स्यान्नावश्यमेतदर्थिना मृत्पिंडोपादानमेव क्रियते इत्यतः सदेव कारणे कार्यमुत्पद्यतइति । एवं च कृत्वा सर्वेपि नावाः पृथिव्यादय आत्मषष्ठा नियतिनावं नित्यत्वमागता नानावरूपतामनूत्वा च नावरूपतां प्रतिपद्यंते । आविर्नावतिरोनावमात्रत्वाडुत्पत्तिविनाशयोरिति । तथा चानिहितं । नासतो जायते नावो नान्नावो जायते सतइत्यादि । अस्योत्तरं निर्युक्तिकृदाह । "कोवेएइत्यादिश्राक्तन्येव गाथा,, । सर्वपदार्थनित्यत्वान्युपगमे कर्तृत्वपरिणामो न स्यात्ततश्चात्मनोऽकर्तृत्वे कर्मबंधानावस्तदन्नावाच्च को वेदयति न कश्चि त्सुखडुःखादिकमनुनवतीत्यर्थः। एवं च सति कृतनाशः स्यात्। तथा असतश्चोत्पादान्नावे येयं मया आत्मनःपूर्वन्नावपरित्यागेनापरनावोत्पत्तिलक्षणा पंचधा गतिरुच्यते सा न स्यात्। ततश्च मोक्षगतेरनावादीक्षादिक्रियानुष्ठानमनर्थकमापद्यते। तथाऽप्रच्युताऽनुत्पन्नस्थिरैकस्वन्नावत्वेनत्वात्मनो देवमनुष्यगत्यागती तथा विस्मृतेरन्नावात् जातिस्मरणादिकं वा न प्राप्नोति । यच्चोक्तं सदेवोत्पद्यते तदप्यसत् । यतो यदि सर्वथा सदेव कथमुत्पादः। उत्पादश्चेत्तर्हि सर्वदा सदिति। तथा चोक्तं । कर्मगुणव्यपदेशाः प्रागुत्पत्तेर्न संति यत्तस्मात्कार्यमसद्विज्ञेयं क्रियाप्रवृत्तेश्च कर्तृणां। तस्मात्सर्वपदार्थानां कथंचिन्नित्यत्वं सदसत्कार्यवादश्चेत्यवधार्य । तथाचानिहितं । सर्वव्यक्तिषु नियतं, क्षणे क्षणेऽन्यत्वमथ च न विशेषः । सत्यश्चित्यपचित्योराकृतिजातिव्यवस्थानात् इति । तथा । नान्वयः सहि नेदत्वा,न्न नेदोऽन्वयवृत्तितः॥ मृद्भेदद्वयसंसर्ग, वृत्तिजात्यंतरं घटः ॥ १ ॥ १६ ॥

पंच खंधे वयंतेगे, बालाउ खणजोइणो ॥ अणो अणणो णेवाहु,
हेउयं च अहेउयं ॥ १७॥ पुढवी आउ तेऊ य, तहा वाऊय एग
उ ॥ चत्तारि धाउणो रूवं, एवमाहं सु जाणया ॥ १८ ॥

अर्थ—हवे अफलवादिनुं मत कहेछे. एगे के० कोइएक वादी एटले बौद्ध ते पंचखंधेव यंते के० पंचस्कंध बोलेछे, तेना नाम कहेछे. प्रथम विज्ञान ते रसनुं, विज्ञान सुखडुखवेदे ते वेदना, संज्ञा ते धर्मसमुदायने. पृथिव्यादिकते संस्कार, अने धातुरूपादिकते रूप, ए पांच पदार्थ जगतमांछे, पण एथकी अन्य आत्मादिक पदार्थ जगतमांहे कोइ नथी. एम ते बालाउके० बाल एटले अज्ञानी कहेछे. वलीते स्कंध केवा छे, खणजोइणोके० क्षणयोगीछे. एटले एक क्षण मात्र रहे, उपरांत रहे नहीं. एवीरीतना बोलनारा ते क्षणिकवादी जाणवा. हवे अनेरा दर्शनीउथकी एमनो भेद जे छे, ते गाथाना उत्तरार्द्ध वडे देखाडेछे. अस्रोअणस्रो णेवाहुके० ते जेम आत्मषष्ठवादी सांख्यादिक भूत थकी आत्मा अन्य छे, एम कहेछे. तथा जेम चार्वाकमति भूतथकी आत्मा अनेरो नथी. एटले जे भूत तेहिज आत्मा एम कहेछे, तेम बौद्धमति कहेतां नथी. तथा हेउयंच के० हेतु एटले आत्मा कोणे नीपजाव्यो एम पण कहेता नथी. अने अहेउयं के० अहेतुक एटले अनादि अनंत शाश्वत आत्माछे. एम पण बौद्ध कहेता नथी. ॥ १७ ॥ अफलवादीगतः तथा अनेरा बौद्धदर्शनी चतुर्धातुक जगत् कहेछे, ते देखाडेछे. पुढवीके० पृथिवी ते पाषाण पर्वत अने स्थलादिक ए प्रथमधातु, तथा आउके० अप्प ते पाणी ए बीजी धातु, तथा तेज के० अग्नि ए त्रीजी धातु, तथा वायु ए चोथी धातु, जे कारणे ए चारे पदार्थ जगत्रने धरे एटले पोषे ते कारणे एने धातु कहिये. ए केहवाछे? तोके एगउ के० ए चारे एकाकार पणे परिणमे, माटे एकाकारछे. तेथी ए चत्तारिधाउणोरूवं के० चारेधातुरूप जाणवां. एटले ए शरीर चतुर्धारूप छे. ते थकी अनेरो आत्मा एवो पदार्थ कोइ नथी, एवं के० एम ते बौद्ध कहेछे. ते केवा जाणवा? तोके आहंसु के० पोताने लोकमांहे जाणयाके० जाण कहेवरावियें एवुं अभिमान धरेछे. परंतु ए सर्व क्षणिकवादिपणा थकी क्रियाना फलने संबंध मले नहीं तेकारणे एने अफलवादि कहियें.

---

॥ दीपिका—अथ बौद्धमतमाह । ( पंचेति ) । एके बौद्धाः पंचस्कंधान् वदंति । रूपस्कंधः १ वेदनास्कंधः २ विज्ञानस्कंधः ३ संज्ञास्कंधः ४ संस्कारस्कंधः ५ । तत्र रूपस्कंधः पृथिवीत्वादयो रूपादयश्च । वेदनास्कंधः सुखा दुःखा अदुःखसुखा च वेदना । विज्ञानस्कंधो रूपविज्ञानं रसविज्ञानमित्यादि । संज्ञास्कंधः संज्ञानिमित्तोद्ग्रहणात्मिकः प्रत्ययः । सविकल्पसंज्ञानमित्यर्थः । संस्कारस्कंधः पुण्यापुण्यादिधर्मसमुदायः ५ नचैतेभ्योन्यः कश्चिदात्माख्यः पदार्थोस्तीति । बाला मूर्खाः । ते स्कंधाः किंभूताः क्षणयोगिनः क्षणेक्षणेविनश्वराइत्यर्थः । पूर्ववादिभ्यो बौद्धव्यतिरेकमाह । ( अणोत्ति ) । यथा सांख्यादयो भूतेभ्योऽन्यमात्मानमंगीकृतवंतः । यथा चार्वाका भूतेभ्योऽनन्यमभिन्नमा

त्मानमिष्टवंतस्तथा बौद्धा नैवाहुर्नोक्तवंतः । तथा हेतुभ्योजातोहेतुकः कायाकारपरिणतभूतनिष्पादितः तथा ऽहेतुकोनित्य इत्येवं तमात्मानं बौद्धा नांगीकृतवंतइति ॥१७॥ तथान्ये चतुर्धातुकं जगद् बौद्धा वदंतीत्याह । (पुढवीति) पृथिवीधातुः । आपोजलं धातुः । तथातेजो वायुश्चेति धातवः । एते चत्वारोपि धातवो यदा (एकउत्ति) एकाकारपरिणतास्तदाकारतयाजीवाख्यां लभंते । एवमाहुर्जानिकाः पंमितंमन्या बौद्धाः । (एवमाहंसुआवरेइति) क्वचित्पाठः । तत्र आवरेत्ति । अपरे बौद्धा इत्यर्थः ॥ १८ ॥

---

॥ टीका—सांप्रतं बौद्धमतं पूर्वपक्षयन्निर्युक्तिकारोपन्यस्तमफलवादाधिकारमाविर्भावयन्नाह । (पंचखंधेवयंतेगेइत्यादि) । एके केचन वादिनो बौद्धाः पंच स्कंधान् वदंति । रूप,वेदना, विज्ञान, संज्ञा, संस्कारा,ख्याः पंचैव स्कंधाविद्यंते नापरः कश्चिदात्माख्यः स्कंधोस्तीत्येवं प्रतिपादयंति । तत्र रूपस्कंधः पृथिवीधात्वादयो रूपादयश्च ॥१॥ सुखा दुःखा अदुःखसुखाचेति वेदनावेदनास्कंधः ॥ २ ॥ रूपविज्ञानं रसविज्ञानमित्यादि विज्ञानं विज्ञानस्कंधः ॥३॥ संज्ञास्कंधः संज्ञानिमित्तोऽवग्रहणात्मकः प्रत्ययः ॥४॥ संस्कारस्कंधः पुण्यापुण्यादिधर्मसमुदाय इति ॥ ५ ॥ नचैतेभ्यो व्यतिरिक्तः कश्चिदात्माख्यः पदार्थोऽध्यक्षेणाऽध्यवसीयते । तदव्यभिचारिलिंगग्रहणाऽभावान्नाप्यनुमानेन । नच प्रत्यक्षानुमानव्यतिरिक्तमर्थाऽविसंवादिप्रमाणांतरमस्तीत्येवं बालाइव बाला यथाऽवस्थितार्थापरिज्ञानात् बौद्धाः प्रतिपादयंति । तथा ते स्कंधाः क्षणयोगिनः । परमनिरुष्टः कालः क्षणः । क्षणेन योगः संबंधः क्षणयोगः स विद्यते येषां ते क्षणयोगिनः । क्षणमात्राऽवस्थायिनइत्यर्थः । तथाच तेऽभिदधति । स्वकारणेभ्यः पदार्थउत्पद्यमानः किं विनश्वरस्वभावउत्पद्यतेऽविनश्वरस्वभावो वा । यद्यविनश्वरस्ततस्तद्व्यापिन्याः क्रमयौगपद्याभ्यामर्थक्रियाया अभावात् पदार्थस्यापि व्याप्यस्याभावः प्रसज्जति । तथाहि । यदेवार्थक्रियाकारि तदेव परमार्थतः सदिति । सच नित्योर्थः क्रियायां प्रवर्तमानः क्रमेण वा प्रवर्तते यौगपद्येन वा । न तावत्क्रमेण । यतो ह्येकस्याऽर्थक्रियायाः काले तस्यापरार्थक्रियाकरणस्वभावो विद्यते वा न वा । यदि विद्यते किमिति क्रमकरणं । सहकार्यपेक्षयेति चेत् । तेन सहकारिणा तस्य कश्चिदतिशयः क्रियते न वा । यदि क्रियते किं पूर्वस्वभावपरित्यागेनापरित्यागेन वा । यदि परित्यागेन ततोऽतादवस्थ्यापत्तेरनित्यत्वं । अथ पूर्वस्वभावापरित्यागेन ततोऽतिशयाभावात्किं सहकार्यपेक्षया । अथाऽकिंचित्करोपि विशिष्टकार्यार्थमपेक्ष्यते । तदप्युक्तं । यतः । अपेक्षेत परं कश्चि,द्यदि कुर्वीत किंचन ॥ यदकिंचित्करं वस्तु, किं केनचिदपेक्ष्यते ॥ १ ॥ अथ तस्यैकार्थक्रियाकारणकाले ऽपरार्थक्रियाकरणस्वभावो न विद्यते । तथाच सति स्पष्टैव नित्यताहानिः । अथासौ नित्यो यौगपद्येनाऽर्थक्रि

यां कुर्यात्तथा सति प्रथमक्षणएवाऽशेषार्थक्रियाणां करणात् द्वितीयक्षणेऽकर्तृत्वमाया तं । तथाच सैवानित्यता । अथ तस्य तत्स्वनावत्वात्तएवार्थक्रिया नूयो नूयो द्विती यादिक्षणेष्वपि कुर्यात्तदसांप्रतं । कृतस्य करणानावादिति । किंच द्वितीयादिक्षणसा ध्या अप्यर्थाः प्रथमक्षणएव प्राप्नुवंति । तस्य तत्स्वनावत्वात् । अतस्तत्स्वनावत्वे च तस्यानित्यत्वापत्तिरिति । तदेवं नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविरहान्न स्वकारणे न्यो नित्यस्योत्पादइति । अथाऽनित्यः स्वनावः समुत्पद्यते । तथाच सति विनाशानावा दायातमस्मडक्तक्रमशेषपदार्थजातस्य क्षणिकत्वं । तथाचोक्तं । जातिरेव हि नावानां, विनाशे हेतुरिष्यते ॥ यो जातश्च नच ध्वस्तो नश्येत्पश्चात्स केन च ॥ १ ॥ ननु च स त्यप्यनित्यत्वे यस्य यदा विनाशहेतुसन्नावस्तस्य तदा विनाशः । तथा च । स्वविनाशका रणापेक्षाणामनित्यानामपि पदार्थानां न क्षणिकत्वमित्येतच्चानुपासितगुरोर्वचः। तथाहि । तेन मुजरादिकेन विनाशहेतुना घटादेः किं क्रियते । किमत्र प्रष्टव्यमनावः क्रियते । अत्र च प्रष्टव्यो देवानांप्रियः । अनाव इति किं पर्युदासप्रतिषेधोयमुत प्रसज्यप्रतिषेधइति । तत्र यदि पर्युदासस्ततोयमर्थो नावादन्यो नावो नावांतरं घटात्पटादिः सोऽनावइति । त त्र नावांतरे यदि मुजरादिव्यापारो न तर्हि तेन किंचिद्घटस्य कृतमिति । अथ प्रसज्यप्र तिषेधस्तदा यथार्थो विनाशहेतुरनावं करोति । किमुक्तं नवति नावं न करोतीति । ततश्च क्रियाप्रतिषेधएव कृतः स्यात् । नच घटादेः पदार्थस्य मुजरादिना करणं । तस्य स्वकारणैरेव कृतत्वात् । अथ नावानावोऽनावस्तं करोतीति तस्य तुच्छस्य नीरूपत्वात् कुतस्तत्र कारणानां व्यापारोऽथ तत्रापि कारणव्यापारो नवेत् खरशृंगादावपि व्याप्रिये रन् कारणानीति । तदेवं विनाशहेतोरकिंचित्करत्वात् स्वहेतुतएवाऽनित्यताक्रोडीकृ तानां पदार्थानामुत्पत्तेर्विनाशहेतोश्चानावात् क्षणिकत्वमवस्थितमिति । तुशब्दः पूर्वेभ्यो ऽस्य व्यतिरेकप्रदर्शकः । तमेव श्लोकपश्चार्धेन दर्शयति । (अस्रोअणस्रोइति)। ते हि बौद्धा यथाऽऽत्मषष्ठवादिनः सांख्यादयो नूतव्यतिरिक्तमात्मानमन्युपगतवंतो यथा चार्वाका नूताऽव्यतिरिक्तं चैतन्याख्यमात्मानमिष्टवंतस्तथा नैवाहुर्नैवोक्तवंतः । तथा हेतुन्योजातो हेतुकः । कायाकारपरिणतनूतनिष्पादितइति यावत् । तथाऽहेतुको ऽनाद्यपर्यवसितत्वान्नित्यइत्येवमात्मानं ते बौद्धा नाऽन्युपगतवंत इति ॥ १७ ॥ तथाऽपरे बौद्धाश्चतुर्धातुकमिदं जगदाहुरित्येतद्दर्शयितुमाह । (पुढवीत्यादि) पृथि वी धातुरापश्च धातुस्तथा तेजो वायुश्चेति धारकत्वात्पोषकत्वाच्च धातुत्वमेषां। (एगन्नत्ति)। यदैते चत्वारोप्येकाकारपरिणतिं बिन्नति कायाकारतया तदा जीवव्यपदेशमश्नुवंतः। तथाचोचुः । चतुर्धातुकमिदं शरीरं न तद्व्यतिरिक्तआत्मास्तीति । (एवमाहंसुअन्नवरेत्ति) अपरे बौद्धविशेषा एवमाहुरनिहितवंतइति । क्वचिज्जाणगा इतिपाठस्तत्राप्ययमर्थो जा

नका ज्ञानिनो वयं किलेत्यभिमानाग्निदग्धाः संत एवमाहुरिति संबंधनीयं । अफलवादित्वं चैतेषां क्रियाक्षणएव कर्तुः सर्वात्मना नष्टत्वात् क्रियाफलेन संबंधाभावादवसेयं । सर्वेएव वा पूर्ववादिनोऽफलवादिनो दृष्टव्याः केश्चिदात्मनोऽनित्यस्याऽविकारिणोऽभ्युपगतत्वात् केश्चित्त्वात्मनएवानभ्युपगमादिति । अत्रोत्तरपदार्थानां प्राक्तन्येव निर्युक्तिगाथा। कोवेएइत्यादि व्याख्यायते । यदि पंचस्कंधव्यतिरिक्तः कश्चिदात्माख्यः पदार्थो न विद्यते तत्तदभावात्सुखदुःखादिकं कोऽनुभवतीत्यादिगाथा प्रागेव व्याख्येयेति । तदेवमात्मनो भावाद्योयं स्वसंविदितः सुखदुःखानुभवः स कस्य भवत्विति चिंत्यतां । ज्ञानस्कंधस्यायमनुभवइति चेन्न । तस्यापि क्षणिकत्वात् । ज्ञानक्षणस्य चातिसूक्ष्मत्वात् सुखदुःखानुभवाभावः । क्रियाफलभवतोश्च क्षणयोरत्यंतासंगतेः कृतनाशाकृताभ्यागमापत्तिरिति ज्ञानसंतान एकोस्तीति । तस्यापि संतानिव्यतिरिक्तस्याऽभावाद्यत्किंचिदेतत् । पूर्वक्षणएव उत्तरक्षणे वासनामाधाय विनंक्ष्यतीति चेत् । तथाचोक्तं । यस्मिन्नेव हि संताने, आहिता कर्मवासना॥ फलं तत्रैव संधत्ते, कार्पासे रक्तता यथा ॥ १ ॥ अत्रापीदं विकल्प्यते । सा वासना किं क्षणेभ्यो व्यतिरिक्ताऽव्यतिरिक्ता वा । यदि व्यतिरिक्ता वासकत्वानुपपत्तिरथाव्यतिरिक्ता क्षणवत् क्षणक्षयित्वं तस्याः । तदेवमात्माभावे सुखदुःखानुभवाभावः स्यादस्ति च सुखदुःखानुभवोऽतोस्त्यात्मेति । अन्यथा पंचविषयानुभवोत्तरकालमिंद्रियज्ञानानां स्वविषयादन्यत्राप्रवृत्तेः संकलनाप्रत्ययो न स्यात् । आलयविज्ञानाद्भविष्यतीति चेदात्मैव तर्हि संज्ञांतरेणाभ्युपगतइति । तथा बौद्धागमोप्यात्मप्रतिपादकोस्ति । सचायं । इतः । एकनवति मे कल्पे, शक्त्या मे पुरुषो हतः ॥ तेन कर्मविपाकेन, पादे विद्धोस्मि भिक्षवः ॥ १ ॥ तथा । कृतानि कर्माण्यतिदारुणानि, तनूभवंत्यात्मनिगर्हणेन ॥ प्रकाशनात्संवरणाच्च तेषा,मत्यंतमूलोद्धरणं वदामीत्येवमादि । तथा यदुक्तं । क्षणिकत्वं साधयता यथा पदार्थः कारणेभ्य उत्पद्यमानो नित्यः समुत्पद्यते ऽनित्यो वेत्यादि । तत्र नित्येऽप्रच्युतानुत्पन्नस्थिरैकस्वभावे कारकाणां व्यापाराभावादतिरिक्ता वाचोयुक्तिरिति नित्यत्वपक्षानुत्पत्तिरेव । यच्च नित्यपक्षे भवताभिहितं नित्यस्य न क्रमेणार्थक्रियाकारित्वं नापि यौगपद्येनेति तत्क्षणिकत्वेपि समानं । यतः क्षणिकोप्यर्थक्रियायां प्रवर्तमानः क्रमेण यौगपद्येन वाऽवश्यं सहकारिकारणसव्यपेक्षएव प्रवर्तते । यतः । सामग्री जनिका नह्येकं किंचिदिति । तेनच सहकारिणा न तस्य कश्चिदतिशयः कर्तुं पार्यते । क्षणस्याविवेकत्वेनाऽनाधेयातिशयत्वात् क्षणानां च परस्परोपकारकोपकार्यत्वानुपपत्तेः सहकारित्वाभावः । सहकार्यनपेक्षायां च प्रतिविशिष्टकार्यानुपपत्तिरिति । तदेवमनित्यएव कारणेभ्यः पदार्थः समुत्पद्यत इति द्वितीयपक्षसमाश्रयणमेव । तत्रापि चैतदालोचनीयं । किं क्षणक्षयित्वेनानित्यत्वमाहोस्वित्परिणामाऽनित्यतयेति । तत्र क्षणक्षयित्वे कारणकार्यत्वाभावा

तु कारणानां व्यापारएवानुपपन्नः कुतः क्षणिकानित्यस्य कारणेन्य उत्पादइति । अथ पूर्वक्षणाडुत्तरक्षणोत्पादे सति कार्यकारणनावो नवतीत्युच्यते तदयुक्तं । यतोसौ पूर्वक्षणो विनष्टो वोत्तरक्षणं जनयेदविनष्टो वा । न तावद्विनष्टस्तस्यासत्वाज्जनकत्वानुपपत्तेः । नाप्यविनष्ट उत्तरक्षणकाले पूर्वक्षणव्यापारसमावेशात्क्षणनंगनंगापत्तेः । पूर्वक्षणो विनश्यंस्तूत्तरक्षणमुत्पादयिष्यति तुलांतयोर्नामोन्नामवदितिचेत् । एवं तर्हि क्षणयोः स्पष्टैवैककालताश्रिता । तथाहि । यासौ विनश्यदवस्था साऽवस्था तु निन्ना । उत्पादावस्थातोप्युत्पित्सोस्ततश्च तयोर्विनाशोत्पादयोर्यौगपद्याभ्युपगमे तद्धर्मिणोरपि पूर्वोत्तरक्षणयोरेककालावस्थायित्वमिति । तद्धर्मतानभ्युपगमे च विनाशोत्पादयोरवस्तुत्वापत्तिरिति । यथोक्तं जातिरेव हि नावानामित्यादि । तत्रेदमनिधीयते । यदि जातिरेवोत्पत्तिरेव नावानां पदार्थानामनावहेतुस्ततोऽनावकारणस्य सन्निहितत्वेन विरोधेनाघ्रातत्वाडुत्पत्त्यनावो ऽथोत्पत्त्युत्तरकालं विनाशो नविष्यतीत्यभ्युपगम्यते । तथा सति उत्पत्तिक्रियाकाले तस्याऽनूतत्वात्पश्चाद्य नवन्नंतरायएव नवति न नूयसा कालेनेति । किमत्र नियामकं विनाशे हेत्वनाव इतिचेत् । यतउक्तं निर्हेतुकत्वाद्विनाशस्य स्वनावानुबंधितेत्येतदप्ययुक्तं । यतो घटादीनां मुजरादिव्यापारानंरमेव विनाशो नवन् लक्ष्यते । ननु चोक्तमेवात्र तेन मुजरादिना घटादेः किं क्रियत इत्यादि । सत्यमुक्तं । इदमयुक्तंतूक्तं तथाह्यनावइति । प्रसज्यपर्युदासविकल्पद्वयेन योयं विकल्पः पक्षद्वयेपि च दोपः प्रदर्शितः सोऽदोष एव । यतः पर्युदासपक्षे कपालाख्यनावांतरकारणे घटस्य च परिणामानित्यतया तद्रूपतापत्तेः कथं मुजरादेर्घटादीन् प्रत्यकिंचित्करत्वं । प्रसज्यप्रतिषेधस्तु नावं न करोतीति प्रतिषेधात्मकोत्र नाश्रीयते । किंतर्हि प्रागनाव,प्रध्वंसानावे,तरेतरा,त्यंतानावानां चतुर्णां मध्ये प्रध्वंसानावएवेहाश्रीयते । तत्र च कारकांतरणां व्यापारोनवत्येव । यतोसौ वस्तुतः पर्यायोऽवस्थाविशेषो न नावमात्रं । तस्य चाऽवस्थाविशेषस्य नावरूपत्वात्पूर्वोपमर्देन च प्रवृत्तत्वाद्यएव कपालादेरुत्पादः सएव घटादेर्विनाशइति विनाशस्य सहेतुकत्वमवस्थितं । अपिच कादाचित्कत्वेन विनाशस्य सहेतुकत्वमवसेयमिति । पदार्थव्यवस्थार्थं चाऽवश्यमनावचातुर्विध्यमाश्रयणीयं । तडुक्तं । कार्यद्रव्यमनादिः स्या,त्प्रागनावस्य निन्हवे ॥ प्रध्वंसस्य च नावस्य, प्रच्यवेऽनंततां व्रजेत् ॥ १ ॥ सर्वात्मकं तदेकं स्यादन्यापोहव्यतिक्रमे इत्यादि । तदेवं क्षणिकस्य विचाराक्षमत्वात्परिणामानित्यपक्षएव ज्यायानिति । एवं च सत्यात्मा परिणामी ज्ञानाधारो नवांतरयायी नूतेन्यः कथंचिदन्यएव शरीरेण सहाऽन्योन्यानुवेधादनन्योपि । तथा सहेतुकोपि नारकतिर्यङ्मनुष्यामरनवोपादानकर्मणा तथा तथा विक्रियमाणत्वात् पर्यायरूपतयेति । तथात्मस्वरूपाप्रच्युतेर्नित्यत्वादहेतुकोपीति ।

आत्मनश्च शरीरव्यतिरिक्तस्य साधितत्वाच्चतुर्भूतुकमात्रं शरीरमेवेदमित्येतदुन्मत्तप्रल पितमपकर्णयितव्यमित्यलं प्रसंगेनेति ॥ १८ ॥

अगारमावसंतावि, अरण्णा वा वि पव्वया ॥ इमं दरिसणमावन्ना सव्वदुक्खा विमुच्चई ॥१ए॥ ते णावि संधिं णच्चा णं, न ते धम्मविऊ जणा ॥ जे ते उ वाइणो एवं,न ते उहंतराहिया ॥२०॥ ते णावि संधिं णच्चा णं, न ते धम्मविऊ जणा ॥ जे ते उ वाइणो एवं,न ते संसारपारगा ॥२१॥ ते णावि संधिं णच्चा णं,न ते धम्मविऊ जणा ॥ जे ते उ वाइणो एवं, न ते गप्नस्स पारगा ॥२२॥ ते णावि संधिं णच्चा णं, न ते धम्म विऊ जणा ॥ जे ते उ वाइणो एवं, न ते जम्मस्स पारगा ॥ २३ ॥ ते णावि संधिं णच्चा णं, न ते धम्मविऊ जणा ॥ जे ते उ वाइणो एवं, न ते दुःक्खस्स पारगा ॥ २४ ॥ ते णावि संधिं णच्चा णं, न ते धम्म विऊ जणा ॥ जे ते उ वाइणो एवं, न ते मारस्स पारगा ॥ २५ ॥

अर्थ—हवे ए पूर्वोक्त दर्शनी पोतपोतानां दर्शननेविषे मुक्तीनुं कारण जे कहेबे ते देखाडे बे. ते उपर कहेलेके ते सर्व दर्शनी अगारं के० घर तेनेविषे आवसंतावि के० निवास करनार एटले गृहस्थ, वा के० अथवा, अरण्णा के० अरण्यवासी तापसादिक अथवा पव्वयाके० प्रव्रजितशाक्यादिक ते एम नावना करेबे के, इमंदरिसणमावन्ना के० अमारा दर्शने आवन्ना एटले आव्या. एटले जे कोई अमे कहिये तेने माने तो, ते सव्वदु क्खाविमुच्चईके०सर्व दुःखथकी मुक्त थाय. एवी रीते पोतपोताना दर्शननेविषे सर्व कोई मुक्ति देखाडेबे ॥१ए॥ हवे ग्रंथकार कहेबे. तेणाविके० ते पंचनूतवादी प्रमुख दर्शनीउ तेने नैव के० नथी. संधिके० छिड् एटले ज्ञानावरणादिक कर्म तेनो विपर्ययनाव ते संधि जाणवी. ते अर्हीं ज्ञानावरणादिक कर्मना विवरण तेने णच्चाणंके० अजाणतायका बापडा दुःखथ की मूकाववाने अर्थे सावधान थयाबे. ते कारणे ते जणाके० जन एटले लोक, नतेध म्मविऊके० क्षांत्यादिक दशप्रकारनो जे यतिधर्म तेना जाण नथी. जेतेचवाइणो एवंके० ते वादी जे नास्तिकमति प्रमुख पूर्वे कह्या, ते असमंजस वचनना बोलनारबे. माटे नतेउहंतराहिया के० ते संसाररूप उंघ एटले प्रवाह, अर्थात् संसारसमुद्रना तारना र ते नथी. एम श्रीतीर्थंकरे तथा गणधरे कह्युंबे. ॥ २० ॥ ते पंचनूतवादी प्रमुख कर्म आववानां स्थानक जाणता नथी; वली ते जनके० लोक क्षांत्यादिक दशविध यतिधर्मने जाणता नथी. एवा ते पूर्वे कह्या जे नास्तिकप्रमुख वादी ते संसारना पा

रगामी नहोय. ए गाथानां पहेलां त्रण पदनो अर्थ प्रथम कह्यो तेप्रमाणेज छे.॥२१॥ जे एम बोले ते गर्जना पारगामी नहीं, एटले अनंता गर्जनां दुःख सहन करे. ॥२२॥ वली जे एम बोले ते जन्मना पारगामी नथी अर्थात् अनंता जन्मनुं दुःख सहन करे. ॥ २३ ॥ तथा जे एम बोले ते दुःखना पारगामि न होय, अनंतो काल चतुर्गति रूप संसारना दुःख सहन करे. ॥ २४ ॥ तथा जे एम बोले ते मरणना पारगामी न समजवा, अर्थात् अनंतिवार मरण पामे. ॥२५॥

---

॥ दीपिका—अथ पूर्वोक्तसर्वदुर्मतीनामफलत्वं स्वदर्शनांगीकारं च दर्शयन्नाह । ( अगारेति ) अगारं गृहमावसंतस्तिष्ठंतो गृहस्था आरण्या वा तापसादयः प्रव्रजिताश्च शाक्यादयः । अपि संभावने । इदं ते संभावयंति । यथा इदमस्मदीयं दर्शनं मतमापन्ना आश्रिताः सर्वदुःखेभ्यो जीवाविमुच्यंतइति ते वदंति ॥ १९ ॥ अथ तेषां निष्फलत्वमाह । तेऽति पड्भिः । ते पंच पंचभूतवाद्याद्याः संधिज्ञानावरणादिकर्मविवररूपं नापि नैव ज्ञात्वा अज्ञात्वेइत्यर्थः । णंवाक्यालंकारे । यथा जीवकर्मणोः संधिर्भिन्नत्वं भवति तथा ज्ञात्वा मोक्षार्थं प्रवृत्ता इत्यर्थः ॥ संधिर्द्विविधः । द्रव्यसंधिः कुड्यादेः । भावसंधिः कर्मविवररूपस्तमुत्तरोत्तरपदार्थपरिज्ञानं वा संधिस्त मज्ञात्वा प्रवृत्ताः । ते किंभूताइत्याह । ( नतेत्ति )। ते जना लोका न सम्यक्धर्मविदः । येतु ते । एवंविधवादिनस्ते । उघो भवौघः संसारस्तत्तरणशीला न आख्याता जिनैः ॥२०॥ अग्रेतनाः पंचश्लोका एवमेव व्याख्येयाः।परं संसार १ गर्भ २ जन्म ३ दुःख ४ मारपारगा न भवंतीति ज्ञेयं ॥२१॥२२॥२३॥२४॥२५॥

---

॥ टीका—सांप्रतं पंचभूतात्माऽद्वैततज्जीवतच्छरीराकारकात्मपष्ठक्षणिकपंचस्कंधवादिनामफलवादित्वं वक्तुकामः सूत्रकारस्तेषां स्वदर्शनफलाभ्युपगमं दर्शयितुमाह । ( अगारेत्यादि ) अगारं गृहं तदावसंतस्तस्मिंस्तिष्ठंतो गृहस्थाइत्यर्थः । आरण्या वा तापसादयः प्रव्रजिताश्च शाक्यादयः । अपि संभावने । इदं ते संविभावयंति । यथेदमस्मदीयं दर्शनमापन्नाआश्रिताः सर्वदुःखेभ्यो विमुच्यंते । आर्पत्वादेकवचनं सूत्रे कृतं । तथाहि । पंचभूततज्जीवतच्छरीरवादिनामयमाशयोयथेदमस्मदीयं दर्शनं ये समाश्रितास्ते गृहस्थाः संतः सर्वेभ्यः शिरस्तुंडमुंडन,दंडाऽजिनजटाकापायचीवरधारण, केशोल्लुंचन, नाग्न्यस्तपश्चरण,कायक्लेशरूपेभ्यो दुःखेभ्यो मुच्यंते । तथा दु । तपांसि यातनाश्चित्राः, संयमो भोगवंचनं ॥ अग्निहोत्रादिकं कर्म, बालक्रीडेव लक्ष्यत इति । सांख्यादयस्तु मोक्षवादिनएवं संभावयंति यथा । येऽस्मदीयं दर्शनमकर्तृत्वात्माऽद्वैतपंचस्कंधादिप्रतिपादकमापन्नाः प्रव्रजितास्ते सर्वेभ्यो जन्मजरामरणगर्भपरंपराऽनेकशारीरमानसातितीव्रतराऽसातोदयरूपे

भ्यो डुःखेभ्यो विमुच्यंते । सकलद्वंद्वविनिर्मोक्षं मोक्षमास्कंदंतीत्युक्तं नवति ॥ १९ ॥ इदानीं तेषामेवाऽफलवादित्वाविष्करणायाह । (तेणावीत्यादि) ते पंचभूतवाद्याद्या नापि नैव संधिं छिद्रं विवरं । सचद्रव्यनावनेदाद्द्वेधा । तत्र द्रव्यसंधिः कुड्यादिर्नावसंधिर्ज्ञानावरणादिकर्मविवररूपस्तमज्ञात्वा ते प्रवृत्ताः । णमिति वाक्यालंकारे । यथा आत्मकर्मणोः संधिर्द्विधा नावलक्षणोनवति । तथा अबुधाइव ते वराका डुःखमोक्षार्थमभ्युद्यताइत्यर्थः । यथा तएवंभूतास्तथा प्रतिपादितं लेशतः प्रतिपादयिष्यतेच । यदि वा संधानं संधिरुत्तरोत्तरपदार्थपरिज्ञानं तदज्ञात्वा प्रवृत्ताइति । यतश्चैवमतस्ते न सम्यक्धर्मपरिच्छेदे कर्तव्ये विद्वांसो निपुणा जनाः पंचभूतास्तित्वादिवादिनो लोकाइति । तथाहि । क्षांत्यादिकोदशविधो धर्मस्तमज्ञात्वैवान्यथा च धर्मं प्रतिपादयंति । यत्फलानावाच्च तेषामफलवादित्वं तडुत्तरग्रंथेनोद्देशकपरिसमाप्त्यवसानेन दर्शयति । ये तेत्विति । तुशब्दश्चशब्दार्थे यश्चास्यानंतरं प्रयुज्यते । येच ते एवमनंतरोक्तप्रकारवादिनो नास्तिकादयोऽघोघोनवौघः संसारस्तत्तरणशीलास्ते न नवंतीति श्लोकार्थः ॥ २० ॥ तथा न ते वादिनः संसार, गर्भ, जन्म, डुःख, मारादि पारगा भवंतीति ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

नाणाविहाइं डुःखाइं, अणुहवंति पुणो पुणो ॥ संसारचक्कवालंमि, मच्चुवाहिजराकुले ॥२६॥ उच्चावयाणि गच्छंता, गप्नमेस्संति णंतसो ॥ नायपुत्ते महावीरे, एवमाह जिणोत्तमे ॥२७॥ इति बेमि पढममज्झयणं पढमो उद्देसो समत्तो ॥ १ ॥ १ ॥

अर्थ—वली ते जे स्थितिने पामे ते कहेछे. नाणाविहाइंडुरकाइं के० नानाविध बहु प्रकारे छेदन नेदन ताडनादिक डुखोनें अणुहवंतिपुणोपुणो के० वली वली अनुनवेछे. परंतु ते डुःख क्यां पामे? तोके संसार चक्कवालंमिके० संसारचक्रवालने विषे पामे. ते संसार केवो डुस्तरछे तो के, मच्चुवाहिजराकुले के० मृत्यु, व्याधि अने जरा तेणे करी आकुलव्याकुल छे. एवा संसारमांहे परिभ्रमण करतां अनंतो काल डुःखी थाय. ॥२६॥ ते दर्शनीउं वली असमंजस थका सूत्रविरोधना बोलनारा उच्चावयाणिगच्छंता के० उंचे नीचे स्थानके परिभ्रमण करतां आगामिक काले गप्नमेसंतिणंतसोके० अनंता गर्भनां डुःख पामसे. एवमाहके० एवुं वचन, नायपुत्तेमाहावीरेके० ज्ञातपुत्र श्रीमहावीरदेव जिणोत्तमेके० जिनोत्तम तेणे कह्युं. तेम अमे पण कहिये छैए ॥२७॥ इतिप्रथमाध्ययनस्य प्रथमोद्देशकः समाप्तः ॥ ए प्रथम उद्देशकमां नूतवादिप्रमुख परवादीना मत कह्या.

॥ दीपिका—ते यत्प्राप्नुवंति तदाह । (नाणेति) । नानाविधान्यनेकप्रकाराणि डुःखानि

अनुनवंति । पुनःपुनः संसारचक्रवाले व्याधिमृत्युजरानिराकुले व्याप्ते ॥ २६ ॥ तेषां दुःखफलमुपसंहारं चाह । ( उच्चेति ) । उच्चावचान्यधमोत्तमानि स्थानानि गच्छंतोत्र मंतोगर्नाजन्मेष्यंति यास्यंत्यनंतशः । ( नायपुत्तेति ) । ज्ञातः सिद्धार्थक्षत्रियस्तस्य पुत्रः श्रीमहावीरो जिन एवमुक्तवान् । इति ब्रवीमीति सुधर्मस्वामी जंबूस्वामिनं प्रत्याहेति ॥ २७ ॥ इति श्रीसूत्रकृते द्वितीयांगे प्रथमाध्ययनेप्रथमोद्देशकव्याख्या संपूर्णा ॥ ॥

---

॥ टीका–यत्पुनस्ते प्राप्नुवंति तद्दर्शयितुमाह ( नाणाविहाईइत्यादि ) नानाविधानि बहुप्रकाराणि दुःखान्यासातोदयलक्षणान्यनुनवंति पुनः पुनः । तथाहि नरकेषु करपत्र दारण,कुंनीपाक,तप्तायःशाल्मलीसमालिंगनादीनि तिर्यक्षु च शीतोष्णादिदमनांकताडनाऽतिसारारोपणक्षुत्तृडादीनि । मनुष्येषु इष्टवियोगाऽनिष्टसंयोगशोकाक्रंदनादीनि देवेषु चाजियोगेर्ष्याकिल्बिषिकत्वच्यवनादीन्यनेकप्रकाराणि दुःखानि ये एवंनूता वादिनस्ते पौनःपुन्येन समनुनवंति। एतच्च श्लोकार्द्धं सर्वेपूत्तरश्लोकार्धेषु योज्यं। शेषं सुगमं यावदुद्देशकसमाप्तिरिति ॥२६॥ नवरमुच्चावचानीति अधमोत्तमानि नानाप्रकाराणि वासस्थानानि गच्छंतीति गच्छंतोत्रमंतोगर्नाजन्मेष्यंति यास्यंत्यनंतशो निर्विछेदमिति ब्रवीमीति सुधर्मस्वामी जंबूस्वामिनं प्रत्याह । ब्रवीम्यहं तीर्थंकराज्ञया न स्वमनीषिकया सचाहं ब्रवीमि येन मया तीर्थंकरसकाशाच्छ्रुतं । एतेनच क्षणिकवादिनिरासो दृष्टव्यः ॥२७॥ इति समयाख्यप्रथमाध्ययने प्रथमोद्देशकः समाप्तः ॥ ॥ ॥ ॥ ॥ ॥ ॥

अथ प्रथमाध्ययनेद्वितीयउद्देशकः प्रारन्यते

आघायं पुण एगेसिं, उववन्ना पुढो जिया ॥ वेदयंति सुहं दुःखं, अडुवा लुप्पंति ठाणउ ॥ १ ॥ न तं सयं कडं दुक्खं, कउ अन्नकडं च णं॥सुहं वा जइ वा दुखं, सेहियं वा असेहियं ॥ २ ॥ सयं कडं न अणेहिं, वेदयंति पुढो जिया ॥ संगइअं तं तहा तेसिं, इहमेगेसि आहिअं ॥३॥

अर्थ–पुणके० वली एगेसिंके० एक नियतवादिने मते, आघायंके० एम कह्युंछे. एटले तेनो जे अनिप्राय छे ते कहेछे. उववणापुढोजियाके० पृथक् पृथक् नारकादिकने नवे जे जीवछे, ते पोतपोताना देहस्थित थका सुहंदुक्खं के० सुखदुःखने वेदयंतिके० वेदेछे. अडुवाके० अथवा ते प्राणीउं सुख दुःख अनुनवता ठाणउके० ते स्थानकथी पोतानुं आयुष्य पूर्णकरीने लुप्पंतिके० स्थानांतरे संक्रमे. एम नियतवादी कहेछे. ॥ १ ॥ वली पण बेगाथाए नियतवादीनां मतनो अनिप्राय कहेछे. जे ते प्राणी सुख दुःख अनुनवेछे, एक स्थानक थकी बीजे स्थानके उपजेछे, नतंसयंकडंदुक्खंके० ते दुःखादिक ते जीवनुं पोतानुं कीधेलुं नथी. तेम कउअन्नकडंचणं के० अनेरा का

ल ईश्वर स्वभावादिकनुं करेलुं क्यांथी होय. जो स्वयंकृत सुख दुःख छे, तो सर्व जीव व्यापारादिक सरिखो व्यापार करतां सर्व सरखाज केम नथी थता. माटे पुरुषाकारे कांइज नथाय, अने जो काल ईश्वरादिकना करेलां सुख दुःख होय तो जगतनी विचित्रता केम थाय? तेमाटे काल ईश्वरादिकनुं करेलुं पण सुख दुःख थतुं नथी एटले जीवने सुहंवाजइवाडुक्खंके० सुख अथवा दुख जे छे ते केवां छे, तोके सेद्धियं वा असेद्धियं के० सैद्धिक अथवा असैद्धिक छे. तेमां स्रग् चंदन वनितादिक तेथकी उपनुं जे सुख तेने सैद्धिक कहिये. अने अंतरंग आनंदरूप जे सुख तेने असैद्धिक कहिये. एवीरीते बे प्रकारे दुःख पण जाणवुं, तेमां एक वध, बंधन, ताडनादिक क्रियाना करवाथीकरी अने बीजुं शूलज्वरादिरूप जाणवुं, एटले एक कारणे निष्पन्न अने बीजुं स्वाभाविक निष्पन्न छे. ॥ २ ॥ ए सुखदुःख जो कोइए कर्यां नथी, तो ए जीव सुखी दुःखी केम थायछे, ते कहेछे. सयंकडंनअण्णेहिंवेदयंति पुढोजियाके०सयं एटले पोतानुं करेलुं अथवा अनेरानुं करेलुं जे सुख दुःख ते जीव वेदतो नथी. किंतु संगइअंतंतहातेसिंके० भवितव्यतानुं करेलुं तेहिज जीवने सुख दुःख उपजेछे. तथाच तन्मतं। प्राप्तव्यो नियतिबलाश्रयेण योऽर्थः, सोवश्यं भवति नृणां शुभोशुभो वा ॥ भूतानां महति कृतेपिहि प्रयत्ने, नाभाव्यं भवति न भाविनोस्ति नाशः ॥ १ ॥ इति वचनात् ॥ ३ ॥ एप्रमाणे नियतवादीना मतनो अभिप्राय दर्शाव्यो.

---

॥ दीपिका—उक्तः प्रथमोद्देशकः । अथ द्वितीयोद्देशकः कथ्यते । तस्यायमर्थसंबंधः । आद्योद्देशके भूतवादादिमतं प्रदर्श्य निराकृतं । इहाप्यवशिष्टं तदेवोपदर्श्य निराक्रियत इत्यनेन संबंधेनागतस्यास्योद्देशकस्य सूत्रं यथा । ( आघायमिति ) । पुनः एकेषां नियतिवादिनामेतदाख्यातं । आख्यातमित्यत्र भावे क्तप्रत्ययःतद्योगेन वा क्लीबइति कर्तरिषष्ठी। ततश्च नियतिवादिभिरिदमाख्यातमित्यर्थः । किं तदित्याह । (उववण्णत्ति) उपपन्ना युक्त्या घटमानाः पृथक् अनेके जीवाः। जीवलत्वे पंचभूततच्छरीरवादिमतं निराकृतं । पृथगित्यनेन आत्माऽद्वैतवादिनिरासश्च । तेऽनेके जीवाः सुखं दुःखं देवनारकादिभवेषु वेदयंत्यनुभवंति अनेनाऽकर्तृवादो निरस्तः (अडुवेत्ति)। अथवा लुप्यंते स्थानात् स्थानांतरं संक्राम्यंते। एतेनोपपातिकत्वमप्युक्तं ॥ १ ॥ नियतिवादमतमेवाह श्लोकद्वयेन । ( नतमिति ) यत्तैः प्राणिभिरनुभूयते सुखं दुःखं स्थानविलोपनं वा न तत्स्वयमात्मना पुरुषकारेण कृतं दुःखं। दुःखस्यचोपलक्षणात्सुखमपि ग्राह्यं । सुखदुःखानुभवः पुरुषकारकृतो न स्यादित्यर्थः। अनेन कालेश्वरस्वभावकर्मादिना च कुतः कृतं । णमित्यलंकारे। कालादिभिरपि न कृतमित्यर्थः । किंतु नियतेरेव निष्पद्यते सर्वमिति । ततः सुखं सैद्धिकं सिद्धौ मोक्षे भवं सै

द्धिकं । यदिवा दुःखमसैद्धिकं सांसारिकं । अथवा सैद्धिकमसैद्धिकं च सुखं यथा । स्रक् चंदनांगनाद्युपभोगक्रियासिद्धौ भवं सैद्धिकं । आंतरं सुखमानंदरूपमसैद्धिकं । तथा सैद्धिकमसैद्धिकं च दुःखं यथा । कशाताडनांकनादिक्रियासिद्धौ भवं सैद्धिकं । ज्वरशिरोर्तिशूलादिरूपमंगोत्थमसैद्धिकं दुःखं । एतद्द्वयमपि सुखं दुःखं च नपुरुषकारकृतं । नचान्यैः कालादिभिः कृतं वेदयंत्यनुभवंति पृथक्जीवाः । कथं तर्हि प्राणिनांसुखं दुःखं च स्यादित्याह् । (संगइअंति) । सम्यक् स्वपरिणामेन गतिर्यस्याः यदा यत्र यत्सुखदुःखानुभवनं सा संगतिर्नियतिस्तस्याभवं सांगतिकं नियतिकृतमित्यर्थः । इहाऽस्मिन्सुखदुःखानुभववादे एकेषां नियतिवादिनामिदमाख्यातं । यदुक्तं तैः । प्राप्तव्योनियतिबलाश्रयेण योर्थः, सोऽवश्यं भवति नृणां शुभोऽशुभो वा ॥ भूतानां महति कृतेपि हि प्रयत्ने, नाभाव्यं भवति न भाविनोस्ति नाश इति ॥ २ ॥

---

॥ टीका–उक्तः प्रथमोद्देशकस्तदनु द्वितीयोऽभिधीयते । तस्य चायमभिसंबंधः । इहाऽनंतरोद्देशके स्वसमयपरसमयप्ररूपणाकृता । इहाप्यध्ययनार्थाधिकारत्वात्सैवाभिधीयते । यदि चानंतरोद्देशके भूतवादादिमतं प्रदर्श्य तन्निराकरणं कृतं । तदिहापि तदवशिष्ट नियतिवाद्यादिमिथ्यादृष्टिमतान्युपदर्श्य निराक्रियंते । अथवा प्रागुद्देशकेऽभ्यधायि यथा बंधनं बुध्येत तच्च त्रोटयेदिति तदेव च बंधनं नियतिवाद्यभिप्रायेण न विद्यतइति प्रदर्श्यते । तदेवमनेन संबंधेनायातस्यास्योद्देशकस्य चत्वार्यनुयोगद्वाराणि व्यावर्ण्य सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयं । तच्चेदं । (आघायमित्यादि) अस्य चाऽनंतरपरंपरसूत्रैः संबंधोवक्तव्यस्तत्राऽनंतरसूत्रसंबंधोयं । इहानंतरसूत्रे इदमभिहितं यथा । पंचभूतस्कंधादिवादिनोमिथ्यात्वोपहताऽतरात्मनोऽसद्ग्राहाभिनिविष्टाः परमार्थाऽवबोधविकलाः संतः संसारचक्रवाले व्याधिमृत्युजराकुले उच्चावचानि स्थानानि गृह्णंतो गर्भमेष्यंत्यन्वेषयंति वाऽनंतशइति । तदिहापि नियत्यज्ञानिज्ञानचतुर्विधकर्मोपचययादिनां तदेव संसारचक्रवालभ्रमणगर्भान्वेषणं प्रतिपाद्यते । परंपरसूत्रसंबंधस्तु (बुज्झेज्जेत्यादि) । तेन च सहायं संबंधस्तत्र बुध्येतेत्येतत् प्रतिपादितमिहापि यदाख्यातं नियतिवादिभिस्तद्बुध्येतेत्येवं मध्यसूत्रैरपि यथासंभवं संबंधो लगनीयइति । तदेवं पूर्वोत्तरसंबंधसंबद्धस्यास्य सूत्रस्याऽधुनार्थः प्रतन्यते । पुनःशब्दः पूर्वादिभ्यो विशेषं दर्शयति । नियतिवादिनां पुनरेकेषामेतदाख्यातं । अत्र चाविवक्षितकर्मकाअपि अकर्मका भवंतीति ख्यातेर्धातोर्भावे निष्ठाप्रत्ययस्तद्योगे कर्तरि षष्ठी । ततश्चायमर्थस्तैर्नियतवादिभिः पुनरिवमाख्यातं तेषामयमाशयइत्यर्थः । तद्यथा । उपपन्नो युक्त्या घटमानकाइत्यनेन च पंचभूततज्जीवतच्छरीरवादिमतमपाकृतं भवति । युक्तिस्तु लेशतः प्राग्दर्शितैव । प्रदर्शयिष्यते

च पृथक्पृथक्नारकादिनवेषु शरीरेषु चैत्यनेनाऽप्यात्माऽद्वैतवादिनिरासोऽवसेयः। के पुनस्ते पृथगुपपन्नास्तदाह।जीवाः प्राणिनः सुखडुःखनोगिनः। अनेन च पंचस्कंधातिरिक्तजीवानावप्रतिपादकबौद्धमताऽपक्षेपः कृतोऽद्रष्टव्यः। तथा ते जीवाः पृथक्पृथक् प्रत्येकदेहे व्यवस्थिताः सुखं डुःखं च वेदयंत्यनुनवंति। न वयं प्रतिप्राणिप्रतीतं सुखडुःखानुनवं निन्हुमहे। अनेन चाऽकर्तृवादिनोनिरस्तानवंति। अकर्तर्यविकारिण्यात्मनि सुखडुःखानुनवानुपपत्तेरिति नावः। तथैतदस्मानिर्नोऽपलप्यते। अडुवेत्यथवा। तेप्राणिनः सुखं डुःखं चानुनवंति विलुप्यंते उद्यिंते स्थायुषः प्रच्याव्यंते स्थानात्स्थानांतरं संक्राम्यंत इत्यर्थः। ततश्चौपपातिकत्वमप्यस्मानिस्तेषां न निषिध्यते इतिश्लोकार्थः॥ १॥ तदेवं पंचनूतास्तित्वादिवादिनिरासं कृत्वा यत्तैर्नियतिवादिनिराश्रीयते तच्लोकद्वयेन दर्शयितुमाह। (नतंसयमित्यादि) यत् तैः प्राणिनिरनुनूयते सुखं डुःखं स्थानविलोपनं वा न तत्स्वयमात्मना पुरुषकारेण कृतं निष्पादितं डुःखमिति। कारणेकार्योपचारात्। डुःखकारणमेवोक्तं। अस्य चोपलक्षणत्वात् सुखाद्यपि ग्राह्यं। ततश्चेदमुक्तं नवति। योयं सुखडुःखानुनवः सपुरुषकारकृतकारणजन्यो न नवतीति। तथा कुतोऽन्येन कालेश्वरस्वनावकर्मादिना च कृतं नवेत्। णमित्यलंकारे। तथाहि। यदि पुरुषकारकृतं सुखाद्यनुनूयेत ततः सेवकवणिक्कर्षकादीनां समाने पुरुषकारे सति फलप्राप्तिवैसदृश्यं फलप्राप्तिश्च न नवेत्। कस्यचित्तु सेवादिव्यापारानावेपि विशिष्टफलावाप्तिर्दृश्यत इत्यतो न पुरुषकारात्किंचिदासाद्यते किं तर्हि नियतेरेवेत्येतच्च द्वितीयश्लोकांतेऽनिधास्यते। नापि कालः कर्ता। तस्यैकरूपत्वाज्जगति फलवैचित्र्यानुपपत्तेः। कारणनेदे हि कार्यनेदोनवति नानेदे। तथा ह्ययमेवहि नेदो नेदहेतुर्वा घटते। यड्डत विरुद्धधर्माध्यासः कारणनेदश्च। तथेश्वरकर्तृकेपि सुखडुःखे ननवतः। यथाऽसावीश्वरो मूर्तोऽमूर्तो वा। यदि मूर्तस्ततः प्राकृतपुरुषस्येव सर्वकर्तृत्वानावः। अथाऽमूर्तस्तथा सत्याकाशस्येव सुतरां निष्क्रियत्वं। अपिच यद्यसौ रागादिमांस्ततोऽस्मदाद्यव्यतिरेकाद्विश्वस्याकर्तैव। अथासौ विगतरागस्ततस्तत्कृतं सुनगडुर्नगेश्वरदरिद्रादिजगद्वैचित्र्यं न घटां प्रांचति ततोनेश्वरः कर्तेति। तथा स्वनावस्यापि सुखडुःखादिकर्तृत्वानुपपत्तिः। यतोऽसौ स्वनावः पुरुषाद्भिन्नोऽनिन्नोवा। यदि निन्नोन पुरुषाश्रिते सुखडुःखे कर्तुमलं तस्माद्भिन्नत्वादिति। नाप्यनिन्नोऽनेदे पुरुषएव स्यात्तस्य चाकर्तृत्वमुक्तमेव। नापि कर्मणः सुखडुःखं प्रति कर्तृत्वं घटते। यतस्तत्कर्म पुरुषाद्भिन्नमनिन्नं वा नवेत्। अनिन्नं चेत्पुरुषमात्रतापत्तिः कर्मणस्तत्र चोक्तो दोषः। अथ निन्नं तत्किं सचेतनमचेतनं वा। यदि सचेतनं एकस्मिन् काये चैतन्यद्वयापत्तिः। अथाचेतनं तथा सति कुतस्तस्य पाषाणखंडस्येवास्वतंत्रस्य सुखडुःखोत्पादनंप्रति कर्तृत्वमित्येतच्चोत्तरत्र व्यासेन प्रतिपादयिष्ये इत्यलं प्रसंगेन। तदेवं सुखं सैद्धिकं सिद्धावपवर्गलक्षणायां

नवं यदि वा डुखं आसातोदयलक्षणमसैद्धिकं सांसारिकं । यदिवोजयमप्येतत्सुखं डुःखं वा स्रक्चंदनांगनाद्युपजोगक्रियासिद्धौजवं तथा कशाताडनांकनादिसिद्धौ जवं सैद्धिकं । तथाऽसैद्धिकं सुखमांतरमानंदरूपमाकस्मिकमनवधारितबाह्यनिमित्तं । एवं डुःखमपि ज्वरशिरोर्तिशूलादिरूपमंगोद्भमसैद्धिकं । तदेतडुजयमपि न स्वयं पुरुषकारेण कृतं नाप्यन्येन केनचित् कालादिना कृतं वेदयंत्यनुजवंति पृथक्जीवाः प्राणिनइति । कथं तर्हि तत्तेषामजूदिति नियतिवादी स्वाजिप्रायमाविष्करोति ( संगइयंति ) सम्यक्स्वपरिणामेन गतिर्यस्य यदा यत्र यत्सुखडुःखानुजवनं सा संगतिर्नियतिस्तस्यां जवं सांगतिकं । यतश्चैवं न पुरुषकारादिकृतं सुखडुःखाद्यतस्तत्तेषां प्राणिनां नियतिकृतं सांगतिकमित्युच्यते । इहास्मिन् सुखडुःखानुजववादे एकेषां वादिनामाख्यातं तेषामयमन्युपगमः । तथाचोक्तं । प्राप्तव्यो नियतिबलाश्रयेण योर्थः, सोऽवश्यं जवति नृणां शुजोऽशुजो वा ॥ जूतानां महति कृतेपि हि प्रयत्ने नाजाव्यं जवति न जाविनोस्ति नाशः ॥ १ ॥ ३ ॥

एवमेयाणि जंपंता, बाला पंमिअमाणिणो ॥ निययानिययं संतं,
अयाणंता अबुद्धिया ॥ ४ ॥ एवमेगे उ पासबा, ते जुऊो विप्पग
ब्भिआ ॥ एवं उवढिआ संता, ण ते डुःखविमोरकया ॥ ५ ॥

अर्थ—हवे ग्रंथकार एने उत्तर आपेछे एवमेयाणिजंपंता के० एवं पूर्वोक्त वचन नियतवादाश्रित बोलतां एवा ते बालाके०बाल अज्ञानी बतां पोताने पंमिअमाणिणोके० पंमित करी मानतां शा माटे मानेछे ते कहेछे के; निययानिययंके० ते अज्ञानी नियतिकृत सुख डुःख अथवा अनियतिकृत पुरुषकारादिकनुं करेलुं एवुं सुख डुःख ते संतं के० एकांते जवितव्यतायेज कखुं एम कहेछे; ते कारणे तेने सुखडुःखादि कारणना अयाणंता अबुद्धियाके० अजाण, बुद्धिरहित कहिए. अने जैनतो नियतिकृतपणे तथा अनियतिकृतपणे ए बंने प्रकारे सुख डुःख मानेछे एटले स्याद्वादी कहिए. ॥ ४ ॥ हवे तेने एवी प्ररूपणानुं विपाक देखाडेछे एवमेगेके० एरीते कोइ एक नियतवादने विषे आश्रित परवादीछे ते केवाछे; तोके पासहाके० पार्श्वस्थ एटले न्यायपक्षथकी बाहेर अथवा पासहा एटले पाशके० कर्मनुं बंधन तेने विषे स्थित जुऊो के० तेवली पुनः विप्पगब्भियाके० विविध प्रगल्भित एटले अत्यंत धिगायका मुक्तिमार्गनेविषे प्रवर्त्ते; वली एवुं कहेछे के अमे एवी क्रिया करता थका मुक्तिपामीशुं परंतु एवंके० ए प्रकारे ते उवढियासंताके० उद्यित एटले पोतानी क्रियानेविषे प्रवर्तता बतां णतेडुःकविमोरकयाके० पोताने डुःखथी मूकावनार न होय एटले मुक्ति पामेनहीं.॥५॥ एटले नियतवादी कह्या.

॥ दीपिका—अस्योत्तरमाह । ( एवमिति ) । एवमेतानि पूर्वोक्तानि वचनानि जल्पंतो

नियतिवादिनोबाला मूर्खाः पंडितमानिनः स्वयमपंडिताअप्यात्मानं पंडितं मन्यमा नाः। किंभूताः नियताऽनियतमजानंतः किंचिन्नियतिकृतमवश्यंभावि नियतमात्मपुरु षकारेश्वरादिकृतं किंचिदनियतमेवं द्विविधं वस्तु अजानंतोनियतिकृतमेवैकांतेनाश्र यंतोऽतएवाबुद्धिकाबुद्धिरहितानवंति । पुरुषकारादयोपि वस्तूत्पादकाः । यतः । न दैवमिति संचिंत्य, त्यजेदुद्यममात्मनः । अनुद्यमेन कस्तैलं तिलेभ्यः प्राप्तुमर्हति ॥ १ ॥ इत्याद्यजानंतोऽतएव निर्बुद्धिकाः ॥ ४ ॥ एतद्वादिनामपायमाह् । ( एवमिति ) । एवमेके नियतिवादिनं पार्श्वस्थाः युक्तिसमूहाद्वहिस्तिष्ठंतीति पार्श्वस्थाः परलोकक्रियापार्श्वस्थावा । अथवा पाशः कर्मबंधनं तत्र स्थिताः । (तेजूओत्ति) । ते भूयो विविधं प्रगल्भिता धा र्ष्ट्योपेतानियतिवादमंगीकृत्यापि एवं पुनरपि सकार्यपरलोकक्रियासु प्रवर्तमानाअतएव धार्ष्ट्योपेतानते दुःखविमोचकाआत्मानं दुःखान्न मोचयंति॥ ५॥ नियतिवादिनोगताः॥

---

॥टीका–एवं श्लोकद्वयेन नियतिवादिमतमुपन्यस्यास्योत्तरदानायाह् । ( एवमेयाणि इत्यादि ) एवमित्यनंतरोक्तस्योपप्रदर्शने । एतानि पूर्वोक्तानि नियतिवादाश्रितानि वचना नि जल्पंतोऽनिदधतो बालाअज्ञाः सदसद्विवेकविकलाअपि संतः पंडितमानिनआत्मा नं पंमितं मंतुं शीलं येषां ते तथा । किमिति तएवमुच्यंतइति तदाह् । यतो ( नियया नि ययंसंतमिति ) । सुखादिकं किंचिन्नियतिकृतमवश्यं भाव्युदयप्रापितं तथाऽनियतमात्म पुरुषकारेश्वरादिप्रापितं सत् नियतिकृतमेवैकांतेनाश्रयंत्यतोऽजानानाः सुखदुःखादिकारण मबुद्धिकाबुद्धिरहितानवंतीति । तथाह्यार्हतानां किंचित्सुखदुःखानि नियतितएव नवं ति । तत्कारणस्य कर्मणः कस्मिंश्चिदवसरेऽवश्यंभाव्युदयसद्भावान्नियतिकृतमित्युच्यते । तथा किंचिदनियतिकृतं च पुरुषकालेश्वरस्वनावकर्मादिकृतं तत्र कथंचित्सुखदुःखादेः पु रुषकारसाध्यत्वमप्याश्रीयते । यतः क्रियातः फलं नवति क्रिया च पुरुषकाराऽयत्ता प्रव र्तते। तथाचोक्तं । न दैवमिति संचिंत्य, त्यजेदुद्यममात्मनः । अनुद्यमेन कस्तैलं तिलेभ्यः प्राप्तुमर्हति ॥१॥ यत्तु समाने पुरुषव्यापारे फलवैचित्र्यं दूषणत्वेनोपन्यस्तं तददूषणमेव । यतस्तत्रापि पुरुषकारवैचित्र्यमपि फलवैचित्र्ये कारणं नवति । समाने वा पुरुषकारे यः फलानावः कस्यचिद्भवति सोऽदृष्टकृतः । तदपि चास्माभिः कारणत्वेनाश्रितमेव । तथा कालोपि कर्ता । यतो वकुलचंपकाशोकपुन्नागसहकारादीनां विशिष्टएव काले पुष्पफला द्युद्भवोन सर्वदेति । यच्चोक्तं । कालस्यैकरूपत्वाज्जगद्वैचित्र्यं न घटतइति तदस्मान् प्रति न दूषणं । यतोऽस्माभिर्न कालएवैकः कर्तृत्वेनाभ्युपगम्यतेऽपितु कर्मापि ततो जग द्वैचित्र्यमित्यदोषः । तथेश्वरोपि कर्ता । आत्मैवहि तत्र तत्रोत्पत्तिद्वारेण सकलजगद्व्या पनादीश्वरः । तस्य सुखदुःखोत्पत्तिकर्तृत्वं सर्ववादिनामविगानेन सिद्धमेव । यच्चात्र मूर्तामू

र्वादिदूषणमुपन्यस्तं तदेवंनूतेश्वरसमाश्रयणे दूरोच्छेदितमेवेति । स्वनावस्यापि कथंचित्कर्तृत्वमेव । तथा ह्यात्मनउपयोगलक्षणत्वमसंख्येयप्रदेशत्वं । पुद्गलानां च मूर्तत्वं धर्माधर्मास्तिकाययोर्गतिस्थित्युपष्टंनकारित्वममूर्तत्वं चेत्येवमादिस्वनावापादितं । यदपि चात्मव्यतिरेकाऽव्यतिरेकरूपं दूषणमुपन्यस्तं तददूषणमेव । यतः स्वनावञ्चात्मनोऽव्यतिरिक्तः । आत्मनोपि च कर्तृत्वमन्युपगतमेव तदपि स्वनावापादितमेवेति । तथा कर्मापि कर्तृ नवत्येव । तद्धि जीवप्रदेशैः सहान्योन्यानुवेधरूपतया व्यवस्थितं कथंचिच्चात्मनोऽनिन्नं तद्वशाच्चात्मा नरकतिर्यङ्मनुष्यामरनवेषु पर्यटन् सुखडुःखादिकमनुनवतीति । तदेवं नियत्यनियत्योः कर्तृत्वे युक्त्युपपन्ने सति नियतेरेव कर्तृत्वमन्युपगच्छंतोनिर्युक्तिकानवंतीत्यवसेयम्॥४॥तदेवं युक्त्या नियतिवादं दूषयित्वा तद्वादिनामपायदर्शनायाह।(एवमेगेउइत्यादि)। एवमितिपूर्वान्युपगमसंसूचकं । सर्वस्मिन्नपि वस्तुनि नियतानियते सत्येके नियतमेवाऽवश्यंनाव्येव कालेश्वरादिनिराकरणेन निर्हेतुकतया नियतिवादमाश्रिताः । तुरवधारणे । तएव नान्ये । किंविशिष्टाः पुनस्ते इति दर्शयति । युक्तिकदंबकाद्बहिस्तिष्ठंतीति पार्श्वस्थाः परलोकक्रियापार्श्वस्थावा । नियतिपक्षसमाश्रयणात्परलोकक्रियावैयर्थ्यं । यदि वा पाशइवपाशः कर्मबंधनं तच्चेह युक्तिविकलनियतिवादप्ररूपणं तत्रस्थिताः पाशस्थाः । अन्येप्येकांतवादिनः कालेश्वरादिकारणिकाः पार्श्वस्थाः पाशस्थावा इष्टव्याइत्यादि । ते पुनर्नियतिवादमाश्रित्यापि नूयोविविधं विशेषेण वा प्रगल्निताधार्ष्ट्येनोपगताः परलोकसाधकासु क्रियासु प्रवर्तंते । धार्ष्ट्याश्रयणं तु तेषां नियतिवादाश्रयणे सत्येव । पुनरपि तत्प्रतिपंथिनीषु क्रियासु प्रवर्तनादिति ते पुनरेवमप्युपस्थिताः परलोकसाधकासु क्रियासु प्रवृत्ताअपि संतोनात्मडुःखविमोक्षकाः । असम्यक्प्रवृत्तत्वान्नात्मानं डुःखाद्विमोचयंति । गतानियतिवादिनः ॥ ५ ॥

जविणो मिगा जहा संता, परिताणेण वज्जिआ॥ असंकियाइं संकंति,
संकिआइं असंकिणो ॥६॥ परियाणिआणि संकंता,पासिताणि असंकिणो ॥ अणाणनयसंविग्गा संपलिंति तहिंतहिं ॥ ७ ॥ अह तं पवेज्ज वज्झं, अहे वज्झस्स वा वए ॥ मुच्चेज पयपासाउ, तं तु मंदे ण देहए ॥ ८ ॥

अर्थ–हवे अज्ञानवादीना मत उपर दृष्टांत कहेछे. जहाके० जेम, मिगाके० मृग एटले अरण्यना पशु जविणो संता के० वेगवंत उतां ते केवांछे, तोके परिताणेणवज्जियाके० परित्राण एटले शरणेकरी वर्जित अर्थात् तेमनो कोइ राखनार नथी. एवा ते नयविव्हलनृत विवेकरहित थका असंकियाइं के० अशंकित स्थानक जे कूट पाशादिक रहित तेने संकंति के० शंकानुं स्थानक जाणे तथा जे संकिआइं के० शंकित

अर्थ—हवे अनेरा अज्ञानीनुं मत देखाडेछे. इणमन्नंतु अन्नाणं के० ए पूर्वे कह्योजे सदोष आहार लइने सुख माने तेनाथी वली अन्य अज्ञानीनुंमत देखाडेछे. इह्रमेगेसिआहियंके० अहींयां कोइ एकने मते पण सर्वेने मते नहीं एटले कोइक अज्ञानी एम कहेछे के देवउत्तेअयंलोए के० आ लोक जे चराचर संसार छे, ते देवें नीपजावेलो छे. जेम करसणी बीज वावीने करसण नीपजावेछे ते सरखो जाणवो. तथा वली बीजा एम कहेछे के बंभउत्तेतिआवरे के० ए लोक ब्रह्मदेवें नीपजाव्योछे. ब्रह्मा जगत्पितामह इतिवचनात्. ॥ ५ ॥ वली कोइएक एम कहेछे, के ईसरेणकडेलोए के० ए लोक ईश्वरें करेलोछे. पहाणाइ तहावरे के० तथा अवरे एटले बीजा वली एम कहेछे के, प्रधान एटले सत्व, रज अने तमगुणनी जे सम अवस्था ते प्रकृति कहिए. तेणे ए लोक करेलो छे. बीजा एम कहेछे के मोरनी पांख कोणे चीतरी? सेलडीमिष्ट कोणे कीधी? स्वभावथकी लोक नीपनोछे. वली कांटा तीखा कोणे कीधा! लींब कडवो कोणे कर्यो तथा लसण दुर्गंधमय, कमल सुगंधमय ए सर्वे स्वभावेज नीपनांछे, तेम लोक पण स्वभावे निष्पन्न छे. ते लोक केवोछे, तोके जीवाजीवसमाउत्तेके० जीव अजीव सहित तथा सुह दुक्ख समन्निएके० सुखदुःखसहित छे. ॥ ६ ॥ एक कहेछे के, सयंभुणाकडेलोएके० ए लोक स्वयंभु एटले विष्णु तेणे नीपजाव्यो. अथवा ते विष्णु पेहेलो एकज हतो तेणे जगत नीपजाववानी चिंता करी त्यारे बीजी शक्ति नीपनी, त्यार पछी जगतनी सृष्टी निष्पन्न थई. इतिवुत्तंमहेसिणा के० एवुं महर्षिए कह्युंछे. त्यार पछी स्वयंभुए लोक नीपजावीने एवुं चिंतव्युं जे एटली जगत सृष्टीनो समास क्यां थशे! तेवारे मार एटले यम नीपजाव्यो. पछी मारे एसंथुयामायाके० तेणेमारे माया नीपजावी ते थकी ए लोक मरेछे. तेणलोए असासए के० ते कारण माटे ए लोक अशाश्वतो छे. ॥ ७ ॥ वली तेहिज कहेछे माहणा समणा एगेके० एक ब्राह्मण तथा एक श्रमण जे त्रिदंडी प्रमुख ते एम आह के० कहेछे के, अंडकडेजगेके० ए सचराचर जगत ते अंडथकी निपन्युं छे; ते एम कहेछे के जेवारे जगतमां काइ वस्तु न हती सर्व पदार्थ शून्य संसार हतो तेवारे ब्रह्मायें पाणीमांहे इंडुं सरज्युं पछी ते इंडु वध्युं तेवारे ते भांगीने बे खंड थया; तेमांहे थकी अधोलोक अने ऊर्ध्वलोक नीपना तेमां समस्त प्रजा उत्पन्न थई. एवा अनुक्रमे पृथ्वी, पाणी, अग्नि, वायु, आकाश, समुद्र, नदी, पर्वत, ग्राम, आगर, नगर इत्यादिक सर्वे स्थिति उत्पन्न थई; ए कारणे असोके० ए ब्रह्मायें ए सर्व तत्तंके० तत्व एटले पदार्थ ते अकासीयके० कीधा. एरीते ते ब्राह्मणादिक अयाणंता मुसंवदेके० परमार्थने अजाणता थका मृषा बोलेछे. ॥ ८ ॥

---

॥ दीपिका—अथाऽपराज्ञानिमतमाह । ( इणमिति ) । इदं वक्ष्यमाणमन्यदज्ञान

मिहास्मिन् लोके एकेषामाख्यातं । किं पुनस्तैराख्यातमित्याह् । देंवउत्तेति । देवेन उप्तः कृ तोदेवोप्तोदेवपुत्रोवायं लोकः । ब्रह्मणा उप्तोब्रह्मणा कृतोवायं लोकइत्यपरे वदंतीति ॥ ॥५॥ तथा ईश्वरेण कृतोलोकः । अपरे वदंति प्रधानादिकृतोलोकः । सत्वरजस्तमोगुणा नां साम्यावस्था प्रकृतिः सैव प्रधानशब्दवाच्या । आदिशब्दान्नियतिकृतोलोकइत्यन्ये । लोकोजीवाजीवसमायुक्तः सुखदुःखसमन्वितश्च ॥ ६ ॥ तथा स्वयंनूर्विष्णुरन्योवा सचै काकी रतिं न लजते ततोन्या शक्तिः समुत्पन्ना तदनंतरं जगत्सृष्टिरनूदिति महर्षिणा उ क्तं । ततः स्वयंनुवा लोकं निष्पाद्यातिसंसारनयात् यमाख्योमारयतीतिमारोव्यधायि । तेन मारेण संस्तुता कृता माया तया मायया च लोको म्रियते । नच तत्त्वतोजीवस्य मृतिरस्त्यतोमायैषा तेन लोकोऽशाश्वतइति गम्यते ॥ ७ ॥ तथा ब्राह्मणाद्विजातयः श्रमणास्त्रिदंडिप्रमुखाएके अंडेन कृतमंडकृतं अंडाज्जातं जगदाहुर्वदंति । ब्रह्मणांडं कृ तं ततोविश्वं जातं । एवं कृते जगति असौ ब्रह्मा तत्त्वं पदार्थसमूहमकार्षीत् कृतवान् ते च ब्राह्मणाद्याः परमार्थानभिज्ञाएवं मृषा वदंति ॥ ८ ॥

---

॥ टीका–सांप्रतमपराज्ञानिमित्तोपप्रदर्शनायाह् । (इणमन्नंतुअन्नाणमित्यादि) । इद मिति वक्ष्यमाणं । तुशब्दः पूर्वेन्योविशेषणार्थः । अज्ञानमिति मोहविजृंनणमिहास्मिन् लो के एकेषां न सर्वेषामाख्यातमनिप्रायः । किंपुनस्तदाख्यातमिति तदाह् । देवेनोप्तोदेवोप्तः कर्ष केणेव बीजवपनं कृत्वा निष्पादितोयं लोकइत्यर्थः । देवैर्वा गुप्तोरक्षितोदेवगुप्तोदेवपुत्रोवेत्या दिकमज्ञानमिति । तथा ब्रह्मणाउप्तोब्रह्मोप्तोयंलोकइत्यर्थः । परे एवं व्यवस्थिताः । तथा हि । तेषामयमन्युपगमः । ब्रह्मा जगत्पितामहः सचैकएव जगदवासीत्तेनच प्रजापतयः सृष्टा स्तैश्च क्रमेणैतत्सकलं जगदिति । तथेश्वरेण कृतोयं लोकः । एवमेके ईश्वरकारकाअनिदधति प्रमाणयंति वा । सर्वमिदं विमत्यधिकरणनावोपपन्नं तनु नुवनकरणादिकं धर्मित्वेनोपादी यते । बुद्धिमत्कारणपूर्वकमिति साध्योधर्मः । संस्थानविशेषवत्त्वादिति हेतुः । यथा घटादिरि ति दृष्टांतोयं । यद्यत्संस्थानविशेषवत्तत्तद्बुद्धिमत्करणपूर्वकं दृष्टं । यथा देवकुलकूपादिर्सं स्थानविशेषवच्च मकराकरनदीधराधरधराशरीरकरणादिकं विवादगोचरापन्नमिति । तस्माद्बु द्धिमत्कारणपूर्वकं । यश्च समस्तस्यास्य जगतः कर्ता ससामान्यपुरुषोन नवतीत्यसावीश्वरइ ति । तथा सर्वमिदं तनुनुवनकरणादिकं धर्मित्वेनोपादीयते बुद्धिमत्कारणपूर्वकमिति । साध्यो धर्मः कार्यत्वाद्घटादिवत् तथा स्थित्वा प्रवृत्तेर्वा वास्यादिवदिति । तथाऽपरेप्रतिपन्नायथा । प्रधानादिकृतोलोकः । सत्वरजस्तमसां साम्यावस्था प्रकृतिः साच पुरुषार्थं प्रवर्तते । आदिग्र हणाच्च प्रकृतेर्महान् ततोहंकारस्तस्माच्च गणः षोडशकस्तस्मादपि षोडशकात्पंचन्यः पंच महानूतानीत्यादिकया प्रक्रियया सृष्टिर्नवतीति । यदि वा आदिग्रहणात्स्वनावादिकं गृह्य

ते । ततश्चायमर्थः । स्वनावेन कृतोलोकः कंटकादितैक्ष्ण्यवत् । तथान्ये नियतिकृतोलोको मयूरांगरुहवदित्यादिनिः कारणैः कृतोयं लोकोजीवाजीवसमाकुलो जीवैरुपयोगलक्षणै स्तथा जीवैर्धर्माधर्माकाशपुद्गलादिकैः समन्वितः समुड्धराधरादिकइति । पुनरपि लोकं विशेषयितुमाह । सुखमानंदरूपं डुःखमसातोदयरूपमिति ताज्यां समन्वितोयुक्तइति ॥ ६ ॥ किंच । ( सयंनुणाइत्यादि ) । स्वयं नवतीति स्वयंनूर्विष्णुरन्यो वा सचैकएवादाव नूत्तत्रैकाकी रमते द्वितीयमिष्टवांस्तच्चिंतानंतरमेव द्वितीया शक्तिः समुत्पन्ना तदनंतरमेव जगत्सृष्टिरनूदित्येवं महर्षिणोक्तमनिहितं । एवं वादिनोलोकस्य कर्तारमन्युपगतवंतोपि च । तेन स्वयंनुवा लोकं संपाद्यातिनारनयाद्यमाख्योमारयतीति मारोऽन्यधायि । तेन मा रेण संस्तुता कृता प्रसाधिता माया तया च मायया लोकाम्रियते । नच परमार्थतोजी वस्योपयोगलक्षणस्य व्यापत्तिरस्त्यतोमायैषा । यथार्थ मृतस्तथा चायं लोकोऽशाश्व तोऽनित्योऽविनाशीति गम्यते ॥ ७ ॥ अपिच । ( माहणाइत्यादि ) । ब्राह्मणाद्विजात यः श्रमणास्त्रिदंडिप्रनृतयः । एके केचन पौराणिकान सर्वे एवमाहुरुक्तवंतोवदंति च । यथा जगदेतच्चराचरमंडेन कृतमंडकृतं । अंडाज्जातमित्यर्थः । तथाहि । ते वदंति यदा न किंचिदपि वस्त्वासीत् पदार्थशून्योयं संसारस्तदा ब्रह्माऽप्स्वंडमसृजत्तस्माच्च क्रमे ण वृद्धात्पश्चाद्द्विधानावमुपगतादूर्ध्वाधोविनागोऽनूत् तन्मध्ये च सर्वाः प्रकृतयोऽनूव न् । एवंपृथिव्यप्तेजोवाय्वाकाशसमुड्सरित्पर्वतमकराकरनिवेशादिसंस्थितिरनूदिति । तथाचोक्तं । आसीदिदं तमोनूतमप्रज्ञातमलक्षणं ॥ अप्रतर्क्यमविज्ञेयं, प्रसुप्तमिव सर्व तः ॥ १ ॥ एवंनूते चास्मिन् जगत्यसौ ब्रह्मा तत्र नावस्तत्त्वं पदार्थजातं तदंमादिप्रक्रमे णाकार्षीत् कृतवानिति । तेच ब्राह्मणादयः परमार्थमजानानाः संतोमृषावदंति अन्यथा च स्थितं तत्त्वमन्यथाप्रतिपादयंतीत्यर्थः ॥ ८ ॥ ॥ ॥ ॥ ॥

सएहिं परियाएहिं, लोयं बूया कडेतिय ॥ तत्तं ते ए विजाणंति, ए विणा सी कयाइवि ॥ ए ॥ अमणुन्नसमुप्पायं, डुरकमेव विजाणिया ॥ समुप्पायमजाणंता, कहं नायंति संवरं ॥ १० ॥

अर्थ ॥ हवे ग्रंथकार एनो उत्तर कहेढे. एरीते पूर्वे जे दर्शनी कह्या ते, सएहिं परियाए हिंके० पोतपोताना पर्यायें करी एटले पोतपोतानी कल्पनाये लोयंबूयाकडेतियके० एम कहे जे ए लोक अमुक अमुक प्रकारे कीधोढे. परंतु तत्तंते एविजाणंतिके० ते तत्व कांइ जाणता नथी. एविणासीकयाइविके० ए लोकतो कदापि काले विनाश पामे नहीं, एनी आदि पणनथीअने अंत पण नथी. तेथी एनो कर्त्ता कोइ नथी. एवो परमार्थ ते आण ता नथी; पण अजाणथका नावे तेम बोलेढे.॥ए॥ हवे एवां वचनना बोलनारने फल दे

खाडेछे. ते दर्शनी अमणुन्नके० विरुद्ध अनुष्ठान अनाचार ते थकी जेनी समुप्पायं के० उत्पत्तिछे, ते केवुं तोके, डुक्कंके० हिंसादिक विरुद्ध अनुष्ठान तेमां जे प्रवर्त्तशे ते डुःखी थासे एवविजाणियाके० एवुं जाणवुं जोइये. समुप्पायमजाणंताके० ते एवा डुःखनी उत्पत्तिनां कारणोने नजाणे परंतु ते अजाण बापडा कहंनायंतिसंवरं के० संवरपणुं जे डुःखनिवारणनुं कारण छे, तेने केवी रीते जाणी शकशे ? एतावता अति यत्न करतां पण डुःखनो उछेद न पामे, किंतु संसारमांहे अनंतो काल रहेशे. ॥ १० ॥ ॥

---

॥ दीपिका–अथ तेषामुत्तरमाह । ( सएहिमिति ) । स्वकैर्निजैः पर्यायैरभिप्रायैर्लोकं कृतमब्रुवन् कथितवंतस्ते तत्त्वं परमार्थं नाभिजानंति । नच विनाशी लोकः कदाचित् निर्मूलतः पर्यायरूपेण विनाश्यपि ड्व्यार्थतया नित्यत्वात् । लोकस्य ईश्वरादिकृतत्वं निषेधयुक्तयष्टीकातोझेयं ॥ ए ॥ अथ तेषां मृषावादिनां फलमाह । अमणुन्नेति । अमनोज्ञं असदनुष्ठानं तस्माडुत्पादः प्राडुर्भावोयस्य तदमनोज्ञसमुत्पादं डुःखं विजानीयात् प्राज्ञः । अयमर्थः स्वकृतादसदनुष्ठानादेव डुःखमुत्पद्यते नेश्वरादेरिति । ते चैवं डुःखस्य संवरं प्रतिघातहेतुं ज्ञास्यंति । कारणोछेदादेव कार्योछेदः स्यात् । कारणं वाऽजानंतः कथं डुःखोछेदाय यतिष्यंते यत्नवंतोपि डुःखोछेदं नाप्नुवंतीति ॥ १० ॥ ॥ ॥

---

॥ टीका–अधुनैषां देवोप्तादिजगछादिनामुत्तरदानायाह । (सएहिमित्यादि) । स्वकीयैः स्वकीयैः पर्यायैरभिप्रायैर्युक्तिविशेषैरयं लोकः कृतइत्येवमब्रुवन्नभिहितवंतः । देवोप्तोब्रह्मोप्तईश्वरकृतः प्रधानादिनिष्पादितः स्वयंभुवा व्यधायि तन्निष्पादितमायया म्रियते तथांडजश्चायं लोकइत्यादिस्वकीयानिरुपपत्तिभिः प्रतिपादयंति । यथाऽस्मडुक्तमेव सत्यं नान्यदिति ते चैवंवादिनो वादिनः सर्वेपि तत्त्वं परमार्थं यथावस्थितलोकस्वभावं नाभिजानंति न सम्यक् विवेचयंति । यथाऽयं लोकोड्व्यार्थतया न विनाशीति निर्मूलतः कदाचन । नचायमादितआरभ्य केनचित् क्रियते अपित्वयं लोकोऽभूद्भवति भविष्यति च । तथाहि । यत्तावडुक्तं यथा देवोप्तोऽयं लोकइति तदसंगतम् । यतोदेवोप्तत्वे लोकस्य न किंचित्तथाविधं प्रमाणमस्ति । नचाप्रमाणकमुच्यमानं विद्वज्जनमनांसि प्रीणयति । अपिच किमसौ देव उत्पन्नोऽनुत्पन्नोवा लोकं सृजेन्न तावदनुत्पन्नस्तस्य खरविषाणस्येवासत्वात्करणाभावः । अथोत्पन्नः सृजेत्तत्किं स्वतोऽन्यतो वा । यदि स्वतएवोत्पन्नस्तथा सति तल्लोकस्यापि स्वतएवोत्पत्तिः किं नेष्यते । अथान्यतउत्पन्नः सन् लोककरणाय सोप्यन्योन्यतः सोप्यन्योन्यतइत्येवमनास्थालतानभोमंडलव्यापिन्यनिवारितप्रसरा प्रसर्पतीति । अथासौ देवोऽनादित्वान्नोत्पन्नइत्युच्यते इत्येवंसति लोकोप्यनादिरेवास्तु को दोषः । किंचासावनादिः सन्नित्योऽनित्योवा स्यात्तद्यदि नित्यस्तदा तस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधान्न कर्तृत्वं । अथाऽनि

स्यस्तथासति स्वतएवोत्पत्त्यनंतरं विनाशित्वादात्मनोन त्राणाय कुतोन्यत्करणं प्रति तस्य व्यापारचिंतेति । तथा किममूर्तोमूर्तिमान् वा । यद्यमूर्तस्तदाऽकाशवदकर्तैवाऽथ मूर्तिमान् तथासति प्राकृतपुरुषस्येवोपकरणसव्यपेक्षस्य स्पष्टमेव सर्वजगदकर्तृत्वमिति । देवपुत्रदेवपुत्रपक्षौ त्वतिफल्गुत्वादपकर्णयितव्याविति । एतदेव दूषणं ब्रह्मोप्तपक्षेपि द्रष्टव्यं तुल्ययोगक्षेमत्वादिति । तथा यडुक्तं । तनुभुवनकरणादिकं विमत्यधिकरणभावापन्नं विशिष्टबुद्धिमत्कारणपूर्वकं कार्यत्वाद्घटादिवदिति तदयुक्तं । तथाविधविशिष्टकारणपूर्वकत्वेन व्याप्त्यसिद्धेः । कार्यपूर्वकत्वमात्रेण तु कार्यं व्याप्तं । कार्यविशेषोपलब्धौ कारणविशेषप्रतिपत्तिर्गृहीतप्रतिबंधस्यैव भवति । नचात्यंतादृष्टे तथा प्रतीतिर्भवति । घटे तत्पूर्वकत्वं प्रतिपन्नमिति चेत् युक्तं । तत्र घटस्य कार्यविशेषत्वप्रतिपत्तेर्नत्वेवं सरित्समुद्रपर्वतादौ बुद्धिमत्कारणपूर्वकत्वेन संबंधोगृहीतइति । पुनरप्युक्तं । नन्वतएव घटादिसंस्थानविशेषदर्शनवत्पर्वतादावपि विशिष्टसंस्थानदर्शनाद्बुद्धिमत्कारणपूर्वकत्वस्य साधनं क्रियते । नैतदेवं युक्तं । यतोनहि संस्थानशब्दप्रवृत्तिमात्रेण सर्वस्य बुद्धिमत्कारणपूर्वत्वावगतिर्भवति । यदितु स्यान्मृद्विकारत्वाद्वल्मीकस्यापि घटवत्कुंभकारकृतिः स्यात् । तथाचोक्तं । अन्यथाकुंभकारेण मृद्विकारस्य कस्यचित् । घटादेः कारणात्सिद्ध्येद्वल्मीकस्यापि तत्कृतिरिति । तदेवं यस्यैव संस्थानविशेषस्य बुद्धिमत्कारणपूर्वकत्वेन संबंधोगृहीतस्तद्दर्शनमेव तथाविधकारणानुमापकं भवति न संस्थानमात्रमिति । अपिच घटादिसंस्थानानां कुंभकार एव विशिष्टः कर्तोपलक्ष्यते नेश्वरः । यदि पुनरीश्वरः स्यात्किं कुंभकारेणेति । नैतदस्ति । तत्रापीश्वरएव सर्वव्यापितया निमित्तकारणत्वेन व्याप्रियते । नन्वेवं दृष्टहानिरदृष्टकल्पना स्यात् । तथाचोक्तं । शस्त्रौषधादिसंबंधाच्चैत्रस्य व्रणरोहणे ॥ असंबद्धस्य किं स्थाणोः कारणत्वं न कल्प्यते ॥ १ ॥ तदेवं दृष्टकारणपरित्यागेनाऽदृष्टपरिकल्पना न न्याय्येति । अपिच । देवकुलावटादीनां यः कर्ता ससावयवोऽव्याप्यनित्योदृष्टस्तद्दृष्टांतः साधितश्चेश्वरएवंभूतएव प्राप्नोति । अन्यथाभूतस्य च दृष्टांताभावाद्व्याप्त्यसिद्धेर्नानुमानमिति । अनयैव दिशा स्थित्वाप्रवृत्त्यादिकसाधनमसाधनमायोज्यं तुल्ययोगक्षेमत्वादिति । यदपि चोक्तं प्रधानादिकृतोऽयं लोकइति तदप्यसंगतं । यतस्तत्प्रधानं किं मूर्तममूर्तं वा । यद्यमूर्तं न ततोमकराकरादेर्मूर्तस्योद्भवोघटते । नह्याकाशात्किंचिदुत्पद्यमानमालक्ष्यते मूर्ताऽमूर्तयोः कारणविरोधादिति । अथ मूर्तं तत्कुतः समुत्पन्नं । न तावत्स्वतोलोकस्यापि तथोत्पत्तिप्रसंगात् नाप्यन्यतोऽनवस्थापत्तेरिति । अन्यथाऽनुत्पन्नमेव प्रधानादनादिभावेनास्ते तद्वल्लोकोपि किं नेष्यते । अपिच । सत्वरजस्तमसां साम्यावस्था प्रधानमित्युच्यते नचाऽविकृतात्प्रधानान्महदादेरुत्पत्तिरिष्यते भवद्भिः । नच विकृतं प्रधानव्यपदेशमास्कंदतीत्यतोन प्रधानान्महदादेरुत्पत्तिरिति । अपिचाचेतनायाः प्रकृतेः कथं पुरुषार्थे

प्रति प्रवृत्तिर्येनाऽऽत्मनोन्नोगोपपत्त्या सृष्टिः स्यादिति । प्रकृतेरयं स्वनावइति चेदेवं तर्हि स्वनावएव बलीयान् । यस्तामपि प्रकृतिं नियमयति ततएव च लोकोप्यस्तु किमदृष्टप्रधानादिकल्पनयेति । अथादिग्रहणात्स्वनावस्यापि कारणत्वं कैश्चिदिष्यतइति चेदस्तु । न हि स्वनावोऽन्युपगम्यमानोनः क्षतिमातनोति । तथाहि । स्वनावः स्वकीयोत्पत्तिः । सा च पदार्थानामिष्यतएवेति । तथा यडुक्तं नियतिकृतोयं लोकइति । तत्रापि नियमनं नियतिर्यथान्नवनं नियतिरित्युच्यते । साचाऽऽलोच्यमाना न स्वनावादतिरिच्यते । यच्चान्यथापि स्वयंन्नुवोत्पादितोलोकइति तदप्यसुंदरमेव । यतः स्वयंन्नूरिति किमुक्तं न्नवति । किं यदाऽसौ न्नवति तदा स्वतंत्रोन्यनिरपेक्षएव न्नवति । अथाऽऽदिन्नवनात्स्वयंन्नूरिति व्यपदिश्यते । तद्यदि स्वतंत्रन्नवनान्युपगमस्तद्वल्लोकस्यापि न्नवनं किं नान्युपेयते किं स्वयंन्नुवा । अथानादिस्ततस्तस्यानादित्वे नित्यत्वं नित्यस्य चैकरूपत्वात्कर्तृत्वाऽनुपपत्तिस्तथा वीतरागत्वात्तस्य संसारवैचित्र्यानुपपत्तिः । अथ सरागोसौ ततोऽस्मदाद्यव्यतिरेकात्सुतरां विश्वस्याकर्ता मूर्ताऽमूर्तादिकल्पाश्च प्राग्वदायोज्याइति । यदपि चात्रानिहितं । तेन मारः समुत्पादितः सच लोकं व्यापादयति तदप्यकर्तृत्वस्यानिहितत्वात्प्रलापमात्रमिति । तथा यडुक्तं अंडादिक्रमाज्जायते लोकइति तदप्यसमीचीनं । यतोयास्वप्सु तदंडं निसृष्टं तायथांडमंतरेणान्नूवन् तथा लोकोपि न्नूतइत्यन्युपगमे न काचिद्बाधा दृश्यते । तथासौ ब्रह्मा यावदंडं सृजति तावल्लोकमेव कस्मान्नोत्पादयति किमनया कष्टया युक्त्यसंगतया चांडपरिकल्पनया । एवमस्त्विति चेत् केचिदनिहितवंतोयथा ब्रह्मणोमुखाद्ब्राह्मणाः समजायंत बाहुन्यां क्षत्रियाऊरुन्यां वैश्याः पन्न्यां शूद्राइत्येतदप्ययुक्तिसंगतमेव । यतोन मुखादेः कस्यचिडुत्पत्तिर्नैवंत्युपलक्ष्यते । अथापि स्यात्था सति वर्णानामन्नेदः स्यादेकस्माडुत्पत्तेः । तथा ब्राह्मणानां कर्त्तत्तिरीथककलापादिकश्च न्नेदोन स्यादेकस्मान्मुखाडुत्पत्तेः । एवंचोपनयनादिसद्भावोन नवेद्भावे वा स्वस्रादिग्रहणापत्तिः स्यादेवमाद्यनेकदोषडुष्टत्वादेवं लोकोत्पत्तिर्नान्युपगंतव्या । ततश्च स्थितमेतत् । तएवं वादिनोलोकस्याऽनाद्यपर्यवसितस्योर्ध्वाधश्चतुर्दशरज्जुप्रमाणस्य वैशाखस्थानस्थकटिन्यस्तकरयुग्मपुरुषाकृतेरधोमुखमल्लकाकारसप्तपृथिव्यात्मकाधोलोकस्य स्थालाकाराऽसंख्येयद्वीपसमुद्राधारमध्यलोकस्य मल्लकसमुद्गकाकारोर्ध्वलोकस्य धर्माधर्माकाशपुजलजीवात्मकस्य द्रव्यार्थतयाऽनित्यस्य पर्यायापेक्षया क्षणक्षयिणउत्पादव्ययध्रौव्यापादितद्रव्यसतत्त्वस्याऽनादिजीवकर्मसंबंधापादिताऽनेकप्रपंचस्याष्टविधकर्मविप्रमुक्ताऽऽत्मलोकांतोपलक्षितस्य तत्त्वमजानानाः संतोमृषा वदंतीति ॥ ए ॥ इदानीमेतेषामेव देवोप्तादिवादिनामज्ञानत्वं प्रसाध्य तत्फलदिदर्शयिषयाऽऽह । ( अमणुन्नइत्यादि ) । मनोनुकूलं मनोज्ञं शोन्ननमनुष्ठानं न मनोज्ञमनोज्ञमसदनुष्ठानं तस्माडुत्पादः प्राडुर्नावोयस्य

दुःखस्य तदमनोज्ञसमुत्पादं । एवकारोऽवधारणे । सचैवं संबंधनीयः । अमनोज्ञसमुत्पादमेव दुःखमित्येवं विजानीयादवगच्छेत्प्राज्ञः । एतदुक्तं भवति । स्वकृताऽसदनुष्ठानादेव दुःखस्योद्भवोभवति नान्यस्मादित्येवं व्यवस्थितेपि सत्यनंतरोक्तवादिनोऽसदनुष्ठानोद्भवस्य दुःखस्य समुत्पादमजानानाः संतोऽन्यतईश्वरादेर्दुःखस्योत्पादमिच्छंति । तेचैवमिच्छंतः कथं केन प्रकारेण दुःखस्य संवरं दुःखप्रतिघातहेतुं ज्ञास्यंति । निदानोच्छेदेन हि निदानिनउच्छेदोभवति । तेत्र निदानमेव न जानंति तत्त्वाऽजानानाः कथं दुःखोच्छेदाय यतिष्यंते य लवंतोपि च नैव दुःखोच्छेदनमवाप्स्यंत्यपि तु संसारएव जन्मजरामरणेष्टवियोगाद्यनेक दुःखव्राताघाताभूयोभूयोऽरहट्टघटीन्यायेनानंतमपि कालं संस्थास्यंति ॥ १० ॥ ॥

सुद्धे अपावए आया, इहमेगेसिमाहियं ॥ पुणो किड्डापदोसेणं, सो तत्थ अवरज्झई ॥ ११ ॥ इह संवुडे मुणी जाए, पच्छा होइ अपावए ॥ वियडंबु जहा भुज्जो, नीरयं सरयं तहा ॥ १२ ॥ एताणुचीति मेधावी, बंभचेरेण ते वसे ॥ पुढो पावाउया सवे, अक्खायारो सयं सयं ॥ १३ ॥ सए सए उवठाणे, सिद्धिमेव न अन्नहा ॥ अहो इहेव वसवत्ती, सवकाम समप्पिए ॥ १४ ॥

अर्थ—हवे प्रकारांतरे दर्शनीनुं मत देखाडेछे. ए प्रस्तावे इहमेगेसिमाहियंके० एक वली कोइक, त्रैराशिक गोशालामतानुसारी ते एम कहेछेके, ए आयाके० आत्माते मनुष्य ने भवेज सुद्धेके० शुद्ध थाय. अपावए के० पापरहित थाय. एटले सर्व कर्म क्षयकरी. मोक्षे जाय. पुणोके० वली सोके० तेहज आत्मा तत्थके० त्यां मोक्षनेविषे रह्यो किड्डापदोसेणंके० क्रीडाप्रदोषे करी एटले रागद्वेषने वशें करी अवरज्झइके० अपराध करे एटले कर्म रजे करी अशुद्ध थाय. एटले शुं कह्युं? के ते मुक्ति रहतां जीवने पोतानां सासननी पूजा जाणी, अने अन्य सासननो पराभव जाणी, पोताने राग उपजावे. तथा पोताना सासननो व्याघात देखी द्वेष उपजे ए कारण माटे आत्मा निर्मल रह्यो उज्वल वस्त्रनी परे शनैःशनैः मलीन थाय. ए प्रकारे ते आत्मा वली संसारमांहे अवतरे एवुं जे त्रैराशिक कहेछे. ते जीवनी त्रणराशी स्थापेछे. प्रथम आत्मा सकर्मक, पछी वली अकर्मक थईने मुक्तिमां जाय, ए बीजी राशी. अने त्यां मुक्तिने विषे वली कर्म उपार्जी संसारमांहे आवे ए त्रीजी राशी. ॥ ११ ॥ इहसंवुडेमुणीजाएके० अहीं मुक्ति थकी आवी मनुष्यना भवमां उपजीने मुनि एटले यमनियम आदरी, संवुडे एटले संवर आदरी, पच्छाहोइअपावएके० पछी पापरहितनिर्मल थाय. एना उपर दृष्टांत कहेछे, जहाके० जेम वियडंबुके० विकटांबु एटले पा

णी तेह्नीपरे जाणवुं. जेम नीरयंके० निर्मल पाणी होयते रजादिकने संयोगे सरयंके० रजसहित एटले मलिन थाय, फरी ते पाणी निर्मलपण थाय; तहाके० तेम ए आत्मा पण जाणी लेवो. ॥ १२ ॥ हवे ए मतने दूषवेछे. एतके० ए पूर्वोक्त वादीउनां वचन असमं जस अणुचिंतिके० चिंतवी आलोचीने, मेधावी के० पंमित जे होय ते मनमां एवी रीते अवधारे ते कहेछे. बंभचेरे णतेवसेके० ए त्रैराशिक तथा अनेरा दर्शनी ब्रह्मचारीनेविषे न वसे एटले सूधो संयम नपाले. जे कारण माटे ते सम्यक्ज्ञानरहित थका अकर्मक ने सकर्मक कहेछे ते माटे ते अज्ञानी छे. तथा पुढोपावाउयासव्वेके० ए सर्व जुदाजुदा प्रा वाडक एटले परदर्शनी अरकायारो सयंसयंके० पोतपोतानुं दर्शन रुडुं करी वखाणेछे. ॥१३॥ वली तेहिज दर्शनीनुं मत कहेछे. सएसएउवट्टाणे के० ते पोतपोतानां दर्शनने विषे प्रवर्त्तता पोतपोतानुं अनुष्ठान जे दीक्षा, गुरु चरण, शुश्रूषादिक तेहिज सिद्धिमेव के० सिद्धिनुं कारणछे पण नअन्नहाके० अनेरा दर्शन थकी, अनेरा अनुष्ठान थकी मुक्ति न पामिये. अहोऽहेववसवत्ती के० ते एम कहेछे के–अमारा दर्शन थकी एहिज जन्ममां यावत् आत्मवर्ती थको एटले समस्त इंद्रीनो जीपनार एवो थको सव्वकामसमप्पिएके० सर्वकामएटले जे जे काम नोगनी प्रार्थना तथा वांछनाकरे ते ते पामे. ॥ १४ ॥ ॥

---

॥ दीपिका–कृतवादिमतमेवाह । ( सुद्धेति )। अयमात्मा शुद्धोमनुष्यनवएव शु द्धाचारोनूत्वा मोक्षे अपापकः स्यात् । इदमेकेषां गोशालमतानुसारिणामाख्यातं । पुनर यमात्मा अकर्मकोनूत्वा क्रीडया प्रद्वेषेण वा स तत्र मोक्षस्थएवाऽपराध्यति रजसा श्लि प्यते । तस्यहि स्वशासनपूजामन्यदर्शनपराजवमुपलन्य क्रीडाप्रमोदः स्यात् । स्वशासनपरा जवदर्शनाच्च द्वेषस्ततोऽसौ क्रीडाद्वेषान्यां कर्मणा बाध्यते ततोऽसौ नूयः संसारेऽवत रति ॥११॥ किंच । (इहेति) । इह संसारे प्राप्तः सन् प्रव्रज्यामंगीकृत्य संवृतात्मा जा[तमे]त सन् पश्चादपापः स्यात् । यथाविकटांबु जलोदकं नीरजस्कं निर्मलं सत् वातोद्धूतरे[णुसंयु]क्तं सरजस्कं मलिनं नूयः स्यात् तथायमात्मा त्रैराशिकाणां मते राशित्रयावस्थः स्[याद्य]यथापूर्वं संसारावस्थायां सकर्मकः ततो मोक्षे ऽकर्मकः पुनः शासनपराजवदर्श[नप्रद्वे]षोदयात् सकर्मा स्यादिति ॥१२॥ एतन्मतं दूषयति । ( एयाणुत्ति )। एतान्[पूर्वोक्तवा]दिनोऽनुचिंत्य मेधावी प्रज्ञावान् एतदवधारयेत् यथा न ते वादिनो ब्रह्म[चर्ये]... ने वसेयुः । यद्यपि ते संयमे स्थितास्तथापि न सम्यगनुष्ठातारइत्यवध[ार्य] ... सर्वेप्येते प्रावाडुकाः परमतिनः स्वकं स्वकमात्मीयं दर्शनमाख्यातारः ... रः स्वदर्शनं शुजं वदंति ते । नच तत्रास्था विधेयेति ॥ १३ ॥ कृत[वादिमतमेव]... णाह । ( सएति ) । ते कृतवादिनः स्वके स्वके उपस्थाने संयमा[नुष्ठाने]...

अधर्मा [अ]ध्ययत्रो कर्मविप्रमुक्ताः इदानीमेतेषामेव [न]इत्यादि ) । सर्व ... उत्पादः प्राडुर्न...

मन्निहितवंतोनान्यथा । तथासिद्धिप्राप्तेरधः प्रागपि वशवर्ती वशेंद्रियः स्यात् अस्मन्न त्वाश्रितः सांसारिकैः स्वभावैर्नाभिभूयते । सर्वे कामाद्यभिलाषाः समर्पिताः संपन्नायस्य ससर्वकामसमर्पितः इहलोके ईदृशः स्यात् परलोके च मोक्षं यायादित्यर्थः ॥ १४ ॥ ॥

---

॥ टीका–सांप्रतं प्रकारांतरेण कृतवादिमतमेवोपन्यस्यन्नाह । ( सुद्धेत्यादि ) । इहास्मिन् कृतवादिप्रस्तावे त्रैराशिकागोशालकमतानुसारिणोयेषामेकविंशतिसूत्राणि पूर्वगतत्रैराशिकसूत्रपरिपाट्या व्यवस्थितानि ते एवं वदंति । यथायमात्मा शुद्धोमनुष्यभवएव शुद्धाचारोभूत्वा अपगताशेषमलकलंकोमोक्षेऽपापकोभवति । अपगताशेषकर्मा भवतीत्यर्थः । इदमेकेषां गोशालकमतानुसारिणामाख्यातं । पुनरसावात्माऽशुद्धत्वाऽकर्मकत्वराशिद्व्यावस्थोभूत्वा क्रीडया प्रद्वेषेण वा सतत्र मोक्षस्थएवाऽपराध्यति रजसा श्लिष्यते । इदमुक्तं भवति । तस्य हि स्वशासनपूजामुपलभ्यान्यशासनपराभवं चोपलभ्य क्रीडोत्पद्यते प्रमोदः संजायते स्वशासनन्यक्कारदर्शनाच्च द्वेषस्ततोऽसौ क्रीडाद्वेषाभ्यामनुगतांतरात्मा शनैर्निर्मलपटवदुपभुज्यमानोरजसा मलिनीक्रियते मलीमसश्च कर्मगौरवाद्भूयः संसारेऽवतरति । अस्यां चावस्थायां सकर्मकत्वात्तृतीयराश्यवस्थोभवति ॥ ॥ ११ ॥ किंच । ( इहेत्यादि ) । इहास्मिन् मनुष्यभवे प्राप्तः सन् प्रव्रज्यामभ्युपेत्य संवृतात्मा यमनियमरतोजातः सन् पश्चादपापो भवति। अपगताऽशेषकर्मकलंकोभवतीति भावः । ततः स्वशासनं प्रख्याप्य मुक्त्यवस्थोभवति । पुनरपि स्वशासनपूजादर्शनान्निकारोपलब्धेश्च राग द्वेषोदयात्कलुषितांतरात्मा विकटांबुवदुदकवच्चीरजस्कं स क्षालोद्भूतरेणुनिवहसंपृक्तं सरजस्कं मलिनं भूयोयथा भवति तथाऽयमप्यात्माऽनंतकालेन संसारो द्विगाशुद्धाचारावस्थोभूत्वा ततोमोक्षावाप्तौ सत्यामकर्मावस्थोभवति । पुनः शासनपूजानिकारदर्शनाद्राग द्वेषोदयात्सकर्मा भवतीत्येवं त्रैराशिकानां राशित्रयावस्थोभवत्यात्मेत्याख्यातं ॥ उक्तंच । दग्धेंधनः पुनरुपैति भवं प्रमथ्य, निर्वाणमप्यनवधारितभीरुनिष्ठः ॥ मुक्तः स्वयं कृतभवश्च परार्थशूरस्त्वच्छासनप्रतिहतेष्विह मोहराज्यमिति ॥ १२ ॥ अधुनैतद्दूषयितुमाह । ( एयाणुचीइत्यादि ) । एतान्पूर्वोक्तान् वादिनोऽनुचिंत्य मेधावी प्रज्ञावान् मर्यादाव्यवस्थितोवा एतदवधारयेत् । यथा नैते राशित्रयवादिनोदेवोसादिलोकभाविनश्च ब्रह्मचर्ये तदुपलक्षिते वा संयमानुष्ठाने वसेयुरवतिष्ठेरन्निति । तथाहि । तेषामयमभ्युपगमोयथा स्वदर्शनपूजानिकारदर्शनात्कर्मबंधोभवत्येवंचावश्यं तद्दर्शनस्य पूजातिरस्कारेण चोभयेन वा भाव्यं तत्संभवाच्च कर्मोपचयपक्षस्तदुपचयाच्च शुध्यभावः शुद्ध्यभावाच्च मोक्षाभाव. । नच मुक्तानामशेषकर्मकलंकानां कृतकृत्यानामपगताशेषप्रपंचाविष्कृततत्त्वानां समस्तुतिनिंदानामपगतात्मात्मीयपरिग्रहाणां रागद्वेषानुषंगस्तदभावाच्च

कुतः पुनः कर्मबंधस्तस्माच्च संसारावतरणमित्यर्थः ॥ अतस्ते यद्यपि कथंचिद्द्रव्यब्रह्म चर्यं व्यवस्थितास्तथापि सम्यक् ज्ञानाभावान्न सम्यगनुष्ठानभाजइतिस्थितं । अपिच सर्वेप्येते प्रावाडुकाः स्वकं स्वकमात्मीयं दर्शनं स्वदर्शनानुरागादाख्यातारः शोभनत्वेन प्रख्यापयितारइति । नच तत्र विदितवेद्येनास्था विधेयेति ॥१३॥ पुनरन्यथाकृतवादिमत मुपदर्शयितुमाह । ( सएसएइत्यादि ) ते कृतवादिनः शैवैकदंडिप्रभृतयः स्वकीये स्वकीये उपतिष्ठत्यस्मिन्नित्युपस्थानं स्वीयमनुष्ठानं दीक्षा गुरुचरणशुश्रूषादिका तस्मिन्नेव सिद्धिमशेषसांसारिकप्रपंचरहितस्वभावमभिहितवंतोनान्यथा नान्येन प्रकारेण सिद्धिरवाप्यत इति । तथाहि शैवादीक्षातएव मोक्षइत्येवं व्यवस्थिताः । एकदंडिकाः पंचविंशतितत्त्वपरिज्ञानान्मुक्तिरित्यभिहितवंतस्तथान्येपि वेदांतिकाध्यानाध्ययनसमाधिमार्गानुष्ठानात्सिद्धिमुक्तवंतइत्येवमन्येपि यथास्वदर्शनान्मोक्षमार्गं प्रतिपादयंतीति । अशेषद्वंद्वोपरमलक्षणायाः सिद्धिप्राप्तेरधस्तात्प्रागपि यावदद्यापि सिद्धिप्राप्तिर्न भवतीति तावदिहैव जन्मन्यस्मदीयदर्शनोक्तानुष्ठानानुभावादष्टगुणैश्वर्यसद्भावो भवतीति दर्शयति । आत्मवशं वर्तितुं शीलमस्येति वशवर्ती वशेंद्रियइत्युक्तं भवति तद्यसौ सांसारिकैः स्वभावैरभिभूयते । सर्वे कामाअभिलाषाअर्पिताः संपन्नायस्य ससर्वकामसमर्पितोयान्यान् कामान् कामयते ते तेऽस्य सर्वे सिध्यंतीति यावत् । तथाहि । सिद्धेरारादष्टगुणैश्वर्यसिद्धिर्भवति । तद्यथा । अणिमा लघिमा गरिमा प्राकाम्यमीशित्वं वशित्वं प्रतिघातित्वं यत्र कामावसायित्वमिति ॥ १४ ॥

> सिद्धा य ते अरोगा य, इहमेगेसिमाहियं ॥ सिद्धिमेव पुरो काउं
> सासए गढिआ नरा ॥ १५ ॥ असंवुमा अणादीयं, भमिहिंति
> पुणो पुणो ॥ कप्पकालमुवजंति, ठाणा आसुरकिब्बिसियात्ति
> बेमि ॥ १६ ॥ इति प्रथमाध्ययने तृतीयोद्देशकः ॥

अर्थ—हवे परभवे जे गति थाय ते कहेछे. सिद्धायते के० ते जीव अमारा दर्शने प्रवर्त्तता शरीर त्याग करी, विशिष्ट समाधिने योगे सिद्ध थाय. ते सिद्ध केवा? तो के, अरोगाय के० रोगरहित एटले शरीरनां दुःख थकी रहित छे. एरीते इह के० एहिज लोकने विषे मेगेसि के० एकेक कोइ शिवने मतें एम आहियं के० भाख्युं एटले कह्युं. ते दर्शनी पोतपोताने अनुष्ठाने सिद्धिमेवके० सिद्धिनेज, पुरोकाउंके० आगल करी सासए के० आपणा अभिप्रायने विषे गढिआ के० गृध थता अनेक हेतु युक्ति कहे. ते कोनी परें? तो के, नराके० पामर नरनी पेरे. जेम ते अजाण मनुष्य पोताना मतनुं कदाग्रह न त्यागे, तेम ते दर्शनीउपण जे कांइ पोताना मतनुं

अनुष्ठान ते सर्व मुक्तिनुं कारण ठे, एम कहे. ॥ १५ ॥ हवे एवुं कहेनारने फल देखाडेठे.. असंवुमा के० ते पाखंमि दर्शनी संवररहित, असंयमसहित, एवी रीते मुग्धलोकने विप्र तारणहार अणादीयं के० अनादि संसारमांहे ,जमिहिति के०, परिन्रमण करतां ; पुणो पुणो के० वली वली नरकादिनी पीडा पामशे, कदाचित् ते बाल तपने प्रनावे स्वर्गादिक गति पामे ; तोपण केवी पामे तो के, कप्पकालं के० घणाकालसुधी गणा के० स्थानक जे आसुर के० असुर कुमारादिकनां स्थानक तेनेविषे अथवा किब्बिसिया के० किल्बिषीयादिक अधर्म स्थानक त्यां उवक्कंति के०, उत्पन्न थया ठतां डुःखज पामे. तिवेमि के० पूर्ववत्. ॥ १६ ॥ इति प्रथमाध्ययनस्य तृतीयोद्देशकः समाप्तः ।

---

दीपिका–एतदेवाह । (सिद्धेति)। तेऽस्मन्मताश्रिताः सिद्धाश्च अरोगाः स्युः । अरोगग्रहणाच्छारीरमानसानेकडुःखरहिताश्चेति ज्ञेयं । इहास्मिन् लोके एकेषां शैवादीनामिदमाख्यातं । ते हि सिद्धिं मुक्तिमेव पुरस्कृत्यांऽगीकृत्य स्वाशये स्वमतानुरागे ग्रथिताः संबद्धानराः प्राकृतपुरुषाः पंमितंमन्याइवेत्यर्थः ॥ १५ ॥ एतद्दूषणायाह । ( असंवुडेति ) ते पाखंडिनस्तत्त्वतोऽसंवृताश्नादिकं संसारं पुनःपुनर्भ्रमिष्यंति । यदि कथंचित्तेषां स्वर्गावाप्तिस्तथापि कल्पकालं बहुकालमुत्पद्यंते संनवंत्यसुराः । असुरस्थानोत्पन्नाश्चपि न प्रधानाः किंतर्हि किल्बिषिकाअधमाएवेति ॥ १६ ॥ ब्रवीमीति पूर्ववत् ॥ इति सूत्रकृतांग दीपिकायां प्रथमाध्ययने तृतीयोद्देशकः ।

---

॥ टीका–तदेवमिहैवास्मडुक्तानुष्ठायिनोऽष्टगुणैश्वर्यलक्षणा सिद्धिर्भवत्यमुत्रचाऽशेषद्वंद्वोपरमलक्षणा नवतीति दर्शयितुमाह । ( सिद्धायतेइत्यादि ) ये ह्यस्मडुक्तमनुष्ठानं सम्यगनुतिष्ठंति तेऽस्मिन् जन्मन्यष्टगुणैश्वर्यरूपां सिद्धिमासाद्य पुनर्विशिष्टसमाधियोगेन शरीरत्यागं कृत्वा सिद्धाश्चाशेषद्वंद्वरहिताअरोगाजवंति । अरोगग्रहणं चोपलक्षणं। अनेकशरीरमानसद्वंद्वेन स्पृशंति शरीरमनसोरजावादित्येवमिहास्मिँल्लोके सिद्धिविचारे वा एकेषां शैवादीनामिदमाख्यातं नाषितं । तेच शैवादयः सिद्धिमेव पुरस्कृत्य मुक्तिमेवांगीकृत्य स्वकीये आशये स्वदर्शनान्युपगमे ग्रथिताः संबद्धाअध्युपपन्नास्तदनुकूलायुक्तीः प्रतिपादयंति । नराइव नराः प्राकृतपुरुषाः शास्त्रावबोधविकलाः स्वाभिप्रेतार्थसाधनाय युक्तीः प्रतिपादयंत्येवं तेपि पंडितंमन्याः परमार्थमजानानाः स्वाग्रहप्रसाधिकां युक्तिमुद्घोषयंतीति । तथाचोक्तं । आग्रही वत निनीषति युक्तिं, तत्र यत्र मतिरस्य निविष्टा ॥ पक्षपातरहितस्य तु युक्तिर्यत्र तत्र मतिरेति निवेशं ॥ १ ॥ १० ॥ सांप्रतमेतेषामनर्थप्रदर्शनपुरःसरं दूषणाभिधित्सयाह ( असंवुडाइत्यादि ) तेहि पाखंडिकामोक्षाभिसंधिनः समुत्थिताअपिअसंवृताइंडियनोइंडियैरसंयताइहाप्यस्माकं लाजइंडिया

नुरोधेन सर्वविषयोपनोगादमुत्र मुक्त्यवाप्तेः । तदेवं मुग्धजनं प्रतारयंतोऽनादि संसारकांतारं न्रमिष्यंति पर्यटिष्यंति । स्वडुश्चरितोपात्तकर्मपाशाः पाशावशापिताः पौनः पुन्येन नारकादियातनास्थानेषूत्पद्यंते । तथाहि । नेंडियैरनियमितैरशेषद्वंद्वप्रच्युतिल क्षणासिद्धिरवाप्यते । याप्यणिमाद्यष्टगुणलक्षणैहिकी सिद्धिरनिधीयते सापि मुग्धजनप्र तारणाय दंनकल्पैवेति । यापि च तेषां बालतपोनुष्ठानाद्विना स्वर्गावाप्तिः साप्येवंप्राया नवतीति दर्शयति । कल्पकालं प्रनूतकालमुत्पद्यंते संनवंति । असुराअसुरस्थानोत्प न्नानागकुमारादयस्तत्रापि न प्रधानाः किं तर्हि किल्बिषिकाअधमाः प्रेष्यनूताअल्पर्ध योऽल्पनोगाः स्वल्पायुःसामर्थ्याद्युपेताश्च नवंतीति । इति उद्देशकपरिसमाप्त्यर्थे । ब्रवीमी ति पूर्ववत् ॥ १६ ॥ इति समयाख्याध्ययनस्य तृतीयोद्देशकः समाप्तः ॥

अथ—प्रथमाध्ययने चतुर्थ उद्देशकः प्रारन्यते ॥

एते जिया नो न सरणं, बाला पंमियमाणिणो ( पाठांतरे ॥ यत्थबालेवसीय ति )॥ हिंवा णं पुव संजोगं, सिया किच्चोवएसगा ॥ १ ॥ तं च निक्खू परिन्ना य, वियं तेसुं ण मुत्थए ॥ अणुक्कस्से अपलीणे, मझेण मुणि जावए ॥ २ ॥

अर्थ—हवे चोथो उद्देशो प्रारंनियें ठैयें. त्रीजे उद्देशे परतीर्थिनी वक्तव्यता कही हवे अहीं पण तेहिज कहेले. एते के० ते दर्शनी जे पूर्वे कह्यां ते पंचनूतिक तज्जीव तब्डरीरवादी तथा गोशालकमतानुसारी त्रैराशिक ए सर्वने कोणे जियाके० जीत्या? ते क हेढे—राग, द्वेष, परिग्रह, उपसर्ग तथा शब्दादिक विषय प्रबल मोहरूप वेरीए जीत्या. ते कारणे नो के० शिष्यने आमंत्रणे अहो शिष्य ए वचन तुं सही करीने सद्दहे. न सरणं के० ए परतीर्थीक कोइ जीवने शरण न थाय, एटले संसारमांहे पडतां प्राणीने उद्ध री नशके. केमके जे कारणे ते बालाके० बाल अज्ञानी ढतां पंमिय माणिणोके० आ त्माने पंमित करी मानता अज्ञाने लागा लिदाय. पोते उन्मार्गे पडतां बीजाने उन्मार्गे पाडेढे, केमके तेनी आचरणादिरूप विरुद्ध देखायढे; ते गाथाना उत्तरार्धवडे देखाडेढे. हिंवाणंपुवसंयोगं के० पूर्व संयोगं एटले पूर्वे धनधान्य अने स्वजनादिक संयोग ढां मीने "अमे निःसंग प्रव्रजित ठैये" एम कहे; परंतु ते वली सियाके० ते बंधाणा एटले परिग्रह आरंनने विषे आसक्त एवा ढता गृहस्थजढे केमके ते किच्चोवएसगाके० ते ग्र हस्थनां कृत्य जे पचन तथा पाचनादिक ढकाय हिंसानो व्यापार तेनो जे उपदेश तेने विषे प्रवर्त्ते. ते कारणे प्रव्रजित ढतां गहस्थोनां करतव्य थकी वेगला नथी. अर्थात् "जेवा गृही तेवा दर्शनी" ए कारणे कोइनो उद्धार न करी शके. ॥ १ ॥ एवा दर्श नीउं देखीने चारित्रियायें जे करवुं ते देखाडेढे. तंच निरकू के० ते पाखंमी लोक वि

परीत उपदेश देवाने प्रवर्त्तता तेने परिज्ञायके० सम्यक् प्रकारे जाणीने जेम ए दर्शनी बाप डा मिथ्यात्वव्यापारें विवेकशून्य पोते पोतानेज अहितकारी दीशेछे, तो अन्य जीव ने हितकर्त्ता क्यांथी थशे ? एवुं आलोचीने भिक्षु जे चारित्रीउ विपंतेसुंके० परमार्थनो जाण ते दर्शनीउनेविषे णमुछए के० मूर्छाय नहीं अर्थात् तेनीप्रत्ये संबंध पण न करे. त्यारे शुं करे, ते अर्थ गाथाना उत्तरार्धवडे देखाडे छे. अणुक्कस्से के० ते उत्कर्ष र हित आठ मदनो टालनार, अप्पलीणे के० अप्रलीन एटले असंबंध गृहस्थ तथा पास डादिकने विषे संसर्ग अणकरतो ते नणी मझेण के० मध्यमनावें रागद्वेष रहित छतो मुणिके० मुनी एटले जे साधु ते जावए के० पोताने प्रवर्त्तावे, एटले शुं कयुं ! तो के, कदाचित परतीर्थीक अथवा पासछादिक संघाते संबंध मले तो मद न करवो ने ते नी प्रशंसा तथा निंदा अणकरतो राग द्वेष रहित वर्त्ते. ए प्रकारेकरी संयम जे पाले तेज साधु जाणवो. ॥ २ ॥

॥ दीपिका–तृतीयोद्देशकेऽन्यतीर्थिकाणां कुत्सितत्वमुक्तमिहापि तदेवोच्यतइत्यर्थसं बद्धस्यास्योद्देशकस्येदमादिसूत्रं ॥ ( एतइति ) एतेऽन्यमतिनोजिताश्चनिजूताराग द्वेषा दिनिः । नोइति शिष्यामंत्रणं । एवं त्वं जानीहि । यथाएते न शरणं कस्यचित्त्राणाय न समर्थाः । ( जछत्ति ) यत्राऽज्ञाने बालोऽज्ञोलग्नः सन् अवसीदति तत्र ते व्यवस्थिताः । बालापंमिअमाणिणोइति क्वचित्पाठस्तत्र बालानिर्विवेकाअपंमिताअपि पंमितमानिनः कस्यापि न त्राणाय स्युरित्यर्थः । तत्कृत्यमाह । हित्वा त्यक्त्वा पूर्वसंयोगं धनस्वजनादिकं । णमिति वाक्यालंकारे । सितावद्धाः परिग्रहारंजेषु । पुनः किंनूताः । कृत्यं कार्य पचन पाचनादि तस्योपदेशं गछंतीति कृत्योपदेशगाः । अथवा सियाइत्यार्षत्वात् स्युर्नवेयुः । कृत्यं सावद्यानुष्ठानं तत्प्रधानाः कृत्यागृहस्थास्तेषामुपदेशः संरंजसमारंजरूपः स विद्यते येषां ते कृत्योपदेशिकाः । प्रव्रजिताअपि कर्त्तव्यंगृहस्थेन्योन जिद्यंतइत्यर्थः ॥ १ ॥ एवं जूतेषु तीर्थिकेषु सत्सु साधुना यत्कर्तव्यं तदाह । ( तंचेत्ति ) तं पार्श्वंमिलोकं परिज्ञाय स म्यक् ज्ञात्वा जिक्षुः संयतोविद्वान् तेषु न मूर्छयेत् तैः सह संबंधं न कुर्यात् । किंतर्हि कु र्यादित्याह । अनुत्कर्षवान् उत्कर्षमदस्तमकुर्वन् । तथाऽप्रलीनोऽसंबद्धस्तीर्थिकेषु गृहस्थे षु पार्श्वस्थादिषु वा संश्लेषमकुर्वन् मध्येन रागद्वेषयोरंतरालेन संचरन् मुनिर्लिंगत्रयवेदी या पयेदात्मानं वर्तयेत् तेषु निंदां स्वस्य प्रशंसांच परिहरन् साधुर्मध्यस्थवृत्त्या चरेदित्यर्थः।

॥ टीका–उक्तस्तृतीयोद्देशकः । अधुना चतुर्थः समारभ्यते । अस्यचायमभिसंबंधः । अनंतरोद्देशकेऽध्ययनार्थत्वात्स्वपरसमयवक्तव्यतोक्तेहापि सैवाऽभिधीयते । यथचाऽ नरोद्देशके तीर्थिकानां कुत्सिताचारत्वमुक्तमिहापि तदेवाभिधीयते । तदनेन संबंधे

नाऽयातस्याऽस्योद्देशकस्योपक्रमादीनि चत्वार्यनुयोगद्वाराण्यभिधाय सूत्रानुगमे सूत्रमुच्चार णीयं। तच्चेदं (एतेजियाभो इत्यादि) अस्य चानंतरसूत्रेण सहायं संबंधस्तद्यथा। अनंत रसूत्रेऽभिहितं। तीर्थिकाअसुरस्थानेषु किल्बिषाजायंतइति। किमिति। यतएते जिताः परीषहोपसर्गैः। परंपरसूत्रसंबंधस्त्वयं। आदाविदमभिहितं बुध्येत त्रोटयेच्च। ततश्चैतद पि बुध्येत। यथैते पंचभूतादिवादिनोगोशालकमतानुसारिणश्च जिताः परीषहोपसर्गैः का मक्रोधलोभमानमोहमदाख्येनाऽरिषड्वर्गेण चेत्येवमन्यैरपि सूत्रैः संबंधउत्प्रेक्ष्यः। तदेवं कृतसंबंधस्याऽस्य सूत्रस्येदानीं व्याख्या प्रतन्यते। (एतइति) पंचभूतैकात्मतज्जीवतच्छरी रादिवादिनः कृतवादिनश्च गोशालकमतानुसारिणश्च त्रैराशिकाश्च जिताअभिभूतारागद्वेषा दिभिः शब्दादिविषयैश्च तथा प्रबलमहामोहोद्भवाऽज्ञानेन च। भो इति विनेयामंत्रणं। एवं त्वं गृहाण। यथैते तीर्थिकाअसम्यगुपदेशप्रवृत्तत्वान्न कस्यचिच्छरणं भवितुमर्हंति। न कथंचित्त्रातुं समर्थाइत्यर्थः। किमित्येवं यतस्ते बालाइव बालाः। यथा शिशवः सद सद्विवेकवैकल्याद्यत्किंचनकारिणोभाषिणश्च। तथैतेऽपि स्वयमज्ञाः संतः परानपि मोह यंति। एवंभूताअपिच संतः पंडितमानिनइति। क्वचित्पाठोजत्थबालोवसीयइति। यत्रा ऽज्ञाने बालोऽज्ञोलग्नः सन्नवसीदति तत्र ते व्यवस्थिताः यतस्ते न कस्यचित्त्राणायेति। यच्च तैर्विरूपमाचरितं तदुत्तरार्द्धेन दर्शयति। हित्वा त्यक्त्वा। णमिति वाक्यालंकारे। पूर्वं संयोगोधनधान्यस्वजनादिभिः संयोगस्तं त्यक्त्वा किल वयं निःसंगाः प्रव्रजिताइत्युत्थाय पु नः सिता बद्धाः परिग्रहेष्वारंभेष्वासक्तास्ते गृहस्थास्तेषां कृत्यं करणीयं पचनपाचनकंड नपेषणादिकाभूतोपमर्दकारी व्यापारस्तस्योपदेशस्तं गच्छंतीति कृत्योपदेशगाः कृत्योपदे शकावा। यदिवा सियाइति आर्षत्वाद्बहुवचनेन व्याख्यायते। स्युर्भवेयुः। कृत्यं कर्तव्यं सावद्याऽनुष्ठानं तत्प्रधानाः कृत्यागृहस्थास्तेषामुपदेशः संरंभसमारंभारंभरूपः सविद्यते येषां ते कृत्योपदेशिकाः प्रव्रजिताअपि संतः कर्तव्यैर्गृहस्थेभ्यो न भिद्यंते। गृह स्थाइव तेऽपि सर्वावस्थाः पंचसूनाव्यापारोपेताइत्यर्थः॥ १॥ एवंभूतेषु च तीर्थिकेषु सत्सु भिक्षुणा यत्कर्तव्यं तद्दर्शयितुमाह। तंचभिरकूइत्यादि। तं पाखंडिकलोकमसदुप देशदानाऽभिरतं परिज्ञाय सम्यगवगम्य यथैते मिथ्यात्वोपहतांतरात्मानः सद्विवेकशून्या नात्मने हितायालं नान्यस्माइत्येवं पर्यालोच्य भावभिक्षुः संयतोविद्वान् विदितवेद्य स्तेषु न मूर्च्छयेत् न गार्ध्यंविदध्यान्न तैःसह संपर्कमपि कुर्यादित्यर्थः। किंपुनः कर्तव्यमिति पश्चार्द्धेन दर्शयति। अनुत्कर्षवानित्यष्टमदस्थानानामन्यतमेनाऽप्युत्सेकमकुर्वन्। तथा अप्रलीनोऽसंबद्धस्तीर्थिकेषु गृहस्थेषु पार्श्वस्थादिषु वा संश्लेषमकुर्वन् मध्येन रागद्वेष योरंतरालेन संचरन् मुनिर्जगत्त्रयवेदी यापयेदात्मानं वर्तयेत्। इदमुक्तं भवति। तीर्थिका

दिनिःसह सत्यपि कथंचित्संबंधे त्वकार्दकारेण तथा नावतस्तेष्वप्रलीयमानेनारक्तद्विष्टेन तेषु निंदामात्मनश्च प्रशंसां परिहरता मुनिनाऽत्मा यापयितव्यइति ॥ २ ॥

सपरिग्गहा य सारंना इह मेगेसिमाहियं ॥ अपरिग्गहा अ
णारंना, निरकू ताणं परिवए ॥ ३ ॥ कडेसु घासमेसेज्जा, विऊ
दत्तेसणं चरे ॥ अगिद्धो विप्पमुक्को अतमाणं परिवज्जए ॥ ४ ॥

अर्थ—हवे जे कारणे परतीर्थीकने विरुद्धाचारी कह्या ते कारण देखाडेछे—सपरिग्गहा के० ते धनधान्यादिक द्विपद चतुष्पदादिक सहित, तेने अनावे शरीर उपकरणादिकने विषे मूर्छा राखेछे तेहिज परिग्रह कहिए. अने सारंन के० जीवघातने विषे प्रवर्त्तमान, तेहने अनावे उद्देशादिकना नोगवनार छे. माटे आरंनी कहिये. एवाछतां मोक्ष मार्ग साधे ते देखाडे छे. इह मेगेसिमाहियंके० ते इह परलोकने चिंतवे. एक दर्शनीने मतें एम कह्युं, के, ए तपस्यादिक तथा मुंमर्मुंमनादिक क्रिया करे ते व्यर्थ छे, किंतु जे गुरु नक्तीने प्रसादे एक परम अक्षर लान्ने तेथी जीवने मोक्ष थाय. बीजो जे कांइ काय क्लेश करे ते सर्व अप्रमाण छे. एम जे कहे ते साधु पदवी न पामे. ते तारवाने समर्थ नहीं होवाने लीधे जे तारवाने समर्थ एवो साधु होय, ते आगल अर्द्ध गाथायें देखाडेछे. अपरिग्गहाके० जे किंचित् मात्र परिग्रहरहित होय एक धर्मोपकरण टाली अने तेना उपर पण ममताने अनावे परिग्रह उपर स्वल्प मात्र नराचे. तथा अणारंनाके० सर्वथा प्रकारे छकायना आरंनरहित एवा निरकूताणं के० निकु पोताने अने बीजाने त्राण शरण होय. एटले संसारसमुद्रमांहेथी पोते पण प्रवहणनीपरे तरे अने बीजा पण संसार समुद्रमां बुडता जीवने प्रवहणनी पेठे तारनार होय एरीते साधु परिवएके० उद्देशादिक आहार वर्जतो संयम पाले. ॥३॥ हवे चारित्रिउं आरंन अने परिग्रह टाली केम प्रवर्त्ते ते कहेछे. कडेसुके० ते गृहस्थे पोताने अर्थे जे नात पाणी कीधांछे. तेनेविषे सोल जातना उद्गम दोपरहित घासके० आहार एसेज्जाके० गवेषे,विऊके० ते पंमित निःकेवल निर्जरा निमित्ते जे आहार दातारे दत्तके० दीधो. तेना धात्रादिक सोले उत्पादन दोष तेनी एसणंचरेके० एपणाने विषे विचरे. अने संकीतादि दश एपणाना दोष जाणवा. अर्थात् बेतालीश दोष विशुद्ध आहार ले एम कह्युं. तथा अगिद्धोके० ते अमूर्छित थको आहारे एटले पांच मांमलिना दोष टाले. विप्पमुक्कोके० आहारने विषे रागद्वेषरहित, एवो छतो अवमाणं परिवज्जए के० बीजानुं अपमान वर्जे; एटले अनेरानो करेलो परानव अहियासे. ॥ ४ ॥

॥ दीपिका—कथं तीर्थिकास्त्राणाय न स्युरित्याह । (सपरिग्गहाइति) । सपरिग्रहाधना

दित्युक्ताः धनाद्यनावेपि शरीरोपकरणादौ मूर्ज्ञावंतः सपरिग्रहाएव तथा सारंनाः सावद्य व्यापाराइतीह विचारे एकेषामाख्यातं । यथा किमनया शिरस्तुंडमुंडनक्रियया । गुरोरनुग्रहाद्यदा परमाक्षरावाप्तिर्नवति तदा मोक्षः स्यादेवं नापमाणास्ते न त्राणाय स्युः। ये त्रातुं समर्थास्तानाह । अपरिग्रहाधर्मोपकरणंविना शरीरोपन्नोगाय स्वल्पोपि न विद्यते परिग्रहोयेषां तेऽपरिग्रहाअनारंनाश्च तान् निक्षुः साधुः शरणं परिव्रजेत् गच्छेत् । तेषां शरणं यायादित्यर्थः ॥३॥ परिग्रहारंनवर्जनं यथा स्यात्तथाह । (कडेसुइति) । कृतेषु गृहस्थैः स्वार्थं निष्पादितेषु उंदनादिपिंडेषु ग्रासमाहारं एषयेत् याचेत इति षोडशोजमदोषत्यागः सूचितः । तथा विद्वान् संयमनिपुणोदत्तं परैराशंसादोषरहितैर्निःश्रेयसबुध्या वितीर्णं तत्र एषणां ग्रहणैषणां चरेत् । दत्तमित्यनेन षोडशोत्पादनादोषाः एषणां चरेदित्यनेन दश एषणादोषाश्च सूचिताः । एतद्दोषत्यागेन पिंडं गृण्हीयादित्यर्थः । अगृद्धोऽमूर्छितोविप्रमुक्तो रागद्वेषरहितश्च । आहारे स्यादिति पंचग्रासैषणादोषत्यागउक्तः । सएवंनूतोनिक्षुः परेषामपमानं परिवर्जयेत् तपोमदं ज्ञानमदं च न कुर्यादित्यर्थः। आत्मनः सकाशात्परान् हीनान् न पश्येदिति तात्पर्यं ॥ ४ ॥

---

॥ टीका–किमिति ते तीर्थिकास्त्राणाय न नवंतीति दर्शयितुमाह। ( सपरिग्गहाइत्यादि ) । सपरिग्रहेण धनधान्यद्विपदचतुष्पदादिना वर्तंते तदनावेऽपि शरीरोपकरणादौ मूर्छावंतः सपरिग्रहाः । तथा सहारंनणे जीवोपमर्दादिकारिणा व्यापारेण वर्ततइति तदनावेऽप्यौद्देशिकादिनोजित्वात्सारंनाः । तीर्थिकादयः सपरिग्रहारंनकत्वेनैव च मोक्षमार्गं प्रसाधयंतीति. दर्शयति । इह परलोकचिंतायामेकेषांकेषांचिदाख्यातं नाषितं । यथा किमनया शिरस्तुंडमुंडनादिकया क्रियया परं गुरोरनुग्रहात्परमक्षरावाप्तिस्तद्दीक्षावाप्तिर्वा यदि नवति ततोमोक्षोनवतीत्येवं नापमाणास्ते न त्राणाय नवंतीति । येतु त्रातुं समर्थास्तान्पश्चार्द्धेन दर्शयति । अपरिग्रहाः न विद्यते धर्मोपकरणादृते शरीरोपन्नोगाय स्वल्पोऽपि परिग्रहोयेषांते अपरिग्रहाः । तथा न विद्यते सावद्यआरंनो येषां तेऽनारंनास्तेचैवं नूताः कर्मलघवः स्वयंयानपात्रकल्पाः संसारमहोदधेर्जंतूत्तारणसमर्थास्तान् निक्षुर्निर्दोषशीलउद्देशिकाद्यपरिनोजी त्राणं शरणं परि समंताद्व्रजेद्गच्छेदिति ॥३॥ कथं पुनःपुनस्तेनापरिग्रहेणाऽनारंनेण च वर्तनीयमित्येतद्दर्शयितुमाह ( कडेसुइत्यादि ) गृहस्थैः परिग्रहारंनद्वारेणाऽत्मार्थं ये निष्पादितार्उदनादयस्ते कृताउच्यंते । तेषु कृतेषु परकृतेषु परनिष्ठितेष्वित्यर्थः ॥ अनेन च षोडशोजमपरिहारः सूचितः । तदेवमुजमदोषरहितं ग्रस्यतइति ग्रासआहारस्तमेवंनूतमन्वेषयेन्मृगयेत् याचेदित्यर्थः । तथा विद्वान्संयमकरणैकनिपुणः परैराशंसादोषरहितैर्यन्निःश्रेयसबुध्या दत्तमित्यनेन षोडशोत्पादनदोषाः परिगृहीताद्रष्टव्याः।

तदेवंभूते चौल्यधात्रीनिमित्तादिदोषरहिते आहारे सभिक्षुः एषणां ग्रहणैषणां चरेदनुतिष्ठे दित्यनेनाऽपि उद्गमैषणादोषाः परिगृहीताइति मंतव्यं। तथा। अगृद्धोऽनध्युपपन्नोऽमूर्छि तस्तस्मिन्नाहारे रागद्वेषविप्रमुक्तः। अनेनाऽपि च ग्रासैषणादोषाः पंच निरस्ताअवसेयाः। सएवंभूतोभिक्षुः परेषामपमानं परावमदर्शित्वं परिवर्जयेत् परित्यजेत्। न तपोमदं ज्ञा नमदं च कुर्यादिति भावः॥ ४॥

> लोगवायं णिसामिज्जा, इह मेगेसिमाहियं॥ विवरीयपन्नसं
> भूयं, अन्नउत्तं तयाणुयं॥५॥ अणंते निइए लोए, सासए ण
> विणस्सती॥ अंतवं णिइए लोए, इति धीरोति पासइ॥६॥

अर्थ—हवे वली परवादी मिश्रित वचन कहेछे—लोगवायं के० पाखंडी लोक तेनो वाद पोतपोताने मतें कल्पित जे स्वरूप ते णिसामिज्जाके० सांभले, सांभलीने हैयामां धरे जिन मतिथी कह्युं खोटुं जाणी परिहरे ते लोकवाद देखाडेछे. इह के० ते ए जगतने विषे, मे गेसिके० एकेक वादीने मतें, आहियंके० कह्युं छे. ते केवुं लोके, विवरीयंके० विपरीत पन्न के० प्रज्ञातत्व थकी उपरांठी बुद्धि, संभूयंके० तेहथकी उपनो तथा अन्नउत्तंतयाणुगं के० ते अनेरा अविवेकीनुं जे भाख्युं तेने अनुसारे वली तेहुंज प्रवर्त्ततुं एवो लोकवाद सांभली हैये धारेछे. ॥५॥ हवे ते विपरीत बुद्धि रचित लोकवाद देखाडेछे.—ते लोक अणंते के० अनंत तथा निइएलोए के० नित्यछे. एटले शुं कह्युं? के जे आ भवमां पुरुषछे अथ वा स्त्री छे, ते आगमिक भवे पण तेवोज पुरुष तथा स्त्रीने रूपेछे. एटले स्त्री ते स्त्री ने पुरुष ते पुरुष छे, ते माटे लोक नित्यछे. सासए के० वली ए लोक शास्वतोछे. ण विणस्सति के० वणसे नही. अंतवंके० ते अंतसहित छे. एटले सप्तद्वीप तथा सप्त समुद्रसहित एटलो लोकछे. एथी न्यून अधिक नथी; ए कारणे लोकनो अंत छे. अने णिइएलोए के० लोक नित्यछे. स्त्री ते स्त्री अने पुरुष ते पुरुष रूपज छे. ते माटे इति के० एरीते, धीरोके० अमारा जे व्यासादिक धीरपुरुष अनेक गुणवंत ते पासइके० देखेछे.

॥ दीपिका—स्वमतं प्रख्याप्य पुनः परमतं दर्शयति। (लोगवायमिति)। लोकानां पाखंडिनां वादमंगीकारं (णिसामिज्जा) निशामयेत् जानीयात्। तद्दर्शयति। इह संसा रे केषांचित् इदमाख्यातं। तथा विपरीता मिथ्या या प्रज्ञा तया संभूतमुत्पन्नं तत्त्व विपर्यस्तबुद्धिग्रथितमित्यर्थः। तथाऽन्यैरविवेकिभिर्यदुक्तं तदनुगं तत्सदृशं अविवेकिजन वाक्यसदृशमिति॥५॥ लोकवादमेवाह। (अणंतेति)। न विद्यतें ऽतोयस्येत्यनं तोनित्यः शाश्वतोन विनश्यति। योयादृगिह भवे सपरभवेपि तादृशएव पुरुषः पुरुषएव

अंगना अंगनैवेति । अथवा अनंतोनिरवधिकः तथा नित्योऽप्रच्युतानुत्पन्नस्थिरैकरूपः तथा शाश्वतः कार्यद्रव्यं नवदपि अंते परमाणुत्वं न त्यजति तथा न विनश्यति दिगात्माकाशाद्यनपेक्ष्या । तथा अंतवान् लोकः सप्तद्वीपा वसुंधरेति परिमाणोक्तेस्तादृक्परिमाणोनित्यइति धीरः .साहसिकोव्यासादिरतीव पश्यति ॥ ६ ॥

---

॥ टीका–एवं निर्युक्तिकारेणोद्देशकार्थाधिकाराऽनिहितं किञ्चवमाय चउहत्तीत्येतत्प्रदर्श्यैवानीं परवादिमतमेवोद्देशार्थाधिकारानिहितं दर्शयितुमाह । ( लोगवायमित्यादि ) । लोकानां पाखंडिनां पौराणिकानांवा वादोलोकवादः । यथा स्वाभिप्रायेणाऽन्यथावाऽभ्युपगमस्तं निशामयेत् शृणुयात् जानीयादित्यर्थः । तदेव दर्शयति । इहाऽस्मिन्संसारे एकेषां केषांचिदिदमाख्यातमभ्युपगमः । तदेव विशिनष्टि । विपरीता परमार्थादन्यथाभूता या प्रज्ञा तया संभूतं समुत्पन्नं तत्त्वविपर्यस्तबुद्धिग्रथितमितियावत् । पुनरपि विशेषयति । अन्यैरविवेकिनिर्यदुक्तं तदनुगं यथावस्थितार्थविपरीतानुसारिनिर्यदुक्तं विपरीतार्थानिधायितया तदनुगच्छतीत्यर्थः ॥५॥ तमेव विपर्यस्तबुद्धिरहितं लोकवादं दर्शयितुमाह । ( अणंतेनिइएलोएइत्यादि ) नाऽस्यांतोऽस्तीत्यनंतः । न निरन्वयनाशेन नश्यतीत्युक्तं नवतीति । तथाहि । यो यादृगिह नवे स तादृगेव परनवेऽप्युपपद्यते पुरुषः पुरुषएवांऽगनाऽगनैवेत्यादि । यदिवाऽनंतोऽपरिमितोनिरवधिकइति यावत् । तथा नित्यइति । अप्रच्युतानुत्पन्नस्थिरैकस्वनावोलोकइति । तथा शश्वद्भवतीति शाश्वतो द्व्यणुकादिकार्यद्रव्यापेक्ष्या शश्वद्भवन्नपि न कारणद्रव्यं परमाणुत्वं परित्यजतीति । तथा न विनश्यतीति दिगात्माकाशाद्यपेक्ष्या । तथांऽतोऽस्याऽस्तीत्यंतवान् लोकः । सप्तद्वीपा वसुंधरेति परिमाणोक्तेः सच तादृक् परिमाणोनित्यइत्येवं धीरः कश्चित्साहसिकोऽन्यथाभूतार्थप्रतिपादनात् व्यासादिरतीव पश्यतीत्यतिपश्यति । तदेवंभूतमनेकभेदभिन्नं लोकवादं निशामयेदिति प्रकृतेन संबंधः । तथा अपुत्रस्य न संति लोकाब्राह्मणादेवाः श्वानोयक्षागोनिर्हतस्य गोघ्नस्य वा न संति लोकाइत्येवमादिकं निर्युक्तिकं लोकवादं न निशामयेदिति ॥६॥

अपरिमाणं वियाणाई, इह मेगेसिमाहियं ॥ सव्वड सपरिमा
णं, इति धीरोति पासई ॥७॥ जे केइ तसा पाणा, चिठंति अडुवा
थावरियाए अत्थि से अंजू, जेण ते तसथावरा ॥ ८ ॥

अर्थ कहेछे:–अपरिमाणं वियाणाइ के० जेनुं क्षेत्र थकी तथा काल
थकी, तेटलुंज मात्र जाणे पण सर्वज्ञ नथी. इह के० ए लोकनेविषे मेगे
के० कोइएक दर्शनीने मते एम कह्युंछे, जे अमारा तीर्थनो स्वामी अपरिमा

ण जाणे. जगतमां सर्वज्ञ कोइ नथी, किंतु सवज्ञ के० सर्वत्र सपरिमाणं के० प्रमाण सहित ठे. सर्वज्ञ अपन्हववादी ते एम कहेठे. इति के० एम धीरोति पालइ के० धीर पुरुष देखेठे, ते एम कहे ठे-के, देवता संबंधी सहस्र वर्ष ब्रह्मा सुए ते प्रस्तावे, ते कां इ न देखे, वली एटलोज काल ब्रह्मा जागृत थाय त्यारे देखे. ए कारणे सपरिमाण वस्तु जाणे तथा देखे एप्रमाणे कोइ एक कहेठे. ॥४॥ हवे ग्रंथकार तेने उत्तर कहेठे. जगतमां हे जे केइ के० जे कोइ तसाके० त्रस ते बेइंद्रियादिक पाणाके० प्राणी जीव, चिठंति के० ते तिष्टंति एटले रहेठे. अडुवाके० अथवा बीजा थावराके० स्थावर पृथिव्यादिक एवा बंने सजाव जगत्मां दिशेठे. अने अन्य दर्शनी एम कहे के " जे जेवो ते तेवोज होय " परंतु अन्वय परावर्त न थाय. जो ए वचन साचुं होय तो दान, अध्ययन, जप, नियम, तप तथा अनुष्ठानादिक क्रिया सर्व निरर्थक थाय. ए कारणे तेनुं बोलवुं प्रमाण जाणवुं न हीं. अने जैन कहेठे के, जगतमां त्रस अने स्थावर ठे तेने पोतपोतानां कर्मने परिणामे अंजू के० रुजु परियाएके० पर्याय अछिसे के० ठे. एटले शुं कहुं? तो के पोतपोताना कर्मना उपार्ज्यां पर्यायने पामे ते पर्यायेकरी जेणतेके० जे कारणे ते तसके० त्रस जीव ते थावराके० स्थावर थाय. एटले त्रस फीटी स्थावर थाय अने स्थावर फीटी त्रस थाय परंतु " जे जेह्वो ते तेह्वो " ए निश्चये थकी नथी. ॥ ए ॥

॥ दीपिका-किंच (अपरिमाणमिति) न विद्यते परिमाणमियत्ता क्षेत्रतः कालतोवायस्य तदपरिमाणं विजानाति कश्चित्तीर्थिकः । अपरिमितज्ञोऽसावर्तीद्रियदृष्टा न पुनः सर्वज्ञः । यद्वाऽपरिमितज्ञोऽनिप्रेतार्थातींद्रियदर्शी न पुनः सर्वदर्शी । यडुक्तं । सर्वं पश्यतु वा मा वा, इष्टमर्थं तु पश्यतु ॥ कीटसंख्यापरिज्ञानं, तस्य न क्वोपयुज्यतऽति । इह एकेषां सर्वज्ञापन्हववादिनामिदमाख्यातं । तथा सर्वत्र क्षेत्रे काले वा सपरिमाणं परिमाणयुक्तं धीत्तुध्धिस्तया राजत इतिधीरः इत्येवमसावतीव पश्यति । दिव्यं वर्षसहस्रं ब्रह्मा स्वपिति ताव त्कालं न पश्यति किंचित् पुनस्तावंतं कालं जागर्ति तत्र च पश्यति एवं बहुधा प्रवृत्तो लोकवादः ॥ ४ ॥ अस्योत्तरमाह । ( जेकेऽति ) । ये केचित्त्रसाः प्राणिनस्तिष्ठंति अथवा स्थावराः तेषां स्वकर्मपरिणत्याऽयं पर्यायोस्ति । (अंजूइति) प्रगुणोऽव्यनिचारी तेन पर्यायेण ते त्रसाः स्थावराः स्युः । त्रसत्वमनुनूय कर्मपरिणत्या स्थावराः स्थावरत्वमनुनूय त्रसाश्च नवंतीति । ततोयोयादृगिह्नवे सपरत्नवेपि तादृगिति नियमो न युक्तः॥ए॥

॥ टीका-किंच । ( अपरिमाणमित्यादि ) । न विद्यते परिमाणमियत्ता क्षेत्रतः कालतोवा यस्य तदपरिमाणं । तदेवंनूतं विजानाति कश्चित्तीर्थिकस्तीर्थेरुत् । एतडुक्तं नवति । अपरिमितज्ञोऽसावर्तीद्रियदृष्टा न पुनः सर्वज्ञ इति । यदि वाऽपरिमितज्ञस्य

निप्रेतार्थाऽतींद्रियदर्शीति । तथाचोक्तं । सर्वं पश्यतु वा मा वा, इष्टमर्थं तु पश्यतु ॥ कीटसंख्यापरिज्ञानं, तस्य न कोपयुज्यतइति । इहाऽस्मिंल्लोके एकेषां सर्वज्ञापन्द्ववा दिनामिदमाख्यातमयमन्युपगमः । तथा सर्वक्षेत्रमाश्रित्यकालं वा परिछेद्यं कर्मतापन्न माश्रित्य सद्परिमाणेन सपरिमाणं सपरिछेदं धीर्बुद्धिस्तयारंजतइतिधीरइत्येवमसौ अतीव पश्यतीत्यतिपश्यति । तथाहि । ते ब्रुवते दिव्यं वर्षसहस्रमसौ ब्रह्मा स्वपिति तस्यामवस्थायां न पश्यत्यसौ तावन्मात्रं च कालं जागर्ति तत्र च पश्यत्यसाविति तदेवंनूतोबहुधा लोकवादः प्रवृत्तः ॥ ७ ॥ अस्य चोत्तरदानायाह । ( जेकेइइत्यादि ) ये केचन त्रस्यंतीति त्रसा द्वीइियादयः प्राणाः प्राणिनः सत्वास्तिष्ठंति त्रसत्वमनुन वंति । अथवा स्थावराः स्थावरनामकर्मोदयात् पृथिव्यादयस्ते । यद्ययं लोकवादः सत्योनवेत् । यथासौ यादृगस्मिन् जन्मनि मनुष्यादिः सोऽन्यस्मिन्नपि जन्मनि ता दृगेव नवत्तीति । ततः स्थावराणां त्रसाणां च तादृशत्वे सति दानाध्ययनजपनियमत पोनुष्ठानादिकाः क्रियाः सर्वाप्यनर्थिकाआपद्येरन् । लोकेनाऽपि चाऽन्यथात्वमुक्तं । तद्य था । सवै एषशृगालोजायते यः सपुरीषोदह्यते तस्मात् स्थावरजंगमानां स्वकृतकर्मवशा त् परस्परसंक्रमणाद्यनिवारितमिति । तथा अनंतोनित्यश्च लोकइति यदनिहितं तत्रेदमनिधीयते । यदि स्वजात्यनुछेदेनास्य नित्यताऽनिधीयते ततः परिणामानित्य त्वमस्मदनीष्टमेवाऽन्युपगतं न काचित्क्षतिः । अथाऽप्रच्युतानुत्पन्नस्थिरैकस्वनावत्वेन नित्यत्व मन्युपग[illegible] तन्न घटते तस्याऽध्यक्षबाधितत्वात् । नहि क्षणनाविपर्यायानाऽलिं गितं किंचिद्वस्तु प्रत्यक्षेणा[illegible]प्तीयते । निःपर्यायस्यच खपुष्पस्येवाऽसद्रूपतैव स्यादिति । तथा शश्वन्नवनं कायद्रव्यस्या[illegible]विनाशित्वं यदुच्यते द्रव्यविशे षापेक्षया तदप्यसदेव । यतः सर्वमेव वस्तूत्पादव्ययध्रौव्यधुक्[illegible] निर्विनागमेव प्रवर्त ते अन्यथा वियदरविंदस्येव वस्तुत्वमेव हीयेतेति । यथा यदुक्तमंतवांल्लोकः सत घापाव।ष [illegible] न्नत्वादित्येतन्निरंतराः सुहृदः प्रत्येष्यंति न प्रेक्षापूर्वकारिणस्तद्ग्राहकप्रमाणान्नावादिति । तथा यदप्युक्तं अपुत्रस्य न संति लोकाइत्यादीत्येतदपि बालनाषितं । तथाहि । किंपुत्रस त्तामात्रेणैव विशिष्टलोकावाप्तिरुत तत्कृतविशिष्टानुष्ठानात् । तद्यदि सत्तामात्रेण तलइम हत्कार्मुकगर्त्तावराहादिनिर्व्याप्तालोकान्नवेयुस्तेषां पुत्रबहुलत्वसंन्नवात् । अथानुष्ठानमाश्री यते । तत्र पुत्रद्वयेसत्येकेन शोननमनुष्ठितमपरेणाऽशोननमिति तत्र का वार्त्ता स्व कृतानुष्ठानं च निष्फलमापद्येतेत्येवं यत्किंचिदेतदिति । तथा श्वानोयक्षाइत्यादियुक्ति [illegible]त्वादनाकर्णनीयमिति । यदपि चोक्तम् । अपरिमाणं विजानातीति तदपि न घटा [illegible] । यतः सत्यऽप्यपरिमितज्ञत्वे [illegible] सर्व[illegible] नवेत् ततोहेयोपादेयोपदेश [illegible] तस्य कीटसंख्यापरिज्ञान

मप्युपयोग्येव । यतोयथैव तद्विषयेऽस्याऽपरिज्ञानमेवमन्यत्राऽप्याशंकया हेयोपादेये प्रेक्षापूर्वकारिणः प्रवृत्तिर्न स्यात् तस्मात्सर्वज्ञत्वमेष्टव्यं । तथा यडुक्तं । सापवोधविजा गेन परिमितं जानातीत्येतदपि सर्वजनसमानत्वे यत्किंचिदिति । यदपिच कैश्चिडुच्यते । यथा ब्रह्मणः स्वप्नावबोधयोर्लोकस्य प्रलयोदयौ नवतइति तदप्ययुक्तिसंगतमेव । प्रति पादितं चैतत् प्रागेवेति न प्रतन्यते । नचाऽत्यंतं सर्वजगतउत्पादविनाशौ विद्येते । न कदाचिदनीदृशं जगदिति वचनात् । तदेवमनंतादिकं लोकवादं परिहृत्य यथावस्थितवस्तु स्वनावाविर्नावनं पश्चार्द्धेन दर्शयति । ये केचन त्रसाः स्थावरावा तिष्ठंत्यस्मिन् संसारे तेषां स्वकर्मपरिणत्याऽस्त्यऽसौ पर्यायः । अंजूइति प्रगुणोव्यनिचारी तेन पर्यायेण स्वक र्मपरिणतिजनितेन ते त्रसाः संतः स्थावराः संपद्यंते । स्थावरा अपिच त्रसत्वमश्नुवते । तथा त्रसास्त्रसत्वमेव स्थावराः स्थावरत्वमेवाऽश्नुवंति । न पुनर्योयादृगिह सतादृगे वाऽमुत्राऽपि नवत्ययं नियमइति ॥ ८ ॥

उरालं जगतो जोगं, विवज्जासं पलिंतिय ॥ सव्वे अक्कंतडुक्खाय
अउ सव्वे अहिंसिता ॥ ए ॥ एवं खु नाणिणो सारं; जन्न हिंसइ
किंचणं ॥ अहिंसासमयं चेव, एतावत्तं वियाणिया ॥ १० ॥

अर्थ—हवे ए उपर दृष्टांत कहेछे—ए जीव उरालंके० ते औदारिक एटले अति स्थूल एहवा जगतो जोगंके० जगनो योग जीवनो, व्यापार चेष्टा विशेष, विवज्जासं के० ते विपरीत जुदो जुदो पलिंतिय के० पामे. अत्रे गर्ननुं दृष्टांत कहेछे. जेम ग र्नमांहे रह्यो थको जीव अर्बुद, कलल, पेसी इत्यादिक जुदी जुदी अवस्था पामे. तथा जन्म पाम्या पछी बाल, कुमार, तरुण अने वृद्ध एवी जुदी जुदी अवस्था पामे. ए का रणे तेनुं वचन साचुं नथी जणातुं. तो जैन कहे छे के, सव्वेके० सर्व जीव एकेंद्रिया दिकथी मांमीने पंचेंद्रियपर्यंत जे छे, तेने अक्कंतडुःखाय के० शारीरी तथा मानसी डुःख ते वल्लन नथी. अउ के० ए कारणे सव्वे के० सघला जीव अहिंसया के० हणाय नहीं, तेम करवुं. ॥ ए ॥ एवं शब्द अवधारणे छे नाणिणो के० ज्ञानी एटले जे जाण पुरुष तेनो एहज सारं के०सार एटले न्यायछे. जन्नहिंसई किंचणं के० जे कोइ त्रस अने स्थावर जीवने किंचित् मात्र हणे नहीं, उपलक्षणथी मृषा बोले नहीं, अ दत्त, मैथुन तथा परिग्रह ए आश्रव न सेवे, रात्री नोजन न करे, एज ज्ञानीनो सार जे आश्रव न सेवे, अहिंसा के० जीवनी दया तथा समयंचेव के० समता सर्वत्र स म परिणाम राखे. एतावत्तंके० एटलुंज वियाणियाके० जाणवुं जोइये. बीजुं घणुं प लाल नार सरखुं जाणवा थकी शुं फल छे? जेम मुजने मरण ते डुःख तेम बीजा जी वने पण मरण तेडुःख एम जाणे एटले मूल गुण कह्या. ॥ १० ॥

॥ दीपिका–अत्र दृष्टांतमाह । ( उरालमिति )। उदारं स्थूलं जगतोयोगं । औदारिकाः प्राणिनोगर्न्नकलजार्बुदरूपादवस्थाविशेषाद्विपरीतं बालकुमारयौवनादिकमुदारं योगं परिसमंतादयंते गच्छंति । अयमर्थः । औदारिकशरीरिणोमनुष्यादेर्बालकुमाराद्यवस्थाविशेषाःप्रत्यक्षेण दृश्यंते न पुनर्यादृक्प्राक्तादृगेव सर्वदेति । एवं सर्वेषां स्थावरजंगमानामन्यथान्नवनं ज्ञेयं । तथा आक्रांताः पीडिताडुःखेन सर्वे जंतवस्ततस्तेऽहिंसितान्नवंति तथा कार्यं । अथवाऽकांतमप्रियंडुःखं येषां तेऽकांतडुःखाश्चशब्दात् प्रियसुखाश्च अतः सर्वान्नहिंस्यादिति दृष्टांतोदर्शितउपदेशश्च दत्तः। ॥ ए ॥ किमर्थं सत्वान्न हिंस्यादित्याह । ( एयमिति ) खुनिश्चये । एतदेव ज्ञानिनः सारं यत्किंचन प्राणिजातं न हिनस्ति । अहिंसा समता चैव एतावद्विजानीयात् । कोर्थः । यथा मम मरणं डुःखं वाऽप्रियं एवं सर्वस्य प्राणिलोकस्येति । एवं ज्ञात्वा न हिंस्यात्प्राणिनः । उपलक्षणान्मृषा न ब्रूयान्नादत्तं गृण्हीयान्नाब्रह्म सेवेत न परिग्रहं कुर्यादिति ॥ १० ॥

---

॥ टीका–अस्मिन्नेवाऽर्थे दृष्टांताभिधित्सयाऽऽह । ( उरालमित्यादि )। उरालमिति स्थूलमुदारं जगतऔदारिकजंतुग्रामस्य योगं व्यापारं चेष्टामवस्थाविशेषमित्यर्थः । औदारिकशरीरिणोहि जंतवः प्राक्तनादवस्थाविशेषात्कलजार्बुदरूपाद्विपर्यासन्नूतं बालकौमारयौवनादिकमुदारं योगं परिसमंतादयंते गच्छंति पर्ययंते । एतडुक्तं नवति । औदारिकशरीरिणोहि मनुष्यादेर्बालकौमारादिकः कालादिकृतोऽवस्थाविशेषोऽन्यथाचाऽन्यथाऽनवन् प्रत्यक्षेणैव लन्यते न पुनर्यादृक् प्राक् तादृगेव सर्वदेति । एवं सर्वेषां स्थावरजंगमानामन्यथाऽन्यथा च नवनं इष्टव्यमिति । अपिच सर्वे जंतवआक्रांता अभिनूताडुःखेन शारीरमानसेनाऽसातोदयेन डुःखाक्रांताः संतोऽन्यथाऽवस्थान्नाजो लन्यंते । अतः सर्वेपि ते यथाऽहिंसिता नवंति तथा विधेयं । यदि वा सर्वेऽपि जंतवोऽकांतमननिमतं डुःखं येषां तेऽकांतडुःखाः । चशब्दात् प्रियसुखाश्च ते तान् सर्वान् न हिंस्यादित्यनेन वाऽन्यथात्वदृष्टांतोदर्शितोनवत्युपदेशश्च दत्तइति ॥ ए ॥ किमर्थं सत्वान् न हिंस्यादित्याह । ( एवंखुइत्यादि )। खुरवधारणे । एतदेव ज्ञानिनोविशिष्टविवेकवतः सारं न्याय्यं यत्किंचनप्राणिजातं स्थावरं जंगमं वा न हिनस्ति न परितापयति । उपलक्षणं चैतत् । तेन न मृषा ब्रूयान्नादत्तं गृण्हीयान्नाऽब्रह्म सेवेत न परिग्रहं परिगृण्हीयान्न नक्तं भुंजीतेत्येवं ज्ञानिनः सारं यत्र कर्माश्रवेषु वर्ततइति । अपिच अहिंसया समता अहिंसासमता तां चैतावद्विजानीयात् । यथा मम मरणं डुःखं वाऽप्रियमेवमन्यस्याऽपि प्राणिलोकस्येति । एवंकारोऽवधारणे । इत्येवं साधुना ज्ञानवता प्राणिनां परितापनाऽपद्रावणादि वा न विधेयमेवेति ॥ १० ॥

(हत्थस्सेति)। हस्त्यश्वरथयानैस्तथा विहारगमनैः क्रीडादिगमनैः साधुं निमंत्रयंतीति। यथा। त्वं भुंक्ष्व भोगान् इमान् श्लाघ्यान् हे महर्षे वयं त्वां पूजयामः सत्कारयामः॥१६॥

॥ टीका–तानेवावर्तान् दर्शयितुमाह। (रायाणोइत्यादि)। राजानश्चक्रवर्त्यादयो राजामात्याश्च मंत्रीपुरोहितप्रभृतयस्तथा ब्राह्मणाअथवा क्षत्रियाइक्ष्वाकुवंशप्रभृतयः। एते सर्वेपि भोगैः शब्दादिविषयैर्निमंत्रयंति भोगोपभोगं प्रत्यभ्युपगमं कारयंति कं भिक्षुकं (साधुजीविणमिति)। साध्वाचारेण जीवितुं शीलमस्येति साधुजीविनमिति। यथा ब्रह्मदत्तचक्रवर्तिना नानाविधैर्भोगैश्चित्रसाधुरुपनिमंत्रितइत्येवमन्येपि केनचित्संबंधेन व्यवस्थितायौवनरूपादिगुणोपेतं साधुं विषयोद्देशेनोपनिमंत्रयेयुरिति ॥ १५ ॥ एतदेव दर्शयितुमाह। (हत्थस्सरहेत्यादि)। हस्त्यश्वरथयानैस्तथाविहारगमनैः विहरणं क्रीडनं विहारस्तेन गमनान्युद्यानादौ क्रीडया गमनानीत्यर्थः। चशब्दादन्यैश्चेंद्रियानुकूलैर्विषयैरुपनिमंत्रयेयुस्तद्यथा भुंक्ष्व भोगान् शब्दादिविषयानिमानस्माभिर्ढौकितान् प्रत्यक्षासन्नान् श्लाघ्यान् प्रशस्तान् ननिंद्यान् महर्षेसाधो वयं विषयोपकरणढौकनेन त्वां भवंतं पूजयामः सत्कारयामइति ॥ १६ ॥

वत्थगंधमलंकारं, इत्थीउ सयणाणिय ॥ भुंजाइं माइं भोगाइं,
आउसो पूजयामुतं ॥ १७ ॥ जो तुमे नियमो चिन्नो, भिक्खुभावं
मि सुव्वया ॥ अगारमावसंतस्स, सव्वो संविज्जए तहा ॥ १८ ॥

अर्थ–वली वत्थ के० वस्त्र भीना विना चीन अंशुकादिक अने गंध के० गंध ते कपूरादिक तथा अलंकारं के० आभूषण ते केयूरादिक तथा इत्थीउ के० स्त्री ते नवयौवना अने सयणाणिय के० शयन ते पर्यंकतूलिकादिक भुंजाइंमाइंभोगाइं के० इत्यादिक ए प्रत्यक्ष भोग भोगवो; आउसो के० अहो आयुष्मन् साधु पूजयामुतं के० एटले प्रकारे करी अमे तमने पूजीये ठैये ॥ १७ ॥ जोतुमे नियमोचिन्नो के० अहो साधु जो तमे पूर्वे महाव्रतादिकरूप नियम आचर्योछे, भिक्खुभावंमि के० ते भिक्षुने भावे संयमने अवसरे आचर्योछे, सुव्वया के० हे सुव्रति अगारमावसंतस्स के० ते आगार गृहस्थावासे वसता पण सव्वो संविज्जएतहा के० सघलो तेमजछे सुकृत अथवा दुष्कृत जे करवां तेनो नाश नथी ॥ १८ ॥

॥ दीपिका–(वत्थेति), वस्त्राणि गंधाः सुगंधचूर्णानि वस्त्रगंधं अलंकारं केयूराद्याभरणं तथा स्त्रियः शयनानि पर्यंकादीनि इमान्भोगांस्त्वं भुंक्ष्व। हेआयुष्मन् त्वां एभिः पूजयामः ॥१७॥ (जोतुमेति) यस्त्वयापूर्वं भिक्षुभावे नियमोमहाव्रतरूपश्चीर्णोऽनुष्ठितः अगारं गृहं आवसतस्तव सर्वोपि विद्यते नहि सुकृतस्याऽनुचीर्णस्य नाशोस्तीत्यर्थः ॥ १८ ॥

॥ टीका—किंचान्यत् । वस्त्रगंधेत्यादि । वस्त्रं चीनांशुकादि गंधाः कोष्ठपुटपाटकादयः वस्त्राणि च गंधाश्च वस्त्रगंधमिति समाहारद्वंद्वः । तथा अलंकारं कटककेयूरादिकं तथा स्त्रियः प्रत्यग्रयौवनाः शयनानि च पर्यंकतूलीप्रवरपटोपधानयुक्तानि इमान् जोगानिंद्रियमनोनुकूलानस्माभिर्ढौकितान् जुंक्ष्व तदुपजोगेन सफलीकुरु हेआयुष्मन् जवंतं पूजयाम सत्कारयामइति ॥ १७ ॥ अपिच ( जोतुमेइत्यादि ) यस्त्वया पूर्वं जिक्षुजावे प्रव्रज्यावसरे नियमोमहाव्रतादिरूपश्चीर्णोनुष्ठितः इंद्रियनोइंद्रियोपशमगतेन हेसुव्रत सत्सांप्रतमप्यगारं गृहमावसतोगृहस्थजावं सम्यगनुपालयतोजवतस्तथैव विद्यतइति । नहि कृतस्यानुचीर्णस्य नाशोस्तीति जावः ॥ १८ ॥

चिरं दूइज्जमाणस्स, दोसोदाणिं कुतो तव ॥ इच्चेव णं निमंतेति, नीवारेणव सूयरं ॥ १९ ॥ चोइया जिक्खचरिया, अचयंता जवित्तए ॥ तत्र मंदा विसीयंति, उज्जाणंसिव डुब्बला ॥ २० ॥

अर्थ—चिरंदूइज्जमाणस्स के० घणो काल संयमानुष्ठाने करी विचरता तमने दोसोदाणिंकुतोतव के० हमणा दोषनी प्राप्ति क्यांथी थशे एटला दिवस सुधी घणा व्रत पाल्यांछे इच्चेवणं के० इत्यादिक जोग योग्य पदार्थोये करी निमंतेति के० ते साधुने निमंत्रण करे ते उपर दृष्टांत कहेछे नीवारेणवसूयरं के० जेम नीवार एटले व्रीहिना कण तेणे करी सूयरने कूटबंधमां पाडे तेम चारित्रियाने संयम थकी भ्रष्ट करी संसाररूप पाशबंधनमां नाखे ॥ १९ ॥ चोइयाके० संयमने विषे वारंवार प्रेरया छतां पण जिक्खूके० चारित्रिया चरियाए के० साधुनी समाचारीने विषे अचयंता के० असमर्थ जवित्तए के० संयमरूप जारनो निर्वाह करवाने अशक्त छता तत्र के० ते मुक्ति पंथने विषे मंदा के० कोइएक मंद अज्ञानी कायर चारित्रिउ होयते विसीयंति के० सीदाय एटले सीतलविहारी थाय. ते उपर दृष्टांत कहेछे. उज्जाणंसीव के० जेम मार्गने विषे उंचे स्थानके आवे थके डुब्बला के० डुर्बल बलदिया गामलाने जारे पीडया थका सीदाय गाबडनाखी नीचे पडे, तेम साधु मंद चारित्रिउ महाव्रतनो जार नाखी संसारमांहे पडे ॥ २० ॥

---

॥ दीपिका—( चिरमिति ) चिरं बहुकालं ( दूइज्जमाणस्सेति ) संयमक्रियया विहरतस्तवेदानीं कुतोदोषोनैवास्तीत्यर्थः । इत्येवं पूर्वोक्तप्रकारेण ज्ञातयः साधुं निमंत्रयंति । यथा नीवारेण व्रीहिविशेषेण सूकरं वराहं कूटे पातयंति एवं साधुमपि ॥ १९ ॥ ( चोइआइति ) जिक्षुसमाचर्यया साधुसमाचर्यया प्रेरिताः संयमानुष्ठानेनात्मानं यापयितुं

वर्तयितुमशक्नुवंतस्तत्र संयमे मंदाविषीदंति शीतलविहारिणः स्युः । यथा उद्याने क ध्र्वस्थलभूमौ उत्क्षिप्तमहाभाराबलीवर्दाश्चतिडुर्बलाः सीदंति ग्रीवां पातयित्वा तिष्ठं त्येवं साधवोपि ॥ २० ॥

---

॥ टीका-किंच ( चिरमित्यादि )। चिरं प्रभूतकालं संयमानुष्ठानेन ( डुइज्जमाणस्सत्ति) विहरतः सतइदानीं सांप्रतं दोषः कुतस्तव नैवास्तीति भावः । इत्येवं हस्त्यश्वरथादि निर्वस्त्रगंधालंकारादिभिश्च नानाविधैरुपभोगोपकरणैः करणभूतैः । णमितिवाक्यालंकारे । तं भिक्षुं साधुजीविनं निमंत्रयंति भोगबुद्धिं कारयंति । दृष्टांतं प्रदर्शयति । यथा नीवारे ण व्रीहिविशेषकणदानेन सूकरं वराहं कूटके प्रवेशयंत्येवं तमपि साधुमपि ॥ १९ ॥ अनंतरोपन्यस्तवार्तोपसंहारार्थमाह । ( चोदिताइत्यादि ) । भिक्षूणां साधूनामुद्युक्तवि हारिणां चर्या दशविधचक्रवालसामाचारी इच्छामिच्छेत्यादिका तया भोदिता प्रेरिता। यदि वाभिक्षुचर्यया करणभूतया सीदंतश्चोदितास्तत्करणं प्रत्याचार्यादिकैः पौनःपुन्येन प्रेरितास्त च्चोदनामशक्नुवंतः संयमानुष्ठानेनात्मानं यापयितुं वर्तयितुमसमर्थाः संतस्तत्र तस्मिन् संयमे मोक्षैकगमनहेतौ नवकोटिशतावासैर्मंदाजडाविषीदंति शीतलविहारिणोभवं ति तमेवाचिंत्यचिंतामणिकल्पं महापुरुषानुचीर्णं संयमं परित्यजंति । दृष्टांतमाह । क ध्र्वयानंमुद्यानं । मार्गस्योन्नतोभागउट्टंकमित्यर्थः । तस्मिन् उद्यानशिरसि उत्क्षिप्तमहाभरा वहाणोतिडुर्बलाययावत्सीदंति ग्रीवां पातयित्वा तिष्ठंति नोत्क्षिप्तभरनिर्वाहकाभवंतीत्येवं तेपि भावमंदाउत्क्षिप्तपंचमहाव्रतभारं वोढुमसमर्थाः पूर्वोक्तभवावर्तैःपराभग्नाविषीदंति॥२०

अचयंतावलूहेण, उवहाणेण तज्जिया ॥ तत्त मंदा विसीयंति, उ
ज्जाणंसि जरग्गवा ॥ २१ ॥ एवं निमंतिए लद्धु, मुच्छिया गिद्ध इ
त्थीसु ॥ अज्झोववन्ना कामेहिं, चोइजंता गयागिहं तिबेमि ॥२२॥
इति उवसग्गपरिन्नाए बितिउद्देसो सम्मत्तो ॥ २ ॥

अर्थ-एरीते अचयंतावलूहेण के० संयमने निर्वाह करवा अशक्त, तथा उवहा णेण के० बाह्याभ्यंतर तपे करीने तज्जिया के० पीडया थता तत्त के० ते संयमने विषे, मंदा के० कोइएक मंद अज्ञानी विसीयंति के० सीदाय; कोनीपेरे तोके उज्जाणंसि के० जेम उद्यान एटले उर्ध्वस्थलभूमिने मस्तके आवे तेवारे जरग्गवा के० गरढो मोकरो वृषभ सीदाय, अने भारनी पीडायें पीडयो थको तो तरुण बलद पण सीदाय तो जर त्व एटले मोकरो बलद सीदाय तेमां केवुंजसुं; ॥२१॥ एवंनिमंतिएलद्धु के० ए पूर्वो करीते कामभोगादिके करी निमंत्रण लेइने ते कामभोगने विषे मुछियाके० मूर्छित थता

तथा गिद्धइत्थीसु के० स्त्रीने विषे गृद्ध एटले अत्यंत आसक्त थता तथा अज्झोववन्ना कामेहिं के० कामजोगने विषे अध्युपपन्न एटले तेनेविषे रागी होय तेने विवेकी पुरुषे चोइज्जंता के० चोयणा करी थति ते चोयणा सहन करी शके नही, एवा मंद चारित्रिया, ते संयम छांमीने गयागिहं के० नागा थका, फरी घरवास अंगीकार करे. त्तिबेमिनो अर्थ पूर्ववत् ॥ २२ ॥ इतिश्री उवसग्गपरिन्नाए बितिउद्देशः समाप्तः

॥ दीपिका-( अचेति ) रूक्षेण संयमेनात्मानं यापयितुमशक्नुवंतउपधानेन तर्जिताः पीडिताः संतस्तत्र संयमे मंदाविषीदंति स्थलजूमौ यथा जरजवाजीर्णबलीवर्दाः । तरुणस्यापि तत्रसीदनं संजवति किंपुनर्जीर्णस्येति जीर्ण ग्रहणं । तथा समर्थानां विवेकिनामपि संयमे सीदनं संजाव्यते किंपुनर्मंदानामिति ॥ २१ ॥ ( एवमिति ) एवं पूर्वोक्तं निमंत्रणं जोगं प्रति प्रार्थनं लब्ध्वा प्राप्य तेषु मूर्छिताआसक्ताः स्त्रीषु गृद्धादत्तोपयोगा रमणीरागमोहितास्तथा कामेषु इछामदनेषु अध्युपपन्नाः कामानुगतचित्ताः संयमं प्रति प्रेरणां सोढुमसमर्थाः प्रव्रज्यां त्यक्त्वा गृहंगता गृहस्थीजूताइति । ब्रवीमीतिपूर्ववत् ॥२२॥ इति उपसर्गपरिज्ञाख्ये तृतीयाध्ययने द्वितीयोद्देशकः समाप्तः

॥ टीका–किंच । ( अचयंताइत्यादि ) रूक्षेण संयमेनात्मानं यापयितुमशक्नुवंतः स्तयोपधानेनानशनादिना सबाह्याभ्यंतरेण तपसा तर्जिताबाधिताः संतस्तत्र संयमे मंदाविषीदंत्युद्यानशिरस्युद्धंकमस्तके जीर्णोडुर्बलोगौरिव यूनोपि हि तत्रावसीदनं संजाव्यते किंपुनर्जरजवस्येति जीर्णग्रहणं । एवमावर्तमंतरेणापि धृतिसंहननोपेतस्य विवेकिनोप्यवसीदनं संजाव्यते किंपुनरावर्तैरुपसर्गितानां मंदानामिति ॥ २१ ॥ सर्वोपसंहारमाह । ( एवमित्यादि ) । एवं पूर्वोक्तया नीत्या विषयोपजोगोपकरणं दानपूर्वकं निमंत्रणं विषयोपजोगंप्रति प्रार्थनं लब्ध्वा प्राप्य तेषु विषयोपकरणेषु हस्त्यश्वरथादिषु मूर्छिताअत्यंतासक्तास्तथा स्त्रीषु गृद्धादत्तावधानारमणीरागमोहितास्तथा कामेषु इछामदनरूपेष्वंऽध्युपपन्नाः कामगतचित्ताः संयमेऽवसीदंतोऽपरेणोद्युक्तविहारिणोनोद्यमानाः संयमं प्रति प्रोत्सह्यमानानोदनं सोढुमशक्नुवंतः संतोगुरुकर्माणः प्रव्रज्यां परित्यज्यात्पसत्वा गृहं गतागृहस्थीजूताः ॥ इतिपरिसमाप्तौ । ब्रवीमीति पूर्ववत् ॥ २२ ॥

हवे त्रीजा अध्ययननो त्रीजो उद्देशो प्रारंजिये छैयें.

जहा संगामकालंमि, पिछतो जीरु वेहइ ॥ वलयं गहणं णूमं, कोजाणइ पराजयं ॥ १ ॥ मुहुत्ताणं मुहुत्तस्स, मुहुत्तो होइ तारिसो ॥ पराजिया वसप्पामो, इति जीरु उवेहई ॥ ७ ॥

अर्थ–जहासंगामकालंमि के॰ जेम संग्रामनो काळ आवे छते, भीरु के॰ कोइएक बीकणो पुरुष पिछतोके॰ पाछो वेहईके॰ जूए, एटले बीकण मनुष्य संग्रामने काळे प्रथमथीज प्रतिकार कारण दुर्ग प्रछन्न स्थानक नासवाने अर्थे जूए; ते स्थानक देखाडेछे; वलयं के॰ वलयाकारे उदक रहित एवी गर्त्ताते दुर्गम होय अथवा जेमां पेसतां, तथा नीकलतां गहणंके॰ गहन होय, एटले वृक्षे करी व्याप्त होय अने णूमं के॰ प्रछन्न एवा जे गिरि गुफादिक तेनुं अवलोकन नासवाने अर्थे करे तेनुं कारण मनमां आवीरीते चिंतवे जे, कोजाणइपराजयं के॰ कोण जाणे एवा संग्रामने विषे कोनो जय पराजय थशे, कार्यसिद्धि दैवायत्तछे, थोडा होय ते घणाने पण जीतीशकेछे ॥ १ ॥ मुहुत्ताणं मुहुत्तस्स के॰ मुहूर्त्त जोवामां कोइएक मुहूर्त्त मुहुत्तोहोइतारिसो के॰ अपर अन्य मुहूर्त्त काळ विशेष लक्षण तेवुं होय त्यां एवो प्रस्ताव आवेके पराजियाके॰ ज्यां जीवने जय पणुं थाय अथवा पराजय पणुं पण थाय तेवारे नासीजइने ए स्थानको मने छुपीरेवाने काम आवशे इतिके॰ एवा स्वरूपे अवसप्पामोके॰ पराजयने अवसरे कदाचित् संग्रामथकी नासीने पाछा आववुं पडे तेवारे शी गति थाय, तेमाटे भीरु के॰ बीकण सुभट ते नासवानुं स्थानक उवेहती के॰ प्रथमथीज मनमा चिंतवी राखे. ॥ २ ॥

---

॥ दीपिका–अथ तृतीयोद्देशकः प्रारभ्यते । पूर्वोद्देशकयोरनुकूलप्रतिकूलोपसर्गाउक्तास्तैश्चाध्यात्मविषादः स्यादिति । अत्रोच्यते । (जहेति) यथा संग्रामकाले कश्चिद्भीरुः परानीकपुरुषावसरे पृष्ठतः प्रेक्षते नाशस्थानं वाऽऽलोकते । वलयं यत्रोदकं वलयाकारेणस्थितं उदकरहिता वा गर्ता गहनं धवादिवृक्षावृतं स्थानं णूमं प्रछन्नगिरिगुहादिकमित्यादिस्थानं नाशहेतोरालोकते । यतः कोजानाति पराजयं कस्य जयः पराजयोवा भावीति कोपेत्ति दैवायत्ताः कार्यसिद्धयः ॥ १ ॥ किंच । (मुहुत्तेति) मुहूर्तानामेकस्य वा मुहूर्तस्याऽपरो मुहूर्तः कालविशेषस्तादृशोभवति । यत्र जयः पराजयोवास्यात् । एवं सति पराजितावयमवसर्पामइति भीरुरुपेक्षते शरणमपीति ॥ २ ॥

---

॥ टीका–उपसर्गपरिज्ञायां उक्तोद्वितीयोद्देशकः सांप्रतं तृतीयः समारभ्यते । अस्यचायमभिसंबंधः । इहानंतरोद्देशकाभ्यामुपसर्गाअनुकूलप्रतिकूलभेदेनाभिहितास्तैश्चाध्यात्मविषीदनं भवतीति तदनेन प्रतिपाद्यतइत्यनेन संबंधेनायातस्यास्योद्देशकस्यादिसूत्रं (जहे त्यादि) दृष्टांतेन हि मंदमतीनांसुखेनैवार्थावगतिर्भवतीत्यतआदावेव दृष्टांतमाह । यथा कश्चिद्भीरुरकृतकरणः संग्रामकाले परानीकपुरुषावसरे समुपस्थितः पृष्ठतः प्रेक्षते आदावेवापत्प्रतीकारहेतुभूतं दुर्गादिकं स्थानमवलोकयति। तदेव दर्शयति । वलयमिति । यत्रोदकं वलयाकारेण व्यवस्थितमुदकरहितावा गर्ता दुःखनिर्गमप्रवेशा तथा गहनं धवादिवृक्षैः

कटिसंस्थानीयं(णूमंति) प्रछन्नं गिरिगुहादिकं किमित्यसावेवमवलोकयति । यनएवं मन्यते । तत्रैवंभूते तुमुले संग्रामे सुनटसंकुले कोजानाति कस्यात्र पराजयोनविष्यतीति यतो दैवायत्ताः कार्यसिद्धयस्तोकैरपि वहवोजीयंतइति ॥ १ ॥ किंच ( मुहुत्ताणमित्यादि ) मुहूर्तानामेकस्य वा मुहूर्तस्यापरोमुहूर्तः कालविशेषलक्षणोवसरस्तादृग्नवति यत्रजयः पराजयोवा संनाव्यते तत्रैवं व्यवस्थिते पराजितावयमपसर्पामोनश्यामइत्येतदपि संनाव्यते अस्मद्विधानामिति नीरुः पृष्ठतआपत्प्रतीकारार्थं शरणमुपेक्षते ॥ २ ॥

एवं तु समणा एगे, अबलं नच्चाण अप्पगं ॥ अणागयं नयं दिस्स, अविकप्पंति मंसुयं ॥३॥ कोजाणइ विऊवातं, इत्थीउ उदगाउवा ॥ चोइज्जंता पवरकामो, णणो अत्थि पकप्पियं ॥ ४ ॥

अर्थ–हवे एपूर्वोक्तदृष्टांत, कायर साधु साथे मेलविएछेए एवंतु के० एरीते समणाएगे के० कोइएक श्रमण प्रवर्जित अल्प सत्वना धणी ते अप्पगं के० पोताने विषे अबलं के० अबलपणु एटले संयमरूप नार वहेवाने जाव जीवसुधी पोताने विषे असमर्थ पणु नच्चाण के० जाणीने अणागयंनयं के० अनागत एटले आगमिक कालनो नय दिस्सके० देखीने, एटले आगल वृद्धावस्थायें तथा ग्लानावस्थायें तथा दुर्भिक्षने विषे मने शुं त्राण शरण थशे अविकप्पंतिमंसुयंके० एवी कल्पना करीने ठेरावकरे के मने व्याकर्ण,ज्योतिष, वैद्यकादिक त्राण शरण थशे माटे तेवा शास्त्रो नणे ॥३॥ कोजाणइके० कोण जाणे विऊवातं के० मुजने केवा कारण थकी संयमनो भ्रंस थशे. इत्थीउके० स्त्रीथकी थसे उदगाउवाके० किंवा उदक एटले सचित्तपाणीना परिनोग थकीथशे, केमके कर्मनी विचित्र गतिछे णणोअत्थिपकप्पियंके० प्रकल्पित पूर्वोपार्जित द्रव्य नथी जे ते समय मने काम आवे; तो तेवखते चोइज्जंताके० कोइयें अमने पूछ्या थकां पवरकामो के० व्याकर्णादिक कहिसुं एरीते चिंतवन करी ज्योतिषादिकने विषे यत्न करे ॥ ४ ॥

---

॥ दीपिका–श्लोकद्वयेन दृष्टांतं प्रदर्श्य दार्ष्टांतिकमाह । ( एवमिति ) एवं पूर्वोक्तदृष्टांतेन श्रमणाएके अल्पसत्वाआत्मानमबलं संयमभारवहनाक्षमं ज्ञात्वाऽनागतमेव नयं दृष्ट्वा इदंव्याकरणं गणितं ज्योतिष्कं वैद्यकं मंत्रादिकं वा श्रुतमधीतं मम त्राणाय स्यादिति अविकल्पंते मन्यंते ॥ ३ ॥ ( कोजाणइति ) कोजानाति व्यापातं संयमाद्भ्रंशं । केन पराजितस्य मम संयमाद्भ्रंशः स्यादिति । किंस्त्रीतः किंवा उदकात् स्नानाद्यर्थमुदकसेवनानिज्ञापात् इत्येवं ते वराकामन्यंते ननो ऽस्माकं किंचित्प्रकल्पितं पूर्वोपार्जितं द्रव्यमस्ति यत्तस्यां दुःखावस्थायां कार्यं ममेति । अतश्चोद्यमानाः परेण पृछ्यमानावयं हस्तिशि

चित्तना अस्थिरपणाने पोहोता थका, मनमां विचार करे के, शुं जाणीयें, अमे जाव जीव सुधी संयम पाली शकशुं; किंवा नही पाली शकशुं; कोनीपेरे तोके पंथाणंचके० जेम मार्गने विषे अकोवियाके० अनिपुण एवापुरुषो मार्ग देखी संदेहमां पडे, के शुं जाणीयें एमार्ग अमुक स्थानके जशे किंवा नही जाय; ॥५॥ हवे माहापुरुषनी स्थिति कहेछे. जे उके० जे महासत्ववंत मोहोटा पुरुष नाता के० ज्ञात लोकोमांहे प्रसिद्ध अने सूरपुरं गमा के० शूरवीर पुरुषोमां अग्रेसर, एटले आगेवान एरीते प्रसिद्ध थयेलाछे ते संगा मकालंमि के० संग्रामकालने अवसरे, णोतेपिठमुवेहिंति के० पाछुं न जुवे, एटले ना सी जवानुं स्थानक जूए नही; किंपरंमरणंसियाके० ते एम जाणे जे आपणने मरण तो साश्वतछे एटले क्यारेपण मरवुं तो आवश्यछे नासी जइशुं तो, अमारो यश जतो रेशे; ते कारण माटे आ संग्रामनेविषे अमे मरण पामीशुं पण अमारो यश अखंमित राखीशुं ॥६॥

॥ दीपिका–( इच्चेवेति ) इत्येवं पूर्व प्रकारेण यथा नीरवः संग्रामे प्राप्तावलयादि स्थानसमुपेक्षिणः स्युस्तथा प्रव्रजिताअपिआजीविकानया व्याकरणगणितादिकं जी वनोपायत्वेन प्रत्युपेक्षंते परिकल्पयंति । किंनूताः । विचिकित्सा चित्तविप्लुतिः किमे नं संयमं वयं समर्थाउत नेत्येवंरूपा । यडुक्त । लुक्खमणुएहमत्तिययं, कालाइक्क तसोयणं विरसं ॥ नूमीसयणं लोउ, असिणाणं बंनचेरंच ॥ १ ॥ तां समापन्नाः प्राप्ताः। यथा पं थानं प्रत्यकोविदाअनिपुणाः किमयं पंथा इष्टं देशं यास्यति नवेति कृतचित्तसंदेहाः स्युः । तथा ते संयमनारवहने संदेहं प्राप्ताः । यथानिमित्तादिकं जीविकार्थं परिकल्पयंति ॥ ५ ॥ ( जेउसंगेति ) ये पुनर्महासत्वाः। तुर्विशेषणे। संग्रामकाले ज्ञाताः प्रसिद्धाः शूरा णां पुरंगमाः पुरोगामिनः सुनटाग्रवर्तिनस्ते पृष्ठं नप्रेक्षंते नाशस्थानं नविलोकयंति किं त्वेवं मन्यंते यदत्रास्माकं किमपरं मरणमेव स्यात् नवतु मरणं यशोमायातु। यडुक्तं । वि शरारुनिरविनश्वरमतिचपलैः स्यास्नुवांछतां विशदं ॥ प्राणैर्यदिशूराणां, नवति यशः किं न पर्याप्तमिति ॥ ६ ॥

॥ टीका–उपसंहारार्थमाह । (इच्चेवमित्यादि) । इत्येवमिति पूर्वप्रक्रांतपरामर्शार्थः । यथा नीरवः संग्रामे प्रविविक्षवोवलयादिकं प्रत्युपेक्षिणोनवंतीत्येवं तेपि प्रव्रजिता मंदनाग्यतया अल्पसत्वाआजीविकानया व्याकरणादिकं जीवनोपायत्वेन प्रत्युपेक्षंते परिकल्पयंति । किंनताः विचिकित्सा चित्तविप्लुतिः किमेनं संयमनारमुत्क्षिप्तमंतं नेतुं वयं समर्थाः उतनेतीत्येवं नूता।। तथाचोक्तं । लुक्खमणुएहमणियथं, कालाइक्कं तनोयणं वि रसं । नूमीसयणंलोउं असिणाणं बंनचेरंच ॥१॥तां समापन्नाः समागताः। यथा पंथानं प्र त्यकोविदाअनिपुणाः किमयं पंथा विवक्षितं नूनागं यास्यत्युत नेतीत्येवं कृतचित्तविप्लुत

योनवंति तथा तेपि संयमनारवद्वनंप्रति विचिकित्सां समापन्नानिमित्तगणितादिकं जीविकार्थं प्रत्युपेक्षंतइति ॥ ५ ॥ सांप्रतं महापुरुषचेष्टिते दृष्टांतमाह । ( जेउसंगामेत्या दि ) । ये पुनर्महासत्वाः । तु शब्दोविशेषणार्थः । संग्रामकाले परानीकयुद्धावसरे ज्ञाता रोलोकविदिताः । कथं शूरपुरंगमाः शूराणामग्रगामिनोयुद्धावसरे सैन्याग्रस्कंधवर्तिनइति एवंभूताः संग्रामं प्रविशंतोन पृष्ठमुत्प्रेक्षंते नदुर्गादिकमापत्त्राणाय पर्यालोचयंति । तेचा भंगकृतयुद्धयोपिस्वेवं मन्यंते । किमऽपरमत्रास्माकं भविष्यति यदि परं मरणं स्यात्तच्च शाश्व तं यशःप्रवाहमिच्छतामस्माकं स्तोकं वर्ततइति । तथाचोक्तं । विशरारुभिरऽविनश्वर, मपि चपलैः स्थास्नु वांछतां विशदं ॥ प्राणैर्यदिशूराणां, भवति यशः किं न पर्याप्तं ॥१॥६॥

एवं समुट्ठिए भिक्कू, वोसिज्जा गारबंधणं ॥ आरंभं तिरियंकट्टु आत्तत्ताए परिवए ॥ ७ ॥ तमेगे परिभासंति, भिक्कयं साहुजी विणं ॥ जे एवं परिभासंति, अंतए ते समाहिए ॥ ८ ॥

अर्थ—एवं के० एरीते भिक्कू के० साधु संयमने विषे समुट्ठिए के० सावधान थयो छतो, तथा अगारबंधणं के० गृहस्थावासनुं बंधन तेने वोसिज्जा के० छांमीने, तथा आरंभं के० आरंभ जे सावद्यानुष्ठान तेने तिरियं कट्टुके० तिर्छो करीने एटले, आरंभने दूर क रीने आत्तत्ताए परिवएके० एक मोक्षनेविषे सावधान थाय, संयमानुष्ठानने विषे प्रवर्ते॥७॥ अध्यात्मविषीदनार्थाधिकारोगत.के० ए आत्मा थकीजे विवाद ते कह्यो. हवे बीजो अ धिकार परवादिना वचन आश्री कहेछे. एगे के० एक कोइ परने उपकार रहि त एवा दर्शनने ग्रहण करनारा गोसालीक मतना अनुसारी तथा दिगंबरादिक एवा अन्य तीर्थिकना साधुउं त के० ते पूर्वोक्त साहुजीवणं के० साधु एटले रुडी आ जीवणं एटले आजीविकाये प्रवर्त्तनार अर्थात् परने उपकार करनार, रुडा आचारे प्रव र्त्तमान एवा भिक्कूयं के० साधुने परिभासंति के० एवीरीते कहे. इतिकोर्थः तेनी निंदा करे, तो जे के० जे धर्मना अजाण एवं के० एम पूर्वे कह्यु, तेम परिभासंति के० साधु ना आचारनी निंदा करे ते के० तेवा अन्यतीर्थिक साधुउं समाहिए के० समाधि एट ले सम्यक् अनुष्ठान थकी अथवा मोक्षथकी अंतए के० वेगला जाणवा. ॥ ८ ॥

॥ दीपिका—दार्ष्टांतिकमाह । ( एवमिति ) एवं भिक्षुरपि महासत्वः सम्यक्संयमे उत्थि तः कषायादिवैरिवर्गं जेतुं प्रवृत्तः । यतः । कोहंमाणं च मायं च, लोहं पंचिंदिआणिअ । दु ज्जयं चेवमप्पाणं, सव्वमप्पेजिएजिअं ॥ १ ॥ किंकृत्वा समुत्थितः अगारबंधनं गृहपाशं व्युत्सृज्य त्यक्त्वा आरंभं तिर्यक्कृत्वा निराकृत्य आत्मभावाय शेषकर्मरहितभावाय परिव्रजेत् संयमे प्रव

र्तेत इति ॥ ७ ॥ अध्यात्मविषीदनाधिकारोगतः अथ परवादिवचनाधिकारमाह । ( तमेगइति ) एके परवादिनः साधुं भिक्षुं साधु शोभनं जीवितुं शीलमस्य सतथा तं एवं परिजापंते । ये ते पुष्टधर्माणोगोशालकमतानुगताः आजीविकादिगंबरावा ये ते एवं वक्ष्यमाणं परिजापंते साधुं निंदंति ते अंतके पर्यंते समाधेर्मोक्षाद्वाह्याइति शेषः ॥ ८ ॥

॥ टीका–तदेवं सुजटदृष्टांतं प्रदर्श्य दार्ष्टांतिकमाह । ( एवमित्यादि ) यथा सुजटाज्ञातरोनामतः कुलतः शौर्यतः शिक्षातश्च तथा सन्निवद्धपरिकराः करगृहीतहेतयः प्रतिजटसमितिजेदिनोन पृष्ठतोवलोकयंति । एवं भिक्षुरपि साधुरपि महासत्वः परलोकप्रतिस्पर्द्धिनमिंद्रियकषायादिकमरिवर्गं जेतुं सम्यक् संयमोद्यानेनोद्यितः समुह्यितः । तथा चोक्तं । कोहं माणं च मायंच लोहं पंचेंदियाणिय । डुज्जयं चेवमप्पाणं सव्वमप्पेजिएजियं ॥ किं कृत्वा समुह्यितइति दर्शयति । व्युत्सृज्य त्यक्का अगारबंधनं गृहपाशं तथा आरंजं सावद्यानुष्ठानरूपं तिर्यक्कृत्वाऽपहस्तयित्वात्मनोजावआत्मत्वमशेषकर्मकलंकरहितत्वं तस्मै आत्मत्वाय । यदिवा आत्मा मोक्षः संयमोवा तद्भावस्तस्मै तदर्थं परिसमंताद्व्रजेत् संयमानुष्ठानक्रियायां दत्तावधानोजवेदित्यर्थः ॥ ७ ॥ निर्युक्तौ यदजिहितमध्यात्मविषीदनं तडुक्तमिदानीं परवादिवचनं द्वितीयमर्थाधिकारमधिकृत्याह । ( तमेगेइत्यादि ) तमिति । साधुमेके ये परस्परोपकाररहितं दर्शनमापन्नाअयःशलाकाकल्पास्ते च गोशालकमतानुसारिणआजीविकादिगंबरावा तएवं वक्ष्यमाणं परिसमंताद्भापंते । तं जिक्षुकं साध्वाचारं साधु शोजनं परोपकारपूर्वकं जीवितुं शीलमस्य ससाधुजीविनमिति । ये ते ऽपुष्टधर्माणएवं वक्ष्यमाणं परिजापंते साध्वाचारनिंदां विदधति तएवं जूताअंतके पर्यंते दूरे समाधे मोक्षाख्यात्सम्यक् ध्यानात्सदनुष्ठानात् वा वर्त्तंतइति ॥ ८ ॥

संबद्ध सम कप्पाउ, अन्न मन्नेसु मुच्छिया ॥ पिंमवायंगिलाण
स्स, जं सारेह दलाहय ॥ ९ ॥ एवं तुप्ने सरागञ्चा, अन्न मन्न
मणुवसा ॥ नठसप्पह सप्नावा, संसारस्स अपारगा ॥ १० ॥

अर्थ–हवे ते गोसालकादिक मतानुसारी जे कहे ते देखाडेछे. संबद्धसमकप्पाउ के० निश्चयथकी ग्रहस्थ समान तमारो कल्प एटले आचारछे; अर्थात् तमे मोहे करी बंधाणाछो अन्नमन्नेसु के० जेम ग्रहस्थ अन्योअन्य परस्पर मांहोमांहे मातापितादिकनी सार संजाल करे तेम तमे पण मांहोमांहे आचार्यादिक उपर मुछिया के० मुर्छित थयेला छो ते केवीरीते मुर्छितछो ते देखाडे छे पिंमवायं गिलाणस्स के० पिंम एटले जिक्षा ते गिलाण एटले रोगीने अर्थे जंके० जेमाटे सारेह के० गवेषो छो दलाहय के० जिक्षा आणी आपोछो. च शब्द थकी गुर्वादिकनो वैयावच्च करोछो तेमाटे तमे गृहस्थ

रारखा हो ॥ ९ ॥ एवं के० ए कारणमाटे तुम्हे के० तुमे सरागस्था के० गृहस्थनी पेरे सराग पणे वर्त्तो छो अन्नमन्न के० माहोमांहे मणुवसा के० वशगामी साधु कोइना आधीन न थाय ते कारणमाटे तमे सप्पह के० सद्पंथ एटले रुडोमार्ग तेना सप्नावा के० सन्नावने नठ के० नष्ट कीधो एटले सन्मार्गने भ्रष्ट कीधो तेथी तमे संसारस्सअपारगा के० संसारना पारंगामी नही एवा दोष अन्य तीर्थिउ बोले ॥ १० ॥

---

॥ दीपिका–यत्परिनापंते तदाह । ( संबद्धेति ) संबद्धागृहस्थास्तैस्तुल्यः समः कल्पो व्यवहारोयेषां ते तथा गृहस्थानुष्ठानतुल्याः।यथा गृहस्थाः परस्परमुपकारे प्रवर्तंते । माता पुत्रे पुत्रोमातरि एवं यूयमप्यन्योन्यमुपकारे मूर्छिताः । कथमित्याह पिंडपातंनैद्यं ग्लानस्य रोगिणः साधोर्यस्मात् ( सारेहत्ति ) अन्वेषयंते तथा (दलाहत्ति) ग्लानायददध्वं । चशब्दादाचार्यादिवैयावृत्त्यै प्रवर्तध्वं ततोगृहस्थतुल्याइत्यर्थः॥९॥ (एवमिति) एवं यूयं सरागः स्वनावस्तत्रस्थिताअन्योन्यं वशमुपागताः परस्परायत्ताः । यतयस्तु निःसंगाः कस्य चिदायत्तानस्युः । ततोगृहस्थानामयं न्यायइति । तथा नष्टसत्पथसन्नावाः गतसन्मार्गपरमार्थाएवंनूतायूयं संसारस्य । अपारगाः न पारगामिनः ॥ १० ॥

---

॥ टीका–यत्ते प्रज्ञापंते तद्दर्शयितुमाह । ( संबद्धेत्यादि ) समेकीनावेन परस्परोपकार्योपकारितयाच बद्धाः पुत्रकलत्रादिस्नेहपाशैः संबद्धागृहस्थास्तैः समस्तुल्यः कल्पोव्यवहारोनुष्ठानं येषांते संबद्धसमकल्पागृहस्थानुष्ठानतुल्यानुष्ठानाइत्यर्थः । तथाहि । यथा गृहस्थानामयं न्यायोयडुतपरस्मै परस्परोपकारेण माता पुत्रे पुत्रोपि मात्रादाविल्येवंमूर्छिताअभ्युपपन्नाएवं नवंतोप्यन्योन्यं परस्परतः शिष्याचार्याद्युपकारक्रियाकल्पनया मूर्छिताः । तथाहि । गृहस्थानामयं न्यायो यडुतपरस्मै दानादिनोपकारइति नतु यतीनां । कथमन्योन्यं मूर्छिताइति दर्शयति । पिंडपातं नैद्यं ग्लानस्याऽपरस्य रोगिणः साधोर्यद्यस्मात् (सारेहत्ति) अन्वेषयंते । तथा (दलाहयत्ति) ग्लानयोग्यमाहारमन्विष्य तडुपकारार्थं ददध्वं । चशब्दादाचार्यादेः वैयावृत्त्यकरणाद्युपकारेण वर्तध्वं ततोगृहस्थसमकल्पाइति ॥ ९ ॥ सांप्रतमुपसंहारव्याजेन दोषदर्शनायाह । ( एवमित्यादि ) एवं परस्परोपकारादिना यूयं गृहस्थाइव सरागस्थाः सहरागेण वर्ततइति सरागः स्वनावस्तस्मिन् तिष्ठंतीति ते तथा अन्योन्यं परस्परतोवशमुपागताः परस्परायत्ताः । यतयोहि निःसंगतया नकस्यचिदायत्ता नवंति । यतोगृहस्थानामयंन्याय इति।तथा नष्टोऽपगतः सत्पथः सद्भावः सन्मार्गः परमार्थोयेन्यस्ते तथा । एवंनूताश्च यूयं संसारस्य च दुर्गतिभ्रमणलक्षणस्याऽपारगा अतीरगामिनइति ॥ १० ॥

अह ते परिन्नासेज्जा, निरकू मोरकविसारए ॥ एवं तुम्ने पन्नासं
ता, डुपरकं चेव सेवह ॥११॥ तुम्ने नुंजह पाएसु, गिलाणो अ
निहडंमिया ॥ तंच बीउदगं नोच्चा,तमुदिस्सादिजंकडं ॥ १२ ॥

अर्थ–हवे ते अन्य तीर्थिउने साधु उत्तर आपेठे अह के० अथ एवुं कह्या नंतर तेके० ते असाधु प्रत्ये परिन्नासेज्जा के० साधु एवीरीते बोले परंतुते बोलनार निरकू के० साधु केवाठे तो के मोरकविसारए के० मोक्षमार्गना विशारद एटले जाण ते अ साधु प्रत्ये कहेठेके एवंके० एम पूर्वोक्त न्यायें तुम्नेके० अहो तुमे पन्नासंताके०एम बोलता थका डुपरकंचेव के० निश्चें थकी बे पक्षने सेवह के० सेवो ठो एटले रागद्वेषरूप बन्ने पक्षने सेवोठो कारण के एकतो पोते अनाचारी ठो सदोष पक्षीठो माटे अने बीजा निर्दोषी साधुना निंदकठो माटे बेहु पक्षना सेवनारठो अथवा बीज उदक उद्देशिकादिक नोगवतां गृहस्थ समानठो अने लिंग ग्रहण कर्युं माटे यति समान देखवा मात्रठो एम बन्ने पक्षने सेवोठो ॥ ११ ॥ हवे आजीविकादिक परतीर्थिकोनो आचार कही देखाडेठे. तुम्ने के० तमे एम कहोठो के अमे निःकंचन ठैयें अने तमे जे नुंजह के० नोगवोठो तेपण पाएसु के० कांशादिक धातुना जे गृहस्थना पात्र तेने विषे नोजन करोठो तेमाटे तमे सपरिग्रहीठो तथा आहारादिकनी मूर्छा करोठो माटे निःपरिग्रहि शीरीतें थशो वली गिलाणो के० गिलानने अर्थे निक्षा अटनने विषे असमर्थ ठतां अनिहडंमियाके०गृहस्थने हाथे आणी देवाडोठो तंचके०तेहिज दोष देखाडेठे बीउद गंके० जे गृहस्थे बीज अने उदकनुं मर्दन करीने तमुदिस्सादिजंकडं के०ते ग्लानने अर्थे उद्देशीने जे आहार नीपजाव्यो तेने नोच्चाके० नोगवया थकी तमने दोष लागेठे॥१२

॥ दीपिका–अथात्रपूर्वपक्षे दोषमाह । (अहतेइति)। अथ तान् परवादिनएवमुपस्थितान् निक्षुः परिनाषेत ब्रूयात् । किंनूतोनिक्षुः मोक्षविशारदः।एवं यूयं प्रनाषमाणाडुष्पक्षं डुष्टं पक्षं सेवध्वं । यद्वा द्विपक्षं रागद्वेषात्मकं पक्षद्वयं सेवध्वं । तथाहि । सदोषेपि स्वमते रागः । निर्दोषेप्यस्मन्मते द्वेषः । अथवा बीजोदकोद्दिष्टादिनोजित्वाद्गृहस्थायूयं यतिलिंगांगीकाराच्च प्रव्रजिताइतिपक्षद्वयं ॥ ११ ॥ परमतीनामसदाचारं दर्शयति । (तुम्नेति) हेपरमतिनोयूयं पात्रेषु कांस्यपात्र्यादिगृहस्थनाजनेषु नुंग्ध्वं नोजनं कुरुध्वं। ततः कथं निष्परिग्रहाः।तथा ग्लानस्य निक्षाटनं कर्तुमसमर्थस्य यदपरैर्गृहस्थैरन्याहृतं कार्यते नवद्भिः यतेरानयनाधिकारानावात् । तद्दृष्टं नवतां यच्च गृहस्थैर्बीजोदकाद्युपमर्देन निष्पादितमाहारं नुक्त्वा ग्लानमुद्दिश्योद्देशिकादियत्कृतं यन्निष्पादितं तदवश्यं युष्मत्परिनोगाय

समेतश्चवतिष्ठते । तदेवं गृहस्थगृहे तद्भाजनेषु भुंजानाग्लानस्य च गृहस्थैः कारयंतोयूयं अवश्यं बीजोदकादिभोजिनउद्देशकादिकृतभोजिनश्चेति ॥ १२ ॥

---

॥ टीका–अयं तावत्पूर्वपक्षोस्य च दूषणायाह । (अहतेपरिभासेज्ञात्यादि) । अथानंतरं तानेवं प्रतिकूलत्वेनोपस्थितान् भिक्षुः परिभापेत ब्रूयात् । किंभूतो मोक्षविशारदो मोक्षमार्गस्य सम्यक्ज्ञानदर्शनचारित्ररूपस्य प्ररूपकः । एवमनंतरोक्तं यूयं प्रज्ञापयमाणाः संतः दुष्टःपक्षोडुपक्षोऽसत्प्रतिज्ञाभ्युपगमस्तमेव सेवध्वं यूयं यदिवा रागद्वेषात्मकं पक्षद्वयं सेवध्वं यूयं । तथाहि । सदोपस्याप्यात्मीयपक्षस्य समर्थनाद्रागो निष्कलंकस्याप्यस्मदभ्युपगमस्य दूषणाद्वेषोऽथैवं पक्षद्वयं सेवध्वं यूयं । तद्यथा । वक्ष्यमाणनीत्या बीजोदकोद्दिष्टकृतभोजित्वाद्गृहस्थाः यतिलिंगाभ्युपगमात्किल प्रव्रजिताश्चेत्येवं पक्षद्वयासेवनं भवतामिति । यदिवा स्वतोऽसदनुष्ठानमपरंच सदनुष्ठायिनां निंदनमितिभावः ॥ ११ ॥ आजीविकादीनां परतीर्थिकानां दिगंबराणां वा सदाचारनिरूपणायाह ।(तुब्भे भुंजहेत्यादि) किल वयमपरिग्रहतया निष्किंचनाएवमभ्युपगमं कृत्वा यूयं भुंग्ध्वं पात्रेषु कांस्यपात्र्यादिषु गृहस्थभाजनेषु तत्परिभोगाच्च तत्परिग्रहोऽवश्यं भावी । तथाऽहारादिषु मूर्छां कुरुध्वमित्यतः कथं निष्परिग्रहाभ्युपगमोभवतामकलंकइति । अन्यच्च ग्लानस्य भिक्षाटनं कर्तुमसमर्थस्य यदपरैर्गृहस्थैरभ्याहृतं कार्यते । भवद्भिर्यतोरानयनाधिकाराभावाद्गृहस्थानयने च योदोपसद्भावः सभवतामवश्यंभावीति । तमेव दर्शयति । यच्च गृहस्थैर्बीजोदकाद्युपमर्दनापादितमाहारं भुक्त्वा तं ग्लानमुद्दिश्योद्देशकादि यत्कृतं यन्निष्पादितं तदवश्यं परिभोगायावतिष्ठते । तदेवं गृहस्थगृहे तद्भाजनादिषु भुंजानास्तथा ग्लानस्य च गृहस्थैरेव वैयावृत्यंकारयंतो यूयमवश्यं बीजोदकादिभोजिनउद्देशिकादिकृतभोजिनश्चेति ॥ १२ ॥

लित्ता तिव्वा भितावेणं, उज्झा असमाहिया ॥ नातिकंडूइयं से
यं, अरुयस्सावरज्झती ॥ १३ ॥ तत्तेण अणुसिट्ठा ते अपडिन्नेण
जाणया ॥ एएस णियए मग्गे, असमिक्खा वती किती ॥ १४ ॥

अर्थ–तिव्वाभितावेण के० तुमे छ काय जीवनी विराधना तथा साधुनी निंदारूप तीव्र तापे एटले संतापे करी लित्ता के० लिप्तछो तथा उज्झा के० विवेक रहितछो वली असमाहिया एटले शुभध्यान रहितछो माटे जेम नातिकंडूइयं सेयं के० कंडू एटले खुजली तेने अत्यंत खणवी श्रेयकारी नथी किंतु अरुयस्स के० गुंबडाने खणुं थकुं अवरज्झती के० अपराधियें पणा दोषनी वृद्धि करे तेम तमने साधु साथे द्वेप पणुं करवुं श्रेय नथी ॥ १३ ॥ अपडिन्नेण के० जे खराने खोटुं वेरावबुं अने खोटाने

खरुं ठेरावत्रुं एवी जेनी प्रतिज्ञा नथी ते अप्रतिज्ञ रागद्वेष रहित तथा जाणया के० जाणते एवे संयत तत्वे सहित तेने हेयोपादेय परमार्थे जाण्याविना तत्तेण अणुसि छाते के० परमार्थे करीने ते असाधु छे एम तेना मार्गने दोष देखाडवानुं तमने कोणे शिखव्युं णएसणीयएमग्गेके० माटे अहो तुमारो उपमार्ग ते निश्चय मलतो नथी जे कारणे गिलानने अशनादिक आपे ते गृहस्थ समान जाणवा एवो तमे कह्यो छो परंतु ए असमिरकावती के० अणआलोच्याना बोलनारनुं कती के० जे कर्तव्य अनुष्ठान ते पण अणआलोच्योज देखायछे. ॥ १४ ॥

॥दीपिका–(लित्तेति) तीव्रतापेन साधुनिंदारूपेण लिप्ताव्याप्ताः(उन्नवेति)निर्विवेका उद्देशकादिनोजित्वात् असमाहिताः शुभाध्यवसायरहिताः । दृष्टांतमाह । यथाऽरुपोव्रणस्यातिकंडूयितं नश्रेयः किंतु अपराध्यति दोषंकरोति एवं यूयमपि निर्विवेकाःवयं किल निष्किंचनाइति कृत्वा कांस्य पात्रादिकं परिहृत्यैतदन्नावादवश्यमशुद्धाहारपरिनोगकारिणः निष्किंचनत्वात्पात्रादिपरिहारोनश्रेयो व्रणस्यातिकंडूयितमिव॥१३॥ ( तत्तेणेति) ते गोशालमतानुसारिणआजीविकादयोदिगंबरावा तत्वेनाऽनुशासिताः शिक्षांग्राहिताः केन अप्रतिज्ञेन इदंमया समर्थनीयमिति प्रतिज्ञा सा नास्ति यस्याऽसावप्रतिज्ञोरागद्वेषरहितः साधुस्तेन जानताज्ञानवता । कथमनुशिष्टाइत्याह । (णएसेति) । योनवद्भिरंगीकृतः सनियतोन युक्तिक्षमोमार्गः । याच साधुनिंदा वाक् सा समीक्ष्योक्ता आचार्यकथिता। तथाकृतिः क्रियाप्यविचाररम्यैव ॥ १४ ॥

॥ टीका–किंचान्यत् ( लित्ताइत्यादि ) यूयं षट्जीवनिकायविराधनयोद्दिष्टनोजित्वेना निगृहीतमिथ्यादृष्टितया च साधुपरिनाषणेन च तीव्रोनितापः कर्मबंधरूपस्तेनोपलिप्ताः संवेष्टितास्तथा (उन्नयत्ति) सद्विवेकशून्यानिक्षापात्रादित्यागात्परगृहनोजितयोद्देशकादिन्नोजित्वात् । तथा असमाहिताः शुनाध्यवसायरहिताः सत्साधुप्रद्वेषित्वात् । सांप्रतं दृष्टांत द्वारेण पुनरपि तद्दोषाभिधित्सयाह। यथाऽरुपोव्रणस्यातिकंडूयितं नखैर्विलेखनं नश्रेयोनशोननं नवति । अपित्वपराध्यति तत्कंडूयनं व्रणस्य दोषमावहति । एवं नवंतोपि सद्विवेकरहिताः वयं किल निष्किंचनाइत्येवं निष्परिग्रहतया षट्जीवनिकायरक्षणनूतं निक्षापात्रादिकमपि संयमोपकरणं परिहृतवंतः । तदन्नावाच्चावश्यं नावी अशुद्धाहारपरिनोगइत्येवं द्रव्यक्षेत्रकालनावानपेक्षणेन नातिकंडूयितं श्रेयोनवतीति नावः॥१३॥ अपि च । (तत्तेणेत्यादि) तत्वेन परमार्थेन मौनींद्राभिप्रायेण यथावस्थितार्थप्ररूपणया ते गोशालकमतानुसारिणआजीविकादयः कोटिकाअनुशासितास्तदन्युपगमदोषदर्शनद्वारेण शिक्षांग्राहिताः । केनाप्रतिज्ञेन । नास्य मयेदमसदपि समर्थनीयमित्येवं प्रतिज्ञा विद्यते

इत्यप्रतिज्ञोरागद्वेषरहितः साधुस्तेन जानता हेयोपादेयपदार्थपरिच्छेदकेनेत्यर्थः । कथमनुशासितात्याह । योयं भवद्भिरभ्युपगतोमार्गो यथा यतीनां निष्किंचनतयोपकरणाभावात् परस्परतउपकार्योपकारकाभावस्त्येपनियतोनिश्चितोन युक्तिसंगतोऽसो येयं वाग् यथा ये पिंडपातं ग्लानस्यानीय ददति ते गृहस्थकल्पाइत्येषा असमीक्ष्याभिहिता अपर्यालोच्योक्ता तथा कृतं करणमपि भवदीयमसमीक्षितमेव यथा वा पर्यालोचितकरणता भवति भवदनुष्ठानस्य तथा नातिकंकृथितं श्रेयइत्यनेन प्राग्लेशतः प्रतिपादितं पुनरपि सदृष्टांतं तदेव प्रतिपादयंति ॥ १४ ॥

एरिसा जावई एसा, अग्गवेणु वकरिसिता ॥ गिहिणो अभिहडं सेयं, भुंजीउं णउ भिक्कणो ॥१५॥ धम्मपन्नवणा जासा, सारंभा ण विसोहिआ ॥ णउ एयाहि दिठीहिं, पुब्वमासि पग्गप्पिअं॥१६॥

अर्थ–एरिसाजावईएसा के० जो एटले आमंत्रणे करीने तमारी एवी वाणीजे ग्लानने आहारलावी नआपवो ते अग्गवेणुव्व करिसिता के० वंशना अग्नी तरखी अत्यंत सुक्ष्म एटले कोइ पण युक्तिने खमे नही एवी तमारी वाणी केही ते कहेछे गिहिणो अभिहडंसेयं के० तमे कह्यु जे गृहस्थनो आणेलो आहार श्रेयछे भुंजीउं के० ते भोगववो परंतु णउभिक्कणो के०यतिनो आणेलो आहार यतिने लेवो अयोग्यछे ए तमारुं वचन रुडुं नथी अमे एम कहियेछये के गृहस्थनो आण्यो आहार सदोषछे अने यतिनो आण्यो आहार निर्दोषछे ॥ १५ ॥ वली साधु तेने कहेछे के धम्मपन्नवणाजासा के० जे तमारी धर्म प्रज्ञाप्ता एटले धर्मदेशना छे यतिने दाननो देवो नथी सारंभाण विसोहिया के० केमके दान जे छेते ते सारम्भ जे गृहस्थ तेनी विशुद्धिनो करनार जाणवो कारण के यतितो पोताना अनुष्ठाने शुद्धि पामेछे यतिने दान देवानो अधिकार नथी एयाहिं दिठीहिं के० एम तमारी दृष्टीमां जे आवेछे परतु ए प्रकारे पुब्वमासिं के० ते पूर्वे तीर्थंकर यथा तेणे णउपग्गप्पिअं के० नथी प्ररूप्यो एटले जेरीते तमे मे कह्योछो तेरीतनो धर्म सर्वज्ञे कह्यो नथी ॥ १६ ॥

॥ दीपिका–(एरिसेति) ईदृशी एषा वाक् साधुना ग्लानस्यानीय न देयमिति एषा वाक् अग्रवेणुवत् वंशवत् निकरिषिता दुर्बला यथा वशाग्रं दुर्बलं स्यात्तथा दुर्बलेत्यर्थः । तामेव वाचं दर्शयति । गृहिणायदभ्याहृतं तद्यथा भोक्तुंश्रेयोनतु भिक्षूणां । गृहस्थाभ्याहृतं जीवोपमर्दहेतुत्वात् साधूनामकल्पमिति ॥१५॥ ( धम्मपन्नवणेति ) या धर्मस्य प्रज्ञापना देशना यतीनां दानादिना उपकर्तव्यमित्येवंभूता सारंभाणां गृहस्थानां विशोधिका विशुद्धिकारिणी । यतयः स्वस्वानुष्ठानेनैव शुध्यंति नतु तेषां दानाधिकारः । एतद्दूषयति । नतुएतामि

दृष्टीनिर्युष्मन्मतानुगतानिः पूर्वमादौ सर्वज्ञैः प्रकल्पितं प्ररूपितमासीत् न हि सर्वज्ञा एवंवि धमसारं ब्रुवते । यक्गृहस्थैर्ग्लानवैयावृत्त्यं कार्यं नतूपयुक्तेन संयतेनेति । ग्लानोपका रोनवद्भिरप्यनुमतोगृहस्थप्रेरणादनुमोदनाच्च ॥ १६ ॥

॥ टीका—यथा प्रतिज्ञातमाह । (एरिसेत्यादि) येयमीदृक्षा वाक् यतिना ग्लानस्यानी य नदेयमित्येषा अग्रे वेणुवंशवत्कर्षिता तन्वी युक्त्यक्षमत्वात् दुर्बलेत्यर्थः । तामेव वा चं दर्शयति । गृहिणां गृहस्थानां यदभ्याहृतं तद्यतेर्नोक्तुं श्रेयः श्रेयस्करं नतु भिक्षूणां संबंधीति । अग्रे तनुत्वं चास्या वाचएवं दृष्टव्यं । यथा गृहस्थाभ्याहृतं जीवोपमर्दन नव ति यतीनांतूद्गमादि दोषरहितमिति ॥ १५ ॥ किंच । (धम्मपण्णवणेत्यादि) धर्मस्य प्र. ज्ञापना देशना यथा यतीनां दानादिनोपकर्तव्यमित्येवंभूता या सा सारंजाणां गृहस्था नां विशोधिकायतयस्त्वनुष्ठानेनैव विशुध्यंति । नतु तेषां दानाधिकारोस्तीत्येतत् दूष यितुं प्रक्रमते । नतु नैवतानिर्यथागृहस्थेनैव पिंमदानादिना यतेर्ग्लानाद्यवस्थायामु पकर्तव्यं । नतु यतिभिरेव परस्परमित्येवंभूतानिर्युष्मदीयाभिर्दृष्टिभिर्धर्मप्रज्ञापनादि भिः पूर्वमादौ सर्वज्ञैः प्रकल्पितं प्ररूपितं प्रख्यापितमासीदिति । यतो नहि सर्वज्ञाएवं भूतं परिफल्गुप्रायमर्थं प्ररूपयंति यथा असंयतैरेषणाद्यनुपयुक्तैर्ग्लानादेर्वैयावृत्त्यं विधे यं नतूपयुक्तेन संयतेनेति । अपिच भवद्भिरपि ग्लानोपकारोऽभ्युपगतएव । गृहस्थप्रेरणा दनुमोदनाच्च ततोभवंतस्तत्कारिणस्तत्प्रद्वेषिणश्चेत्यापन्नमिति ॥ १६ ॥

सव्वाहिं अणुजुत्तीहिं, अचयंताजवित्तए ॥ ततो वायं णिराकि
च्चा, ते भुज्जोवि पगब्भिए ॥ १७ ॥ रागदोसाभिभूयप्पा, मिछत्ते
ण अभिद्दुता ॥ आउस्स सरणं जंति, टंकणाइव पव्वयं ॥ १८ ॥

अर्थ—सव्वाहिं के० ते गोसालादिक मतानुसारी अन्य समस्त अणुजुत्तीहिं के० अ नुयुक्ति एटले हेतु दृष्टांते करी अचयंताजवित्तए के० पोताने पक्षे पोतानो पक्ष स्थापन करवाने असमर्थ थता ततो के० ते माटे वायंणिराकिच्चाके० वाद मूकीने तेभुज्जो के० ते फरी फरी विपगब्भिए के० विशेषे धृष्टपणु करे एटले एम कहेके अमारे जेम परं परागतछे तेज श्रेष्ठछे अन्यथा अमारे कांइ काम नथी इत्यादिक कहीने धृष्ट पणु अंगी कार करे पण युक्ति पूर्वक जैनमतानुसारीने उत्तर आपी शके नहीं ॥ १७ ॥ ते रागदो स के० राग अने द्वेषे अभिभूयप्पाके० पराभव्या थका सारी युक्तिये करी प्रत्युत्तर आ पवाने असमर्थ एवा मिछत्तेण के० मिथ्यादृष्टियें करीने अभिद्दुता के० व्यापथका आ उस्ससरणंजंति के० ते अनार्य अनेक आक्रोस ५[illegible] वचने [illegible] ५था [illegible] हण

वानो जे व्यापार तेनुं शरण ग्रहण करे टंकणाइव पर्वयं के० जेम टंकण एटले म्लेछादिक लोको जेठे ते शस्त्रादिके करी युद्ध करवाने असमर्थ थता पर्वतनो सरण ग्रहण करे तेम पूर्वोक्त कुतीर्थिकोपण युक्तिपूर्वक उत्तर देवाने असमर्थ थता क्रोधनो सरण अंगीकार करे. ॥ १८ ॥

॥ दीपिका–( सर्वेहिंति ) तेगोशालमतीयादिगंबरावा सर्वानिरनुगतयुक्तिनिः स्वपक्षं यापयितुमशक्नुवंतस्थापयितुस्ततोवादं निराकृत्य ते तीर्थिका नूयोपि प्रगल्भितां गताः वादपरित्यागेपि स्वधर्मस्थापनं नामुंचन्निति ॥ १७ ॥ ( रागेति ) रागद्वेषाभिनूतात्मानो मिथ्यात्वेनाऽनिद्रुताव्याभावादं कर्तुमसमर्थाआक्रोशेन शरणं यांति असन्यवचनानि दंभादिहननव्यापारंवा स्वीकुर्वंतीत्यर्थः । यथा टंकणाम्लेछविशेषाः परैरनिद्रुताः पर्वतं शरणंयांति ॥ १८ ॥

॥ टीका–अपिच ( सव्वाहिन्यादि ) ते गोशालकमतानुसारिणोदिगंबरावा सर्वानिरर्थानुगतानिर्युक्तिनिः सर्वैरेव हेतु दृष्टांतैः प्रमाणनूतैरशक्नुवंतः स्वपक्षे आत्मानं यापयितुं संस्थापयितुं ततस्तस्माद्युक्तिनिः प्रतिपादयितुं सामर्थ्यानावाद्वादं निराकृत्य सम्यग्हेतुदृष्टांतैर्योवादोजल्पस्तं परित्यज्य ते तीर्थिकान्नूयः पुनरपि वादपरित्यागे सत्यपि प्रगल्भिता धृष्टतां गताइदमूचुः । तद्यथा । पुराणं मानवोधर्मः सांगोवेदश्चिकित्सितं । आज्ञासिद्धानिचत्वारि न हंतव्यानि हेतुनिः ॥ १ ॥ अन्यच्च किमन्यया वहिरंगया युक्त्या ऽनुमानादिकया ऽत्र धर्मपरिक्षणे विधेये कर्तव्यमस्तियातः प्रत्यक्षएव बहुजनसंमतत्वेन राजाद्याश्रयणाच्चायमेवास्मदनिप्रेतोधर्मः श्रेयान्नापरऽस्त्येव विवदंते तेषामिदमुत्तरं । नह्यत्र ज्ञानादिसाररहितेन बहुनापि प्रयोजनमस्तीति । युक्तं च । एरंमकठरासी जहायगोसीस चंदनपलस्स । मोल्लेन होज्ज सरिसो किंतियमेत्तो गणिज्जंतो ॥ १ ॥ तहविगणणातिरेगो जहारासी सोनचंदनसरिछो ॥ तहनिविणाणमहो जणो विमोक्षे विसंवयति ॥ २ ॥ एक्कोसचरकुगोग्गविमूढापमाण जेगइणयाणति ॥ संसारगमणगुविलंणिउणस्सयबंधमोरकम्स ॥ ३ ॥ ऽत्यादि ॥ १७ ॥ अपिच ( रायदोस्साइत्यादि ) रागश्रप्रीतिलक्षणोद्वेषश्च तद्विपरीतलक्षणस्ताभ्याममिनूतआत्मायेषां परतीर्थिकानां ते । तथा मिथ्यात्वेन विपर्यस्तावबोधेनातत्वाऽध्यवसायरूपेणानिद्रुताव्याप्ताः सद्युक्तिनिर्वादं कर्तुमसमर्थाः क्रोधानुगाआक्रोशानसत्यवचनरूपांस्तथा दंममुष्ट्यादिनिश्च हननव्यापारं यांत्याऽश्रयंते । अस्मिन्नेवार्थे प्रतिपाद्ये दृष्टांतमाह । यथा टंकणाम्लेछविशेषाऽउर्जयायदा परेण बलिना सानीकादिनानिद्रूयंते तदा ते नानाविधैरप्यायुधैर्योद्धुमसमर्थाः संतः पर्वतं शरणमाश्रयंत्येवं तेपि कुतीर्थिकावादपराजिताः क्रोधाद्युपहत

दृष्टयआक्रोशादिकं शरणमाश्रयंते । नच ते इदमाकलय्य प्रत्याक्रोष्टव्याः । तद्यथा ।अ क्कोसहणणमारण धम्मकंसाणवाल सुलनाणं।लाजंमन्नइधीरो जहुत्तराणंअनावंमि॥१८॥

बहुगुणप्पगप्पाइं, कुज्जाअत्तसमाहिए ॥ जेणन्नेणोविरुझेज्जा, तेण तंतं समायरे ॥ १९ ॥ इमं च धम्म मादाय,कासवेण पवेइयं ॥ कुज्जा भिक्खू गिलाणस्स, अगिलाए समाहिए ॥ २० ॥ संखाय पेसलं धम्मं, दिठि मं परिनिव्वुडे ॥ उवसग्गे नियामित्ता,आमोरकाए परिव्वएज्जा सित्तिबेमि ॥ २१ ॥ इति ततीय अज्झयणस्स तईउ उद्देसो सम्मत्तो.

अर्थ–परंतु जे साधुछे ते तेमनी साथे आक्रोशादिक करे नही किंतु ज्यां बहुगुण के० घणागुणछे एटले प्रतिज्ञा हेतु दृष्टांत उपनय निगम नय इत्यादिक प्पगप्पाइं के प्रकल्पिये एवा मध्यस्थपणाना कारणने कुज्जा के० करे वली जे थकी अत्त के० आ त्मा समाहिए के० समाधिवंत रहे एवा अनुष्ठान करे जेणन्नेणो विरुझेज्जा के० जे अ नुष्ठानकस्याथी अथवा जे वचन बोल्या थकी अन्यपुरुष विरोध नपामे तेवुं कार्य करे तेण के० तेमाटे तंतं के० ते ते विधि समायरे के० समाचरे ॥१९॥ एरीते परमत नि राकरण करी उपसंहारे स्वमत स्थापन करतां कहेछे इमंके० ए पूर्वोक्त वचनरूप धम्म मादाय के० धर्मने ग्रहण करीने ते धर्म कासवेण पवेइयंके० काश्यप एटले श्रीमहावीर देवे प्रवेद्यो च शब्द थकी अन्य मतिनु निराकरण करीने प्रवेद्यो एटले कह्यो ते केवीरीते तो के भिरकूके० साधु जे छे ते गिलाणस्स के० गिलाननी कुज्जाके० वैयावच्च करे अगि लाए समाहिए के० परंतु अगिलान पणे करे जेम पोताने तथा गिलानने समाधि उत्पन्न थाय तेवीरीते वैयावच्च करे ॥२०॥ संखायपेसलंधम्मं के० ते पेसल एटले मनो हर एवा सर्वज्ञ प्रणीत श्रुत चारित्ररूप धर्मने सम्यक् प्रकारे जाणीने दिठिमं के० दृष्टी मंतसाचा तत्वनो जाण परिनिव्वुडेके०परिनिवृत्त एटले क्रोधना उपशम थकीशीतलभूत थएलो एवो साधु तेने उवसग्गेके० उपसर्ग उदय आव्या छता नियामित्ताके० तेने सह न करीने आमोरकाय के० मोक्ष प्राप्तिसुधी परिव्वएज्जासि के० शुद्धो संयम पालतो थ को प्रवर्त्ते. तिबेमिनो अर्थ पूर्ववत् जाणवो. ॥२१॥ इति श्रीद्वितीयसूत्रकृतांगे प्रथमश्रु तस्कंधे तृतीयाध्ययने उपसर्ग परिज्ञानाम स्तृतीयोद्देशकः समाप्तः ॥

॥ दीपिका–( बहुगुणेति ) । बहवोगुणाः स्वपक्षसिद्ध्यादयः प्रकल्पंते प्रादुर्भवंति ये षु तानि बहुगुणप्रकल्पानि प्रतिज्ञाहेतुदृष्टांतोपनयनिगमनादीनि मध्ये स्ववचनानि वाऽनु ष्ठानानि साधुर्वादकाले कुर्यात् । कीदृशः साधुः आत्मसमाधिकश्चित्तस्वास्थ्यवान् । तत्त

यस्य सोढा नोपसर्गैरुपसर्गितोऽसमंजसं विदध्यादित्येवमामोक्षायाशेपकर्मक्षयप्राप्तिं यावत्परिसमंतात् व्रजेत्संयमानुष्ठानोद्युक्तोभवेत् परिव्रजेदिति । परिसमाप्त्यर्थे । ब्रवीमीति पूर्ववत् ॥ २१ ॥ उपसर्गपरिज्ञायास्तृतीयोद्देशकः समाप्तः ॥ ३ ॥

---

अथ तृतीयाध्ययने चतुर्थोद्देशकस्य प्रारंभः

आहं सुमहापुरिसा, पुव्विं तत्ततवोधणा ॥ उदयेण सिद्धिमावन्ना, तत्र मंदोवसीयति ॥ १ ॥ अभुंजिया नमी विदेही, रामगुत्ते य भुंजिआ ॥ बाहुए उदगं भोच्चा, तहा तारागणेरिसी ॥ २ ॥

अर्थ—आहं सुमहा पुरिसाके० हवे ते परमार्थना अजाण एम कहेछेके महा पुरुष प्रधान पुरुष तारागणऋषि प्रमुख तेणे एवीरीते आहं एटले कह्युंछे शुंकह्युंछे तोके पुव्विंत तत्तके० पूर्वे कालनेविषे तमश्याना करनार तवोधणाके० तपरूप धनना धणी एवा अनेक ऋषीश्वर ते उदयेणके० उदक एटले शीतल पाणीनो परिभोग करता थका सिद्धिमावन्ना के० सिद्धिने पाम्या तेरीतनुं अन्य तीर्थिनुं वचन सांभलीने तत्रमंदोवसीयति के०मंद अज्ञानी बापडा तत्र एटले तेहिज शीतलोदकने विषे राचे ; पण प्रासुक उदकनो भोग नकरे, एरीते संयमानुष्ठानने विषे सीदाय. ॥ १ ॥ हवे कोइक कुतीर्थि होयते साधुने विप्रतारवाने अर्थे आवीरीते कहेके अभुंजिया के० अशनादिकने अण भोगवतो एवो नमीविदेही के० नमीराजा विदेह देशमां उत्पन्न थयेलो हतो, ते मुक्ति पोहोतो ; तथा अन्य तीर्थिक कहेछे के रामगुत्तेय भुंजिया के० रामगुप्त राजऋषीश्वर आहार भोगवतो थको मुक्ति पोहोतो, तथा बाहुए के० बाहुक ऋषीश्वर तहा के० तेमज तारागणेरिसी के० तारागणनामा ऋषीश्वर ए बंने उदगंभोच्चा के० शीतल पाणीना परिभोग थकी सिद्धिने पाम्या ॥ २ ॥

---

॥ दीपिका—सांप्रतं चतुर्थआरभ्यते । सच साधुना शीलरक्षणाय यत्नोविधीयतइत्यर्थवान् तस्य चेदमादिमं सूत्रं । (आहंसुइत्ति) केचिदविज्ञाततत्वाआहुरुक्तवंतः । यथा महापुरुषावल्कलचीरितारागणर्षिप्रमुखाः पूर्वं पूर्वकाले तप्तमनुष्ठितं तपएव धनं येषांते तप्ततपोधनाः पंचाग्न्यादिसाधकास्तएवंभूताउदकेन सचित्तोदकपरिभोगेण उपलक्षणात्कंदमूलादिभोजिनः सिद्धिमापन्नाः सिद्धिं गताः । तत्रैवंभूतार्थाकर्णने मंदोमूर्खोऽवसीदति संयमे सीदति शीतोदकादिपरिभोगे प्रवर्तते । तत्रैवं वेत्ति तेषां तापसानां कृतभिक्षातिस्मरणादिप्रत्ययादाविर्भूतसम्यग्दर्शनानां संयमप्रतिपत्त्याऽगतज्ञानावरणा

दिकर्मणां जरतादीनामिव मुक्तिः संजाता न तु शीतोदकपरिजोगादिति ॥ १ ॥ ( अ जुंजिएति ) केचित्कुतीर्थिकाअथवा स्वयूथ्याएवं शीतलविहारिण एवमाहुः। नमी राजा विदेहपुरवासिनोलोकावैदेहास्तेयस्य संति स वैदेही अशनादिकमजुक्त्वा सिद्धिं गतः। रामगुप्तश्च राजर्षिराहारादिकंजुक्त्वैव जुंजानएव सिद्धिं गतः। तथा बाहुकः शीतोद कादिपरिजोगं कृत्वा तथा तारागणनामा मुनिः शीतोदकादिपरिजोगात्सिद्धः ॥ २ ॥

---

॥टीका—उक्तस्तृतीयोदेशकः सांप्रतं चतुर्थः समारज्यते। अस्यचायमजिसंबंधः। इहानंतरो देशके अनुकूलप्रतिकूलोपसर्गाः प्रतिपादितास्तैश्च कदाचित्साधुः शीलात् प्रच्याव्येत तस्य च शीलस्खलितस्य प्रज्ञापनानेन प्रतिपाद्यते इति। अनेन संबंधेनायातस्यास्योदेशकस्यादिमं सू त्रं (आहंसुइत्यादि)। के चन अविदितपरमार्थाआहुरुक्तवंतः। किंतदित्याह। यथा महापुरु षाःप्रधानपुरुषावल्कलचीरितारागणर्षिप्रजृतयः। पूर्वं पूर्वस्मिन् काले तप्तमनुष्ठितं तपएव ध नं येषां ते तप्ततपोधनाः पंचाग्न्यादितपोविशेषेण निष्टप्तदेहास्तएवंजूताः शीतोदकपरिजो गेन उपलक्षणार्थत्वात् कंदमूलफलाद्युपजोगेन च सिद्धिमापन्नाः सिद्धिं गतास्तत्रैवंजूता र्थसमाकर्णने तदर्थसद्भावावेशात् मंदाःस्नानादित्याजितः प्रासुकोदकपरिजोगजग्नाः संय मानुष्ठाने प्रविषीदंति। यदि वा तत्रैव शीतोदकपरिजोगे विषीदंति लगति निमज्जतीति यावत्। न त्वसौ वराकएवमवधारयति यथा तेषां तापसादिव्रतानुष्ठायिनां कुतश्चि ज्जातिस्मरणादिप्रत्ययादाविर्जूतसम्यग्दर्शनानां मौनींद्रजावसंयमप्रतिपत्त्या अपगतज्ञा नावरणादिकर्मणां जरतादीनामिव मोक्षावाप्तिर्न तु शीतोदकपरिजोगादिति॥१ ॥ किंचा न्यत्। ( अजुंजियाणमित्यादि ) केच न कुतीर्थिकाः साधुप्रतारणार्थमेवमूचुः। यदिवा स्वयूथ्याः शीतलविहारिणएतद्वक्ष्यमाणमुक्तवंतस्तद्यथा निमीराजा विदेहोनाम जनप दस्तत्रजवावैदेहास्तन्निवासिनोलोकास्तेऽस्य संतीति वैदेही। सएवंजूतो निमीराजा अश नादिकमजुक्त्वा सिद्धिमुपगतस्तथा रामगुप्तश्च राजर्षिराहारादिकं जुक्त्वैव जुंजानएव सि द्धिं प्राप्तइति। तथा बाहुकः शीतोदकादिपरिजोगं कृत्वा तथा नारायणोनाममहर्षिः परिणतोदकादिपरिजोगात्सिद्धइति ॥ २ ॥

आसिले देवले चेव, दीवायण महारिसी, पारासरे दगं जो च्चा, बीयाणि हरियाणिया॥ ३॥ एते पुव्वं महापुरिसा, आहिता इह संमता ॥ जोच्चा बीउदगं सिद्धा, इति मेयमणुस्सुअं ॥ ४॥

अर्थ—वली आसिले के० आसिल तथा देवले के० देवल चेव के० एमज दीवाय णमहारिसी के० दीपायन महाकृषीश्वर अने पारासरे के० पाराशर ए सर्वे इपीउ उ

दगंनोच्चा के० शीतलपाणीने नोगवी तथा बीयाणि के० बीजकाय हरियाणिय के० हरिकायना परिनोग थकी सिद्ध थया ॥ ३ ॥ एते के० ए नेमीराज रूपी प्रमुख पुवं महापुरिसाके० पूर्वकालनेविषे महा पुरुष (आहिताके०)कह्या ने ते इहके० आलोकने विषे संमता के० प्रसिद्धने ते कुतीर्थिक अथवा साताशील स्वयूथिक एम कहे के ए सर्वे बीउदगं के० बीज सचेतपाणीने नोच्चा के० नोगवीने सिद्धा के० सिद्ध थया इतिके० एम मेयं के० ए अमे महानारतादिक तथा पुराणोमांथी अणुस्सुयं के० सांनल्युंछे. माटे अमे पण एवीज रीते मुक्ति साधशुं ॥ ४ ॥

॥ दीपिका-( असिलेति ) । असिलोनाम महर्षिस्तथा देवलोद्वैपायनः पराशराख्यइत्यादयः शीतोदकबीजहरितादिनोजिनःसिद्धाः ॥ ३ ॥ ( एतइति ) एते पूर्वोक्तामहापुरुषानम्यादयः पूर्वकाले त्रेताद्वापारादौ आख्याताः प्रसिद्धाः इहाप्यार्हतमते रुषिनापितादौ केचन संमता इत्येवं कुतीर्थिकाः प्रोचुः । एते सर्वेपि बीजोदकादिनोगात्सिद्धाइति मया नारतादौ पुराणे श्रुतं ॥ ४ ॥

॥टीका-अपिच । (असिलेइत्यादि) । असिलोनाम महर्षिर्देवलोद्वैपायनश्च तथा पराशराख्यइत्येवमादयः शीतोदकबीजहरितादिपरिनोगादेव सिद्धाइति श्रूयते ॥३॥ एतदेव दर्शयितुमाह । (एतेइत्यादि) एते पूर्वोक्तानम्यादयोमहर्षयः पूर्वमिति पूर्वस्मिन्काले त्रेताद्वापरादौ महापुरुषाइति प्रधानपुरुषाआसमंतात् ख्याताः प्रख्याताराजर्षित्वेनप्रसिद्धिमुपगताइहाप्याहितप्रवचने रुषिनापितादौ केचन संमताअनिप्रेताइत्येवं कुतीर्थिकाः स्वयूथ्यावा प्रोचुः । तद्यथा । एते सर्वेपि बीजोदकादिकं जुक्त्वा सिद्धाइत्येतन्मया नारतादौ पुराणे श्रुतं ॥ ४ ॥

तन्न मंदा विसीअंति, वाहछिन्नाव गद्दना ॥ पिठतो परिसप्पंति
पिठसप्पी च संनमे ॥ ५ ॥ इह मेगेउ नासंति, सातं सातेण विज्जती ॥ जे तन्न आरिअं मग्गं, परमं च समाहिए ॥ ६ ॥

अर्थ-तत्तके० त्यां कुशास्त्र जे नारतपुराणादिक तेने सांनलवे करी तथा परिसह उपने थके मंदाविसीअंति के० कोइक मंद अज्ञानी चारित्र थकी सीदाय कोनीपेरे तोके वाहछिन्नावगद्दना के० जेम नार थकी नागा एवा जे गर्दन ते मार्गमांज नार नाखीदेइने नासीजाय अथवा पिठतोपरिसप्पंति के० एट सर्प एटले नग्न गति पुरुष संनमे के० संनमी पणे अग्न्यादिक उपद्रव उपने थके पिठमप्पिय के० नागीजनार मनुष्य

नी पठवाडे दोडतो जाय परंतु अग्रगामि नथाय अग्नीमांहेज विनाश पामे तेम जे शीतल विहारी ठे तेपण मुक्तिना अग्रगामी नथाय अनंतोकाल संसारमांहेज भमे ॥५॥ इह्के० ए मोक्षमार्ग विचारवाने प्रस्तावे एगेउ के० कोइक शाक्यादिक अथवा स्वतीर्थि लोच प्रमुख कष्टे पीड्या थका एम कहेके सातंके० ते जे मुक्तिना सुख ठे ते सातेणके० सुखे करीज विद्यती के० थाय परंतु डुःख थकी सुख न थाय. यथा शालिबीजाछाल्यांकुरो, जायतेनयवांकुर ऽतिवचनात् माटे लोचादिक कष्ट थकी मुक्ति शीरीते थशे एवीरीते बोलीने जेके० जे कोइक शाक्यादिक तह के० त्यां मोक्षविचारणाने प्रस्तावे आरिय के० श्रीतीर्थंकर देव तेनो प्ररुप्यो एवो जे मग्गं के० मोक्षमार्ग तेने मूकी आपेठे, ते परमंचसमाहियं के० परम समाधिनो कारण जे ज्ञान दर्शन अने चारित्ररूपठे तेने त्यागीने घणो संसारमांहे परिभ्रमण करेठे. तेहिज देखाडेठे ॥ ६ ॥

---

॥ दीपिका–( तत्रेति ) तत्र कुमतश्रवणोपसर्गे मंदाविषीदंति संयमे सीदंति । य था वाहेन भारेण भिन्नाखुटितारासनाः सीदंति । कोर्थः । यथा रासभाभारपीडिता मार्गएव निपतंति एवं ते संयमभारं त्यक्त्वा शीतलविहारिणः स्युः । यथा पीठसर्पिणो भग्नगमनतया अग्न्यादिभये उद्भ्रांतनयनाः पश्चान्न परिसर्पति नाग्रगामिनोभवंति अपितु तत्रैवाग्न्यादिसंभ्रमे विनश्यंति । एवं तेपि शीतलविहारिणोन मोक्षगामिनः स्युः अपितु तत्रैव संसारे अनंतकालं तिष्ठंति ॥ ५ ॥ ( इहेति ) इह मोक्षविचारे एके शा क्यादयः स्वतीर्थ्यावा लोचादिपीडिताः। तुशब्दोविशेषणे । भाषंते । तथाहि। सातं सुखं सातेन सुखेन विद्यते स्यात् । यतउक्तं । सर्वाणि सत्वानि सुखे रतानि, सर्वाणि डुः खाच्च समुद्विजंति ॥ जीवेषु तस्मात्सुखमेव दद्यात् सुखप्रदानाल्लभते सुखानि ॥ १ ॥ इत्यात्मसुखान्मुक्तिसुखं स्यात् नतु लोचादिडुःखात् । यडुक्तं । मणुणं भोअणं भुच्चा, मणु णं सयणासणं ॥ मणुणंसि अगारंसि, मणुणं कायए मुणी ॥१ ॥ तथा । मृद्वी शय्या प्रातरुत्थाय सेव्या. भुक्तं मध्ये पानकं चाऽपराह्णे ॥ द्राक्षाखंडं शर्करां चार्धरात्रे मोक्षश्चां ते शाक्यपुत्रेण दृष्टऽति । अतोमनोज्ञाहारादेश्चित्तस्वास्थ्यं ततः समाधिः सएव मुक्तिरि ति । ततः सुखेन सुखावाप्तिर्न तु लोचादिक्लेशेनेति एवंये भाषंते- तथा आर्यं जैनेंद्रमा र्गं परमंच समाधिज्ञानदर्शनचारित्रात्मकं येत्यजंति ते सदा भवे भ्राम्यंतीति ॥६ ॥

---

॥टीका–एतडुपसंहारद्वारेण परिहरन्नाह। (तत्रेत्यादि) तत्र तस्मिन् कुश्रुत्युपसर्गोदये मंदाअज्ञानानाविधोपसाध्यं सिद्धिगमनमवधार्य विषीदंति संयमानुष्ठानेन पुनरेतद्वदंत्य ज्ञाः।तद्यथा। येषां सिद्धिगमनमभूत् तेषां कुतश्चिन्निमित्तात् जातजातिस्मरणादिप्रत्ययाना मवाप्तसम्यक्ज्ञानचारित्राणामेव वल्कलचीरिप्रभृतीनामिव सिद्धिगमनमभूत् । न पुनः क

दाचिदपि सर्वविरतिपरिणामभावलिंगमंतरेण शीतोदकबीजाद्युपभोगेन जीवोपमर्दप्राये ण कर्मक्षयोऽवाप्यते । विषीदने दृष्टांतमाह । वहनं वाहोभारो वहनं तेन भिन्नाः कर्पि तास्त्रुटितारासभाइव विषीदंति । यथा रासभागमनपथएव प्रोज्झितभारानिपतंति ए वं ते प्रोज्य संयमभारं शीतलविहारिणोभवंति । दृष्टांतांतरमाह । यथा पृष्ठसर्पिणोभग्न गतयोऽग्न्यादिसंभ्रमे सत्युद्भ्रांतनयनाः समाकुलाः प्रनष्टजनस्य पृष्ठतः पश्चात्परिसर्पं ति नाग्रगामिनोभवंत्यपि तु तत्रैवाग्न्यादिसंभ्रमे विनश्यंत्येवं तेपि शीतलविहारिणो मोक्षं प्रतिप्रवृत्ताअपि तु न मोक्षगतयोभवंत्यपि तु तस्मिन्नेव संसारे अनंतमपि कालं यावदासतइति ॥ ५ ॥ मतांतरं निराकर्तुं पूर्वपक्षयितुमाह । ( इहमेगेइत्यादि ) । इहेति मोक्षगमनप्रस्तावे एके शाक्यादयः स्वयूथ्यावा लोचादिनोपतप्ताः । तुशब्दः पूर्वस्मात् शी तोदकापरिभोगाद्विशेषमाह । भाषंते ब्रुवते । मन्यंते च इति क्वचित्पाठः। किंतदित्याह । सातं सुखं सातेन सुखेनैव विद्यते भवतीति । तथाच वक्तारोभवंति । सर्वाणि सत्वानि सुखे रतानि सर्वाणि दुःखाच्च समुद्विजंति । तस्मात्सुखार्थीसुखमेव दद्यात् सुखप्रदाता लभ ते सुखानि॥१॥ युक्तिरप्येवमेव स्थिता । यतः कारणानुरूपं कार्यमुत्पद्यते। तद्यथा । शा लिबीजाच्छाल्यंकूरोजायते न यवांकुरइत्येव प्रीत्यात्मसुखान्मुक्तिसुखमुपजायते न लो चादिरूपात् दुःखादिति । तथाह्यागमे ऽप्येवमेव व्यवस्थितं ॥ मणुस्सं भोयणं भोच्चा मणु ण्णं सयणासणं। मणुण्णंसि अगारंसि मणुण्णं झायए मुणी ॥१॥तथा मृद्वी शय्याप्रातरुत्थाय पेया, भुक्तं मध्ये पानकं चापराह्णे।द्राक्षाखंडं शर्करा चार्धरात्रे मोक्षश्चांते शाक्यपुत्रेण दृष्टः ॥१॥इत्यतोमनोज्ञाहारविहारादेश्चित्तस्वास्थ्यं ततः समाधिरुत्पद्यते समाधेश्च मुक्त्यवाप्तिर तः स्थितमेतत्सुखेनैव सुखावाप्तिर्न पुनः कदाचनापि लोचादिना कायक्लेशेन सुखावाप्तिरि ति स्थितं ।इत्येवं व्यामूढमतयोये केचन शाक्यादयस्तत्र तस्मिन्मोक्षमार्गप्रस्तावे स मुपस्थिते आराज्ञातः सर्वहेयधर्मेभ्यइत्यार्योमार्गोजैनेंद्रशासनप्रतिपादितोमोक्षमार्ग स्तं ये परिहरंति। तथा च।परमं च समाधिज्ञानदर्शनचारित्रात्मकं ये त्यजंति तेऽज्ञाः संसा रांतर्वर्तिनः सदा भवंति । तथाहि । यत्तैरभिहितं कारणानुरूपं कार्यमिति तन्नायमेकां तोयतः शृंगाच्छरोजायते गोमयाद्वृश्चिकोगोलोमाविलोमादिभ्योदूर्वेति । यदपि मनोज्ञा हारादिकमुपन्यस्तं सुखकारणत्वेन तदपि विषूचिकादिसंभवाद्व्यभिचारीति । अपिचेदं वै षयिकं सुखं दुःखप्रकारहेतुत्वात् सुखाभासतया सुखमेव न भवति । तदुक्तं । दुःखात्म केषु विषयेषु सुखाभिमानः सौख्यात्मकेषु नियमादिषु दुःखबुद्धिः। उत्कीर्णवर्णपदपंक्तिरि वान्यरूपा सारूप्यमेति विपरीतगतिप्रयोगात्॥१॥इति। कुतस्तत्परमानंदरूपमस्यात्यंतिकैं कांतिकस्य मोक्षसुखस्य कारणं भवति। यदपि लोचभूशयनभिक्षाटनपरपरिभवक्षुत्पिपासा दंशमशकादिकं दुःखकारणत्वेन भवतोपन्यस्तं तदप्यल्पसत्वानामपरमार्थदृशां महापु

ष्पाणां तु स्वार्थाभ्युपगमप्रवृत्तानां परमार्थचिंतकानां महासत्वतया सर्वमेवैतत्सुखायैवे ते। तथाचोक्तं। तणसंथारनिविस्रो विमुनिवरो नट्ठरागमयमोहो॥ जंपावइ मुत्तिसुहं कत्तो तंचक्कवट्टीवि॥१॥ तथा। दुष्कृतसंख्यया च महतां क्षांतं पदं वैरिणः कायस्याशुचिता विरागपदवी संवेगहेतुर्जरा॥ सर्वत्यागमहोत्सवाय मरणं जातिः सुहृत्प्रीतये संपद्भिः परिपूरितं जगदिदं स्थानं विपत्तेः कुतइति॥१॥ अपिचैकांतेन सुखेनैव सुखेऽभ्युपगम्यमाने विचित्रसंसाराभावः स्यात्तथा स्वर्गस्थानां नित्यसुखिनां पुनरपि सुखानुभूतेस्तत्रैवोत्पत्तिः स्यात्तथा नारकाणां च पुनर्दुःखानुभवात्तत्रैवोत्पत्तेर्न नानागत्या विचित्रता संसारस्य स्यान्नचैतत् दृष्टमिष्टं चेति॥६॥

मा एयं अवमन्नंता, अप्पेणं लुंपहा बहुं॥ एतस्स अमोक्खाए, अयहारिव जूरह॥७॥ पाणाइवाते वट्टंता, मुसावादे असंजता॥ अदिन्नादाणे वट्टंता, मेहुणेय परिग्गहे॥८॥

अर्थ—मा के० अहो दर्शनीउं, तमे एयं के० सुख थकी सुख थाय एवां वचने करी अवमन्नंता के० श्रीजिनेंद्रना मार्गने अवहिलता थका अप्पेणं के० अल्प विषयने अर्थे बहुं के० घणा एवांजे मोक्षना सुख तेने लुंपहा के० गमावोछो; एतस्स के० एवा असत्य पक्षने अमोक्खाए के० न मूकवे करीने अयहारिव के० लोहवाहकनी पेरे जूरह के० झूरशो; जेम कोइक बे जण हता तेणे लोहनो भार उपाड्यो हतो, पछी मार्गे जतां सुवर्ण दीठुं तेवारे एकजणे लोहनां भारने नाखी देइने अमुलक सुवर्ण वस्तु ग्रहण करी अत्यंत धनवंत थयो, अने बीजायें लोहनो भार नाखी दीधो नही, ते पछी झूरवा लागो, तेम तमे पण झूरशो. ए कथा सविस्तर श्रीरायप्रश्नि सूत्रमांहे त्यां थकी जोइ लेवी॥७॥ पाणाइवातेवट्टंता के० प्राणातिपातने विषे वर्त्तता मुसावादे के० मृषावादने विषे वर्त्तता अदिन्नादाणेके० अदत्तादान तथा मेहुणेके० मैथुन च के० वली परिग्गहेके० परिग्रह एटलाने विषे वट्टंताके० वर्त्तता थका तमे असंजताके० असंयतिछो अल्प विषयसुखमां पड्या थका घणुं एवुं जे मोक्ष सुख तेनो विनाशकरोछो.॥८॥

॥ दीपिका—( माएति ) एवं जैनमार्गं अवमन्यमानाः परिहरंतो ऽल्पेन सुखेन मा बहु मोक्षसुखं लुंपथ विध्वंसथ। तथा एतस्यासत्पक्षस्यामोक्षेपरित्यागे अयोहारीव (जूरहत्ति) आत्मानं कदर्थयते। यथाऽयसोलोहस्याहर्ता ऽपांतराले रूप्यादिलाभेपि दूरमानीतमिति लोहं नोज्झितवान् पश्चादलाभे जूरितवान् पश्चात्तापं कृतवान् एवं यू

यमपि ॥ ७ ॥ ( पाणाइवेति ) यूयं प्राणातिपाते मृषावादे संयताः संतोवर्तमानास्तथा ऽदत्तादाने मैथुने परिग्रहे वर्तमानाअल्पेन सुखेन बहु हारयथ ॥ ८ ॥

---

॥ टीका—अतोव्यपदिश्यते । ( माएयमित्यादि ) एनमार्यं मार्गं जैनेंद्रप्रवचनं सम्यक् ज्ञानदर्शनचारित्रमोक्षमार्गप्रतिपादकं सुखं सुखेनैव विद्यते इत्यादिमोहेन मोहिताअवमन्यमानाः परिहरंतोऽल्पेन वैषयिकेण सुखेन माबहु परमार्थसुखं मोक्षाख्यं लुंपथ विध्वंसथ तथाहि । मनोज्ञाऽहारादिना कामोद्रेकस्तद्रुद्रेकाच्च चित्तास्वास्थ्यं न पुनः समाधिरिति । अपि चैतस्यासत्पक्षाभ्युपगमस्यामोक्षे परित्यागे सति । ( आयो हारिवजूरहत्ति ) आत्मानं यूयं कदर्थय । यथैव केवलं यथावाऽयसो लोहस्याहर्त्ता अ पांतराले रूप्यादिलाभे सत्यपि दूरमानितमिति कत्वा नोज्झितवान् । पश्चात् स्वावस्था नावाप्तावल्पलाभे सति जूरितवान् पश्चात्तापं कृतवान् एवं भवंतोपि जूरयिष्यंतीति ॥७॥ पुनरपि सातेन सातमित्येवं वादिनां शाक्यानां दोषोद्भिावयिषयाह । (पाणाइवायेत्यादि) प्राणातिपाते मृषावादादत्तादानमैथुनपरिग्रहेषु वर्तमानाअसंयतायूयं वर्तमान सुखैषिणोल्पेन वैषयिकसुखाभासेन परमार्थिकमेकांतात्यंतिकं बहु मोक्षसुखं विलुंपथेति । किमिति । यतः पचनपाचनादिषु क्रियासु वर्तमानाः सावद्यानुष्ठानारंभतया प्राणातिपातमाचरथ । तथा येषां जीवानां शरीरोपभोगोभवद्भिः क्रियते तानि शरीराणि तत्स्वामिनिरदत्तानीत्यदत्तादानाचरणं । तथा गोमहिष्यजोष्ट्रादिपरिग्रहात्तन्मैथुनानुमोदनादब्रम्हेति । तथा प्रव्रजितावयमित्येवमुत्थाय गृहस्थाचरणानुष्ठानान्मृषावादस्तथा धनधान्यद्विपदचतुष्पदादिपरिग्रहात्परिग्रहइति ॥ ८ ॥

एवमेगे उ पासत्था, पन्नवंति अणारिया ॥ इत्थीवसंगया बाला,
जिणसासणपरम्मुहा ॥ ए ॥ जहा गंमं पिलागं वा, परिपीलेज्ज
मुहुत्तगं ॥ एवं विन्नवणित्थीसु, दोसो तह कउसिआ ॥ १० ॥

अर्थ—वली परमतनो नापा दोष कही देखाडेछे. एव के० एरीते एगेउ के० कोइएक परतीर्थिक अथवा स्वतीर्थिक पासत्था के० पासत्थादिक ते केवाछे तोके अणारिया के० अनार्य कर्मना करनार अणाचारि वली इत्थीवसंगया के० स्त्रीने वसे पड्या एटले स्त्रीनो परिसह जीतवाने असमर्थ तथा बाला के० अज्ञानी वली जिणसासण परम्मुहा के० जिनमार्ग थकी वपरांग ते पन्नवंति के० एम कहेछेके ॥ ए ॥ जहा के० जेम गंमंके० गूबडुं पिलागंवा के० पाकुं थकुं तेने परि के० त्यांज पीलेज्ज के० पीडीने तेमांथी परु अथवा रुधीर काढी नाखवा थकी मुहुत्तगंके० मुहूर्त्तमात्रमां सुख थाय परंतु पीडा कांइ

पण न थाय एवं के० एरीते अंहीं पण विन्नवणिङ्कीसु के० प्रार्थना करती एवी स्त्रीनी साथे संबंध करवाथी दोसोतछकऊसिया के० त्यांपण क्यां थकीदोप आवशे अपितु कांइज दोपनथी. ॥ १० ॥

---

॥ दीपिका–एवं पूर्वोक्त प्रकारेण एके बौद्धविशेषाः शैवविशेषावा पार्श्वस्थाः स्वयूथ्या वाऽवसन्नकुशीलादयोऽनार्याः स्त्रीवशंगताः प्रज्ञापयंति वदंति। यतस्तेषां वचनं ।प्रियादर्शन मेवास्तु, किमन्यैर्दर्शनांतरैः ॥ प्राप्यते येन निर्वाणं, सरागेणापि चेतसा इति ।ते किंनूताः जिनशासनपराङ्मुखाः ॥ ए ॥ ( जहेत्ति) ते एवमाहुः । यथा गंडं पिटकं पीडोपशमार्थं परिपीड्य रुधिरादिकं निर्गाल्य मुहूर्तमात्रं सुखिनः स्युर्नच दोपेणानुयज्यंते । एवं विज्ञा पनासु प्रार्थनीयासु स्त्रीषु दोषः कुतःस्यात् । तत्रकोर्थः । गंडपरिपीडनतुल्ये स्त्रीसंबंधे क दोपः स्यात् । तत्र दोपोयदि काचित्पीडा नवेन्न चेह साकाप्यस्तीति ॥ १० ॥

---

॥ टीका–सांप्रतं मतांतरदूषणाय पूर्वपक्षयितुमाह । ( एवमेगेइत्यादि ) तुशब्दः पूर्वे स्माद्विशेषणार्थः ।एवमिति वक्ष्यमाणया नीत्या यदि वा प्राक्तनएव श्लोकोत्रापि संबधनी यः । एवमिति । प्राणातिपातादिषु वर्तमानाएकइत्यादिबौद्धविशेषानीलपटादयोनाथ वादिकमंमलप्रविष्टावा शैवविशेषाः मदनुष्ठानात् पार्श्वे तिष्ठंतीति पार्श्वस्थाः स्वयूथ्यावा पार्श्वस्थावसन्नकुशीलादयः स्त्रीपरीषहपराजितास्तएवं प्रज्ञापयंति प्ररूपयंति । अना र्याः अनार्यकर्मकारित्वात्। तथाहि। ते वदंति।प्रियादर्शनमेवास्तु किमन्यैर्दर्शनांतरैः । प्रा प्यते येन निर्वाणं सरागेणापि चेतसा। किमित्येवं तेन्निदधतीत्याह।स्त्रीवशंगताः यतोयुवती नामाज्ञायां वर्तंते बालाअज्ञारागद्वेषोपहतचेतसइति । रागद्वेषजितोजिनास्तेषां शासन माज्ञा कषायमोहोपशमहेतुनूता तत्पराङ्मुखाः संसारनिर्व्वेगिणोजैनमार्गविद्वेषिणएत द्वक्ष्यमाणमूचुरिति ॥ ए॥ यदूचुस्तदाह (जहागंडमित्यादि) यथेत्युदाहरणोपन्यासार्थः। यथा येन प्रकारेण कश्चित् गंमी पुरुषोगंडं समुत्थितं पिटकं वा तज्जातीयकमेव तदा कृतोप शमनार्थं परिपीड्य पूयरुधिरादिकं निर्गाल्य मुहूर्तमात्रं सुखितोनवति न च दोपेणानुष ज्यते । एवमत्रापि स्त्रीविज्ञापनायां युवतिप्रार्थनायां रमणीसंबंधे गंमपरिपीमनकल्पे दोष स्तत्र कुतः स्यात् । न ह्येतावता क्लेदापगममात्रेण दोपोनवेदिति ।स्यात्तत्र दोपोयदि काचि त्पीडा नवेत् ॥ १० ॥

जहा मंधादए नाम,थिमिअं नुंजती दगं ॥ एवं विन्नवणिठीसु,
दोसो तठ कउसिआ ॥११॥ जहा विहंगमा पिंगा,थिमिअं नुं
जती दगं ॥ एवं विन्नवणिठीसु, दोसो तठ कउसिआ ॥१२॥ ए

वमेगे उ पासब्बा, मिब्रदिठी अणारिआ ॥ अशोववन्ना कामे
हिं, पूयणा इव तरुणए ॥ १३ ॥

अर्थ—वली दृष्टांत कहेछे. जहाके० जेम मंदादननामके० मेषो एवे नामे जनावर ते थि मितं के० जेरीते पाणी मोलाय नही एरीते भुंजतीदगं के० उदकनुं पान करे, परंतु पाणीने पण बाधा नथाय अने पोताने पण बाधा नकरे एवंके० एरीते विन्नवणिडीसु के० प्रार्थना करती स्त्री साथे संबंध करवा थकी दोसोतब्रकउसिया के० त्यांपण दोष क्यां थकी थाय अपितु नज थाय. ॥ ११ ॥ जहा के० जेम विहंगमापिंगा के० कपिंजल एवेनामे पंखणी आकाशें उडती थकीज थिमिअंभुंजतीदगं के० निर्मलपाणीनुं पानकरे एवं के० एरीते विन्नवणिडीसु के० अंहींपण गर्भांतर करण पूर्वक पुत्रादिकने अर्थे राग द्वेष रहित प्रार्थती एवी स्त्रीनी साथे संग करतां थकां दोष क्यांथकी थाय ॥ १२॥ हवे सूत्र कर्ता ते वादीउंना दोष प्रगट करतो कहेछे. एवमेगेउपासब्राके० ते पूर्वोक्त गुंबडादिक ना दृष्टांते करी मैथुनने निर्दोष मानता एवा कोइ एक परतीर्थिक तथा स्वयूथिक पासब्रादि क जेणे स्त्री परिसह जित्यो नथी, ते सिथल विहारी केवा छे, तो के मिब्रदिठी अणा रिया के० मिथ्यादृष्टी अनार्य कर्मना करनार अनाचारी अशोववन्नाकामेहिंके० कामनो गने विषे गृद्ध उता प्रवर्त्ते कोनीपेरे तोके पूयणाइवके० पुतना एटले माकणनीपेरे जेम माकण न्हाना बालकने देखी गृद्ध थाय अथवा पुतना एटले गाडरीनीपेरे जेम गाडरी पोताना तरुणए के० तरुण बालकने विषे गृद्ध थाय; एटले समस्त जीवोमांहे संता नने विषे गाडरीनो स्नेह आकरो दीपेछे ते माटे ए दृष्टांत कह्युं तेम पूर्वोक्त अनाचा री पासब्रादिक पण कामभोगनेविषे गृद्ध थायछे. ॥ १३ ॥

॥ दीपिका–( जहेति ) यथा मंधादनोमेषः स्तिमितं अनालोडयन्नुदकं भुंक्ते पिब त्यात्मानं प्रीणयति नचान्योपघातं कुर्यात् एवं स्त्रीसंबंधे न काचिदन्यस्य पीडा आ त्मनश्च प्रीणनमिति कुतस्तत्र दोषः ॥ ११ ॥ यथा पिंगाः कपिंजलाविहंगमाः पक्षिणश्चा काशएव वर्तमानाः स्तिमितं निभृतमुदकं पिबंति एवमत्रापि पुत्राद्यर्थे स्त्रीसंबंधं कुर्वतोऽ रक्तद्विष्टस्य पक्षिणइव कुतोदोषः । यदुक्तं ॥ धर्मार्थे पुत्रकामस्य स्वदारेष्वधिकारिणः ॥ ऋतुकालविधानेन दोषस्तत्र नविद्यतइति ॥ १२ ॥ अथैवं वदतां परेषां दोषमाह । एवं प रोक्तैः पूर्वदृष्टांतैर्मैथुनं निर्दोषमितिमन्यमानाएके शाक्यादयः स्वयूथ्यावा पार्श्वस्थादय स्तथा मिथ्यादृष्टयोऽनार्याधर्मविरुद्धभाषिणोऽध्युपपन्नागृद्धाः कामेषु वा । यथा पूतना शाकिनी तरुणके बाले आसक्ता यदि वा पूतना गडुरिका स्वापत्ये आसक्ता । कयाचात्र केनापि सर्वपशूनामपत्यानि निरुदके कूपेऽपत्यस्नेहपरीक्षार्थं क्षिप्तानि । तत्र चान्यामात

रः स्वापत्यशब्दाकर्णनेऽस्मिन्नपि कूपतटस्थाएव रुदंति चरन्ती त्वपत्यातिस्नेहांधा अपायमनपेक्ष्य तत्रैवात्मानं क्षिपवतीत्यतोन्यपशुन्योगडुरिका स्वापत्ये नृशमासक्ता एवं तेपि कामासक्ताः ॥ १३ ॥

---

॥ टीका—दृष्टांतेन दर्शयति । ( जहेत्यादि ) यथेत्ययमुदाहरणोपन्यासार्थः । मंधाद नइति मेषः । नामशब्दः संजावनायां । यथा मेषस्तिमितमनालोडयन्नुदकं पिवत्यात्मानं प्रीणयति नच तथान्येषां किंचनोपघातं विधत्ते।एवमत्रापि स्त्रीसंबंधे न काचिदन्यस्य पीडा आत्मनश्च प्रीणनमतःकुतस्तत्र दोषःस्यादिति ॥ ११ ॥ अस्मिन्नेवानुपघातार्थे दृष्टांतबहुत्वख्यापनार्थं दृष्टांतांतरमाह। (जहाविहंगमाइत्यादि) यथा येन प्रकारेण विहायसा गच्छतीति विहंगमा पक्षिणी(पिंगेति)कपिंजलासाकाशएव वर्तमाना स्तिमितं निभृतमुदकमापिवत्येवमत्रापि दर्जप्रदानपूर्विकया क्रियया अरक्ताद्विष्टस्य पुत्राद्यर्थं स्त्रीसंबंधं कुर्वतोपि कपिंजलायाइव न तस्य दोषइति । सांप्रतमेतेषां गंडपीडनतुल्यं स्त्रीपरिजोगं मन्यमानानां तथैमकोदकपानसदृशं परपीडाऽनुत्पादकत्वेन परात्मनोश्च सुखोत्पादकत्वेन किल मैथुनं जायतइत्यध्यवसायिनां तथा कपिंजलोदकपानं यथा तमागोदकासंस्पर्शेन किल जवत्येव मरक्तद्विष्टतया दर्जादुत्तारणात् स्त्रीगात्रस्पर्शेन पुत्रार्थं न कामार्थं । ऋतुकालाजिगामितया शास्त्रोक्तविधानेन मैथुनेपि न दोषानुषंगः॥ तथाचोचुस्ते। धर्मार्थं पुत्रकामस्य स्वदारेष्वधिकारिणः । ऋतुकाले विधानेन दोषस्तत्र न विद्यते इति । एवमुदासीनत्वेन व्यवस्थितानां दृष्टांतेनैव निर्युक्तिकारो गाथात्रयेणोत्तरदानायाह । (जहणामेइत्यादि) जहणाममंमलग्गे णसिरं एकस्सइमणुस्सो ॥ अच्छेज्जपराहुत्तो किं नामततो णये पेक्का॥ ५३ ॥ जहणा विसगंडूसं, कोतीवेत्तूणनामतुण्हिक्को ॥ अस्रेणअदीसंतो, किं नाम ततो नवमरेज्जा ॥ ५४॥ जह नाम सिरिघराउ, कोइरयणेणणामघेत्तूणं । अच्छेज्जपराहुत्तो किंणामततो न वेपेक्का॥५५॥यथा नामकश्चिन्मंमलाग्रेणकस्यचिच्छिरश्छित्वा पराङ्मुखस्तिष्ठेत् । किमेतावतोदासीनजावावलंबनेन न गृह्येत नापराधी जवेत्।तथा यथा कश्चिद्विषगंडूषं गृहीत्वा पीत्वानामतूष्णींजावं जजेदन्येन वा संदृश्यमानोसौ किं नाम ततोसावन्यादर्शनात् नम्रियेत।तथा यथा कश्चिच्छ्रीगृहाज्ञांमागाराद्रत्नानि महार्घाणि गृहीत्वा पराङ्मुखस्तिष्ठेत् किमेतावतासौ न गृह्येतेति। अत्र च यथा कश्चित् शठतया अज्ञतया वा शिरछेदे विषगंडूषरत्नापहाराख्ये सत्यपि दोषत्रये माध्यस्थ्यमवलंबेत । न च तस्य तदवलंबनेपि निर्दोषतेति । एवमत्राप्यवश्यंजाविरागकार्यमैथुने सर्वदोषास्पदे संसारवर्द्धके कुतोनिर्दोषतेति । तथा चोक्तं । प्राणिनां बाधकं चैतच्छास्त्रेगीतं महर्षिजिः ॥ नलिकातप्तकणकप्रवेशज्ञा ततस्तथा ॥ १ ॥ मूलं चैतदधर्मस्य जवजावप्रवर्धनं॥तस्माद्विषान्नवत्त्याज्यमिदं पापमनिच्छतेति निर्युक्तिगाथा

त्रयतात्पर्यार्थः ॥ १२ ॥ सांप्रतं सूत्रकारउपहारव्याजेन गंमपीमनादिदृष्टांतवादिनां दोपोद्भिनावयिपयाह् । (एवमेगेइत्यादि ) । एवमिति गंडपीमनादिदृष्टांतबलेन निर्दोषं मैथुनमिति मन्यमानाएके स्त्रीपरीषहपराजिताः सदनुष्ठानात्पार्श्वे तिष्ठंतीति पार्श्वस्थानाथवादिकमंडलचारिणः। तुशब्दात् स्वयूथ्यावा तथा विपरीता तत्वाग्राहिणी दृष्टिर्दर्शनं येषां ते तथा आराद्दूरे यातागताः सर्वहेयधर्मेभ्यइत्यार्याः नआर्या अनार्याः । धर्मविरुद्धानुष्ठानात्तएवं विधाअध्युपपन्नागृध्नवइच्छामदनरूपेषु कामेषु कामैर्वाकरणभूतैःसावद्यानुष्ठानेष्विति । अत्र लौकिकं दृष्टांतमाह् । यथावा पूतना डाकिनी तरुणके स्तनंधयेऽध्युपन्ना । एवं तेप्यनार्याः कामेष्विति।यदि वा(पूयणत्ति)गड्डरिका आत्मीयेऽपत्येऽध्युपपन्ना एवं तेपीति । कथा नकंचात्र । यथा किल सर्वपशूनामपत्यानि निरुदके कूपेऽपत्यस्नेहपरीक्षार्थं क्षिप्तानि तत्र चापरामातरः स्वकीयस्तनंधयशब्दाकर्णनेपि कूपतटस्थारुदंत्यस्तिष्ठंति । उरभ्रीत्वपत्यातिस्नेहेनांधा अपायमनपेक्ष्य तत्रैवात्मानं क्षिप्तवतीत्यतोऽपरपशुभ्यः स्वापत्येऽध्युपपन्नेति ॥

अणागयमपस्संता, पच्चुप्पन्नगवेसगा ॥ ते पच्छा परितप्पंति,
खीणे आउंमि जोवणे ॥ १४ ॥ जेहिं काले परिक्कंतं, नपच्छा प
रितप्पए ॥ ते धीरा बंधणुम्मुक्का, नाव कंखंति जीविअं ॥ १५ ॥

अर्थ–हवे ते काम गृध्नना दोष कहेछे. ते काम भोग थकी जे निवृत्या नथी तेने अणागय के० आगामिक काले नरकादिक दुःख उत्पन्न थाय एवुं अपस्संता के० अण देखता थका अने पच्चुप्पन्नगवेसगाके० प्रत्युत्पन्न जे वर्तमान विषय सुख तेने गवेषता एनेज रुडुंकरी मानता थका रहेछे तेपच्छाके० तेपछी खीणआउंमिजोवणेके० जेवारे आयुष्य क्षीण थाय, अने यौवन जतुं रहे तेवारे परितप्पंति के० पश्चात्ताप करे; अने कहेके अमे एवा अनाचार शावास्ते कस्या? ॥ १४ ॥ जेहिं के० जे महापुरुषे कालेके० काल प्रस्तावे धर्मनेविषे परिक्कंतं के० पराक्रम कखुं. नपच्छापरितप्पए के० ते महापुरुष पछी वृद्धावस्थायें तथा मरणावसरे पश्चात्तापकरे नही; ते धीराबंधणुम्मुक्का के० ते धैर्यवंत पुरुष बंधण थकी मूकाणा नावकंखंतिजीविअंके० असंयमे जीवितव्यनी आकांक्षाकरता नथी अथवा जीवितव्य मरणने विषे निस्पृहि थका वर्तेछे. ॥ १५ ॥

---

॥ दीपिका–तेषां दोषमाह् ( अणागयमित्यादि ) । अनागतं नरकादिदुःखमपश्यंतः प्रत्युत्पन्नं वर्तमानमेव विषयसुखाभासमन्वेषयंतः पश्यंतः पश्चात्क्षीणे स्वायुषि यौवने वा गते परितप्यंति पश्चात्तापं कुर्वंति । यदुक्तं । हतं मुष्टिभिराकाशं तुषाणां कंडनं कृतं । यन्मया प्राप्य मानुष्यं सदर्थे नादरः कृतः ॥ १ ॥ तथा । विहवावलेवनमिएहिं । जाइ

कीरंतिजोव्वणमएण ॥ वयपरिणामेसरिआ । इंताइंदि अपखुडुकंति इति ॥१४॥ (जेहिं इत्यादि) येरात्महितैः कालेऽवसरे पराक्रांतं संयमोद्यमः कृतस्ते पश्चान्न परितप्यंते । एकवचनंसूत्रे ग़ांदसत्वात् । ते वीरास्तपश्चरणोद्यताबंधनात्कर्मणोन मुक्ताअसंयमजीवितं नावकांक्षंतिने ह्वंति । जिविते मरणे वा निस्पृहाः स्युरित्यर्थः ॥ १५ ॥

---

॥टीका–एवं तेपि कामानिष्वंगिणांदोषमाविष्कुर्वन्नाह॥(अणागयमित्यादि)अनागतमेष्यत्कामानिवृत्तानां नरकादियातनास्थानेषु महत्डुःखमपश्यंतोऽपर्यालोचयंतस्तथा प्रत्युत्पन्नं वर्तमानमेव वैषयिकं सुखाजालमन्वेषयंतोमृगयमाणानानाविधैरुपायैर्भोगान्प्रार्थयंतस्ते पश्चात्क्षीणे स्वायुषि जातसंवेगायौवने वा अपगते परितप्यंतेशोचयंते पश्चात्तापं विदधति । उक्तं च । हतंमुष्टिभिराकाशं तुषाणां कंडनंकृतं।यन्मया प्राप्य मानुष्यं सदर्थे नादरःकृतः॥१॥ तथा । विहवावलेवनडिएहिं । जाइंकीरंतिजोव्वणमएण॥वयपरिणामे सरियाइंताइंहिअपखुडुक्कंति ॥१॥१४॥ येतूत्तमसत्वतया अनागतमेव तपश्चरणादावुद्यमं विदधति न ते पश्चाच्छोचंतीति तदर्शयितुमाह । ( जेहिंकाले इत्यादि ) येरात्महितकर्तृभिः काले धर्मार्जनावसरे पराक्रांतमिंद्रियकषायपराजयाद्युद्यमोविहितोन ते पश्चान्मरणकाले वृद्धावस्थायां वा परितप्यंते न शोकाकुलाजवंति । एकवचननिर्देशस्तु सौत्रश्छांदसत्वादिति । धर्मार्जनकालस्तु विवेकिनां प्रायशः सर्वएव तस्मात्सएव प्रधानपुरुषार्थः प्रधानएव च प्रायशः क्रियमाणोघटां प्रांचति । ततश्चायं बाल्यात्प्रभृत्यकृतविषयासंगतयाकृततपःश्चरणास्ते धीराः कर्मविदारणसहिष्णवोबंधनेन स्नेहात्मकेन कर्मणा चोत्प्राबल्येन मुक्तानावकांक्षंति असंयमजीवितं यदि वा जीविते मरणे वानिस्पृहाः संयमोद्यममतयोजवंतीति ॥ १५॥

जहा नई वेयरणी, डुत्तरा इह संमता ॥ एवं लोगंसि नारीर्ड,
डुत्तरा अमईमया ॥ १६ ॥ जेहिं नारीणसंजोगा, पूयणा पिठ
तोकता ॥ सव्वमेयंनिराकिच्चा, तेठिया सुसमाहिए ॥ १७ ॥

अर्थ–जहानईवेयरणी के० जेम नदी वेतरणी जेठेते डुत्तराइहसंमता के० सर्वनदीओमां तरवी डुर्लजठे एवात लोक प्रसिद्धठे एवंलोगंसिनारीर्ड के० एरीते लोकमांहे स्त्रीर्डजेठे तेपण डुत्तराअमईमया के० अमतिवंत निरविवेकी पुरुषने अपार डुस्तर डुर्लंघनीय जाणवी ॥ १६ ॥ एवुं जाणीने जे हितकारी वातठे ते कहेठे जेहिं के० जे पुरुषे नारीणसंजोगा के० स्त्री संबंधी संयोगना जे विपाक तेने कडवा जाणीने स्त्रीना संयोग ठांमीदीधा वली पूयणापिठतोकता के० तेस्त्रीना संयोगने अर्थे जे पोताना शरीरनी पूजा विजूषाते पण जेणे उपरांठी कीधी एटले मूकीदीधी, सव्वमेयंनिराकिच्चा

के० ते पुरुषे एसर्व स्त्रीसंगादिक तथा क्षुधा तृषादिक अनुकूल प्रतिकूल उपसर्गना गण एटले समूह तेने निराकरीने जे महापुरुष संसेवित मार्गे प्रवर्त्ते तेठियासुसमाहिए.के० तेपुरुष संवररूप समाधिने विषे स्थित जाणवा. ॥ १७ ॥

॥ दीपिका—यथा वैतरणी नदी सर्वनदीनां मध्ये दुस्तरा दुर्लंघ्या इह लोके सम्मता । एवं लोके नार्योऽमतिमता निर्विवेकेन नरेण दुस्तराः । यदुक्तं ! सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेंद्रियाणां लज्जां तावद्विधत्ते विनयमपि समालंबते तावदेव । भ्रूचापाक्षेपमुक्ताः श्रवणपथजुषोनीलपक्ष्माणएते यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतंति इति ॥ १६ ॥ यैरुत्तमैर्नारीणां संयोगास्तत्संयोगार्थमेव वस्त्रालंकारादिभिरात्मनः पूजनाः कामविभूषाः पृष्ठतः कृतास्त्यक्तास्ते महापुरुषाः सर्वमेतत्स्त्रीप्रसंगादिकं निराकृत्य सुसमाधिना चित्तस्वास्थ्येन स्थिताः ॥ १७ ॥

॥ टीका—अन्यच्च (जहाइत्यादि) यथेत्युदाहरणोपन्यासार्थः । यथा वैतरणी नदीनां मध्येऽत्यंतवेगवाहित्वात् विषमतटत्वाच्च दुस्तरा दुर्लंघ्या एवमस्मिन्नपि लोके नार्योऽमतिमता निर्विवेकेन हीनसत्वेन दुःखेनोत्तीर्यंते । तथाहि । ताहावभावैः कृतविद्यानपि स्वीकुर्वंति । तथाचोक्तं । सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेंद्रियाणां, लज्जां तावद्विधत्ते विनयमपि समालंबते तावदेव ॥ भ्रूचापाक्षेपमुक्ताः श्रवणपथजुषोनीलपक्ष्माणएते यावल्लीलावतीनां न यदि धृतिमुषो दृष्टिबाणाः पतंति । तदेवं वैतरणीनदीवत् दुस्तरानार्योभवंतीति ॥ १६ ॥ अपिच । (जेहींत्यादि । यैरुत्तमसत्वैः स्त्रीसंगविपाकवेदिभिः पर्यंतकटवोनारीसंयोगाः परित्यक्तास्तथा तत्संगार्थमेव वस्त्रालंकारमाल्यादिभिरात्मनः पूजनाकामविभूषा पृष्ठतः कृता परित्यक्तेत्यर्थः । सर्वमेतत्स्त्रीप्रसंगादिकं क्षुत्पिपासादिप्रतिकूलोपसर्गकदंबकं च निराकृत्य ये महापुरुषसेवितपंथानं प्रति प्रवृत्तास्ते सुसमाधिना स्वस्थचित्तवृत्तिरूपेण व्यवस्थितानोपसर्गैरनुकूलप्रतिकूलरूपैः प्रक्षोभ्यंते । अन्येतु विषयाभिष्वंगिणः रूपादिपरीषहपराजिताअंगारोपरिपतितमीनवद्रागाग्निना दह्यमानाअसमाधिना तिष्ठंतीति ॥१७॥

एते उग्घं तरिस्संति, समुद्दं ववहारिणो ॥ जत्थ पाणा विसन्ना
सि, किच्चंती सयकम्मणा ॥ १८ ॥ तंच भिक्खू परिणाय, सुव्वते
समिते चरे ॥ मुसावायं च वज्जिज्जा, दिन्नादाणं च वोसिरे ॥१९॥

अर्थ—एतेके० ए पूर्वोक्त परिसहना जीपणहार ते उग्घंके० उघसंसारने तरिस्संतिके० तरसे समुद्दंववहारिणोके० समुद्रवत्; एटले जेम व्यवहारिया समुद्रने नाव वडे तरेछे तेनीपरे जाणीनेवुं जत्थके० जे संसार समुद्रने विषे पाणाविके० प्राणी एटले जीव ते सन्नासिके०

खुता यका सयकम्मणाके० पोताना करेला पापकर्मे करी असातावेदनीयरूपे किच्चंती के० पीडायछे ॥ १८ ॥ हवे उपदेश कहेछे तंचभिक्खू के० ते पूर्वोक्त चारित्रिउं प रिम्नायके० हेय उपादेय स्वरूप जाणीने सुव्वते के० जला व्रतनो पालक समितेचरे के० पांच समिते समितो एवो थको विचरे अने मुसावायंच वज्जिज्जा के० मृषावादने वर्जे तथा दिन्नादाणंचवोसिरे के० अदत्तादान एटले चोरी थकी वोसिरे एटले चोरीनुं त्यागकरे, एम अनुक्रमे मैथुन तथा परिग्रहने पण जांणे. ॥ १९ ॥

---

॥ दीपिका–एतेस्त्रीपरीषहजेतारउंघं संसारं तरिष्यंति । यथा व्यवहारिणः सांया त्रिकाः समुद्रं तरंति । यत्र नवौघे प्राणिनोविषयसंगैर्विषण्णाः संतः कृत्यंते पीड्यंते स्व कर्मणा ॥ १८ ॥ तदेतत्प्रागुक्तं भिक्षुः परिज्ञायज्ञात्वा सुव्रतः शोजनव्रतयुक्तः समितः पंचसमितिभिश्चरेत् संयमानुष्ठानं कुर्यात् तथामृषावादं वर्जयेददत्तादानंच व्युत्सृजे त् त्यजेत् । आदिशब्दान्मैथुनपरिग्रहादिच त्यजेत ॥ १९ ॥

---

॥ टीका–स्त्र्यादिपरीषहपराजयस्य फलं दर्शयितुमाह ।(एतेइत्यादि) यएते अनंतरोक्ता अनुकूलप्रतिकूलोपसर्गजेतारएते सर्वे उघंसंसारं डुस्तरमपितरिष्यंति। इष्टांतद्रष्टांतमाह । समुद्रंलवणसागरमिव व्यवहारिणःसांयात्रिकायानपात्रेण तरंत्येवं नवौघमपि संसारसंयम यानपात्रेण यतयस्तरिष्यंति।तथा तीर्णास्तरंतिचेति।नवौघमेव विशिनष्टि।नवौघे संसारसाग रेप्राणाःप्राणिनः स्त्रीविषयसंगाद्विषण्णाःसंतःकृत्यंते पीड्यंते स्वकृतेनानुष्ठितेन पापेनकर्मणा असद्वेदनीयोदयरूपेणेति ॥१८॥ सांप्रतमुपसंहारव्याजेनोपदेशांतरविवित्सयाह । ( तंच भिक्खूइत्यादि ) । तदेतद्यथा प्रागुक्तं । यथा वैतरणीनदीवत् डुस्तरानार्यैर्यैः परित्यक्ता स्ते समाधिस्थाः संसारं तरंति स्त्रीसंगिनश्च संसारांतर्गताः स्वकृतकर्मणा कृत्यंतइति । तदेतत्सर्वं भिक्षणशीलोभिक्षुः परिज्ञाय हेयोपादेयतया बुध्वा शोजनानि व्रतान्यस्य सुव्रतः पंचभिः समितिभिः समितइत्यनेनोत्तरगुणावेदनं कृतमित्येवंभूतश्चरेत् संयमानुष्ठानं विद ध्यात् तथा मृषावादमसद्भूतार्थभाषणं विशेषेण वर्जयेत्तथा अदत्तादानं च व्युत्सृजेद्दंतशो धनमात्रमप्यदत्तं न गृह्णीयात् । आदिग्रहणान्मैथुनादेः परिग्रहइति । तच्चमैथुनादिकं यावज्जीवमात्महितं मन्यमानः परिहरेत् ॥ १९ ॥

उड्ढमहे तिरियं वा,जे केई तस थावरा ॥ सव्वब विरतिं कुज्जा, सं ति निव्वाणमाहियं ॥२०॥ इमं च धम्ममादाय,कासवेण पवेदितं॥ कुज्जा भिक्खू गिलाणस्स, अगिलाए समाहिए ॥२१॥ संखाय

पेसलं धम्मं दिठिमं परिनिवुडे ॥ उवसग्गे हियासित्ता, आमो
स्काए परिव्वएज्जा सितिबेमि ॥ २२ ॥ इति श्री उवसग्गपरिन्ना
ए तइयं अझयणं सम्मत्तं ॥

अर्थ–हवे बीजा सर्वव्रत दयानी वाड रूपछे तेकारणे अहिंसाने विशेष दीपावेछे उड्ढं के० उंचो अहे के० अधो एटले नीचो तिरियं के० तीर्छो वा के० अथवा एटले सर्व लोकमांहे क्षेत्रथी प्राणातिपात कह्युं हवे द्रव्यप्राणातिपात कहेछे. जेकेईतसथावरा के० ए सर्व लोकमांहे जेकांइ त्रस अने स्थावर जीवछे सव्वविरतिंकुज्जा के० तेनेविषे सर्व प्रकारे एटले करण करावण अने अनुमतियेंकरी सर्वत्रकालें विरतिपणुं करे एटले सर्व जीवोनी दयानुं पालवुं तेने संतिनिव्वाण माहियं के० ते शांति एटले कर्म दाहनी उप शम करनार कहिये तथा एनेज निरवाण एटले मोक्षपदमांपण आहितं एटले कह्युंछे.॥२०॥ हवे अध्ययननो अर्थ उपसंहरतो कहेछे. इमंच धम्ममादाय के० एम श्रुत चारित्र रूप धर्मने ग्रहण करीने ते धर्म कासवेणप्पवेदितं के० श्रीमहावीर स्वामिये प्रकाश्यो ते मार्ग आदरीने निरकू के० साधु ते गिलाणस्स के० गिलानने विषे वैयावच्चने कुज्जा के० करे ते केवो थको वैयावच्च करे तो के अगिलाए समाहिए के० अगिलाणपणे आत्माने समाधिमान थको जे साधु वैयावच्च करेछे तेने धन्यछे एवी समाधि धारण करतो थको वैयावृत करे ॥ २१ ॥ संखायके० सम्यक् प्रकारे जाणीने एटले जातिस्म रणादिके अथवा अन्यपासेथी सांभलीने पेसलं के० रूडो एवो धम्मं के० केवलीनुं भा ष्योजे धर्म तेने दिठिमं के० सम्यक्दृष्टी जीव परिनिवुडे के० कषायने उपशमावी शीत लीभूत थको उवसग्गेहियासित्ता के० अनुकूल प्रतिकूल उपसर्गने अहिआसीने आमो स्काए के० ज्यांसुधी मोक्षे जाय त्यांसुधी परिव्वएज्जासिके० सुधो संयम पाले तिबेमिनो अर्थ पूर्ववत् जाणवो ॥२२॥ ए उपसर्ग परिज्ञानामे त्रीजाध्ययननुं अर्थ समाप्त थयुं ॥

---

॥ दीपिका–ऊर्ध्वमधः ये केचित् त्रसाः स्थावराः प्राणिनस्तेषु सर्वत्र कालेऽवस्थासु च विरतिं कुर्यात् यस्माच्छांतिनिर्वाणं कर्म दाहोपशमः शांतिस्तद्रूपं निर्वाणं मोक्षपदं आ ख्यातं कथितं यतोविरतेर्मोक्षोभवतीति ॥ २० ॥ इमं चारित्ररूपं धर्ममादाय गृहीत्वा काश्यपेन श्रीवीरेण प्रवेदितमाख्यातं ग्लानस्य साधोर्वैयावृत्त्यं कुर्यात् भिक्षुः कथं । अग्लान तया यथाशक्ति समाहितः समाधिं प्राप्तः यथाग्लानस्य समाधिरुत्पद्यतेः स्वस्यच योगान विषीदंति यथा वैयावृत्यादिकं विधेयमिति ॥२१॥ पेशलं मोक्षप्रदं धर्मं संख्याय ज्ञात्वा दृष्टिमान् सम्यग्दर्शनी परिनिर्वृतः शांतः उपसर्गाननुकूलप्रतिकूलान् नियम्य नियंत्र्य

आमोक्षाय मोक्षार्थं परिव्रजेत् संयममेचरेदिति ब्रवीमीति पूर्ववत् ॥ २२ ॥ इतितृतीया ध्ययने चतुर्थोद्देशकः समाप्तः ॥ ४ ॥

॥ टीका—अपरिव्रतानामहिंसायावृत्तिकल्पत्वात् तत्प्राधान्यख्यापनार्थमाह ( उड्ढमहे इत्यादि) ऊर्ध्वमधस्तिर्यक् चेत्यनेन क्षेत्रप्राणातिपातोगृहीतः। तत्रच ये केचन त्रसंतीति त्रसाद्वित्रिचतुःपंचेंद्रियाः पर्याप्तापर्याप्तकभेदभिन्नास्तथा तिष्ठंतीति स्थावराः पृथिव्यप्तेजो वायुवनस्पतयः सूक्ष्मबादरपर्याप्तकापर्याप्तकभेदभिन्नाइत्यनेन च द्रव्यप्राणातिपातोगृहीतः। सर्वत्र काले सर्वास्ववस्थास्वित्यनेनापि कालभावभेदभिन्नः प्राणातिपातउपात्तोद्रष्टव्यः। तदेवं चतुर्दशस्वपि जीवस्थानेषु कृतकारितानुमतिभिर्मनोवाक्कायैः प्राणातिपातविरतिं कुर्यादित्यनेन पादोनेनापि श्लोकद्वयेन प्राणातिपातविरत्यादयोमूलगुणाः ख्यापिताः। सांप्रतमेतेषां सर्वेषामेव मूलोत्तरगुणानां फलोद्देशेनाह। शांतिरिति कर्मदाहोपशमस्तदेवच निर्वाणं मोक्षपदं यदाख्यातं प्रतिपादितं सर्वद्वंद्वापगमरूपं तदस्यावश्यं चरणकरणानुष्ठायिनः साधोर्भवतीति ॥ २० ॥ समस्ताध्ययनार्थोपसंहारार्थमाह। ( इमंचधम्ममित्यादि ) इममिति पूर्वोक्तं मूलोत्तरगुणरूपं श्रुतचारित्राख्यं वा दुर्गतिधारणात् धर्ममादायाचार्योपदेशेन गृहीत्वा (किंभूतमिति)। तदेव विशिनष्टि। काश्यपेन श्रीमन्महावीरवर्धमानस्वामिना समुत्पन्नदिव्यज्ञानेन भव्यसत्वाभ्युद्धरणाभिलाषिणा प्रवेदितमाख्यातं समधिगम्य भिक्षुः साधुः परीषहोपसर्गैरतर्जितोग्लानस्यापरस्यसाधोर्वैयावृत्त्यं कुर्यात्। कथमिति। स्वतोऽग्लानतया यथाशक्ति समाहितइति समाधिं प्राप्तः। इदमुक्तं भवति। कृतकृत्योहमिति मन्यमानोवैयावृत्त्यादिकं कुर्यादिति ॥ २१ ॥ अन्यच्च ( संखायइति) संख्यायेति सम्यक् ज्ञात्वा स्वसंमत्या अन्यतोवा श्रुत्वा (पेशलंति) मोक्षगमनं प्रत्यनुकूलं किंतद्धर्मं श्रुतचारित्राख्यं दृष्टिमान् सम्यक्दर्शनी परिनिर्वृतइति। कषायोपशमाच्छीतीभूतः परिनिर्वृतकल्पोवा उपसर्गाननुकूलप्रतिकूलान् सम्यग् नियम्यातिसह्यामोक्षाय मोक्षंयावत् परिसमंतात् व्रजेत् संयमानुष्ठानेन गच्छेदिति। इतिशब्दः समाप्त्यर्थे। ब्रवीमीति पूर्ववत्। नयचर्चापि तथैवेति ॥ २२ ॥ उपसर्गपरिज्ञायाः समासश्चतुर्थोद्देशकस्तत्परिसमाप्तौ च तृतीयाध्ययनमिति । ग्रंथाग्रं ॥७७५॥

हवे प्रथम श्रुतस्कंधने विषे चोथुं अध्ययन प्रारंभियें छैयें. त्रीजा अध्ययननेविषे जे उपसर्ग कह्या तेमांहे अनुकूल उपसर्ग सहन करवा दुर्लभछे एम कह्युं हतुं, तेमाटे स्त्रीना करेला अनुकूल उपसर्ग सहन करवाने अर्थे चोथुं अध्ययन कहियें छैयें.

जे मायरंच पियरंच, विप्पजहाय पुव्वसंजोगं ॥ एगे सहिते च
रिस्सामि, आरतमेहुणो विवित्तेसु ॥ १ ॥ सुहुमेणं तं परिक्कम्म

छन्नपएण इत्थिउ मंदा ॥ उवायंपि ताउ जाणं सु जहा लिस्संति भिक्खुणो एगे ॥ २ ॥

अर्थ–(जेके०) जे उत्तमसाधु (मायरंचपियरंचके०) माता पिता अने नाइ प्रमुखनो (पुव संजोगंके०) पूर्वलो संयोग एटले आगलो संबंध तथा श्वशुरादिकनो पश्चात्‌संबंध एटले पाछलथी थयलो संबंध तेने विप्पजहायके० ठांमीने एगेके० एकलो रागद्वेषरहित अने ज्ञानदर्शन तथा चारित्रे करीने सहितेके० सहित एवो थतो, चरिस्सामिके० हुं संयम पालीश एवी प्रतिज्ञा करे; वली मेहुणो के० मैथुन थकी आरत के० निवर्त्योछे विवित्तेसु के० स्त्री पशु पंमग रहित एवा उपाश्रयनो गवेषणहार एवा साधुने पण कोइएक स्त्री विप्रतारेछे ते कहेछे ॥ १ ॥ सुहुमेणं के० कोइएक कार्यने मीशे तंपरिक्कम्म के० ते साधुने समीपे आवीने छन्नपएण के० छाने शब्दे, हलवे हलवे, अनेक गूढार्थ पदे करी एटले मर्मना वचने करी, इत्थिउमंदाके० कोइक स्त्री मंद एटले विवेकरहित एवी छति पुरुषने वशकरवाना उवायंपि के० उपायने ताउ के० ते स्त्री जाणंसु के० जाणे जहा के० जे उपाये करीने एगेके० कोइक भिक्खुणो के० चारित्रिउ मोहनीय कर्मना उदय थकी स्त्रीने वश थई जाय अने लिस्संति के० संयम थकी पडी जाय. ॥ २ ॥

---

अथ चतुर्थमध्ययनं.

॥ दीपिका–उक्तं तृतीयमध्ययनं । अथ चतुर्थमारभ्यते । तत्रस्त्रीपरीषहोजेयइत्यर्थेवाच्यं तस्येदमादिमंसूत्रं । जेमायरमिति । योमातरं पितरं चशब्दात्पुत्रादिकं च विप्रहाय त्यक्त्वा पूर्वसंयोगं एकोनिःसंगः सहितोज्ञानादिभिः स्वहितोवा चरिष्यामि संयमं करिष्यामीति कृतप्रतिज्ञः। आरतमुपरतं मैथुनं कामाभिलाषोयस्य सआरतमैथुनोविविक्तेषु स्त्र्याद्यनाकुलेषु स्थानेषु चरतीति शेषः। अथवा विविक्तं स्थानं एषितुं मार्गितुं शीलमस्य विविक्तेषी॥१॥तं साधुं सूक्ष्मेण परकार्यव्यपदेशेन छन्नपदेन कपटेन पराक्रम्य समीपमागत्य मंदागस्यमंदाः कामोद्रेककारित्वान्निर्विवेकाः स्त्रियः शीलाद्भ्रंशयंति । कोर्थः । भ्रातृपुत्रव्यपदेशेन साधुसमीपमागत्य स्त्रियः संयमाद्भ्रंशयंति साधुमिति । प्रछन्नपदं गुप्ताभिधानं । यथा । काले प्रसुप्तस्य जनार्दनस्य मेघांधकारासु च शर्वरीषु ॥ मिथ्या न भाषामि विशालनेत्रे ते प्रत्ययाये प्रथमाक्षरेषु इत्यादि । स्त्रियस्तथोपायंजानंति यथाश्लिष्यंते साधवोप्येके ॥ २ ॥

---

॥टीका–उक्तं तृतीयमध्ययनं सांप्रतं चतुर्थमारभ्यते । अस्य चायमभिसंबंध । इहानंतराध्ययने उपसर्गाः प्रतिपादितास्तेषां च प्रायोनुकूलाः दुःसहास्ततोपि स्त्रीकृताअतस्तज्जयार्थमिद

मध्ययनमुपदिश्यतइत्यनेन संबंधेनायातस्याध्ययनस्योपक्रमादीनि चत्वार्यनुयोगद्वाराणि भवंति। तत्रोपक्रमांतर्गतोर्थाधिकारो द्वेधा। अध्ययनार्थाधिकारउद्देशार्थाधिकारश्च। तत्राध्ययनार्थाधिकारः प्राग्वत् निर्युक्तिकृता(थीदोषविवज्जणा)चेवेत्यनेनस्वयमेवप्रतिपादितः। उद्देशार्थाधिकारं तूत्तरनिर्युक्तिकृदेव जणिष्यति।सांप्रतं निक्षेपः सचौघनामसूत्रालापकन्नेदात्रिधा। तत्रौघनिष्पन्ने निक्षेपेऽध्ययनं नामनिष्पन्ने स्त्रीपरिज्ञेति नाम। तत्र नामस्थापने क्षुसत्वादनादृत्य स्त्रीशब्दस्य द्रव्यादिनिक्षेपार्थमाह। ( दवाभिलावेत्यादि )। दवाभिलावचिंधे, देवेनावेयइत्थिणिक्खेवो । अहिलावे तहसिद्धी, भावे वेयंमिउवउत्तो ॥ ५६ ॥ तत्र द्रव्यस्त्री द्वेधा। आगमतोनोआगमतश्च । आगमतः स्त्रीपदार्थज्ञस्तत्र चानुपयुक्तोनुपयोगोद्रव्यमिति कृत्वा नोआगमतोज्ञशरीरजव्यशरीरव्यतिरिक्तात्रिधा । एकजविकाबद्धाऽयुष्कानिमुखनामगोत्रावेति । चिन्ह्यते ज्ञायतेऽनेनेतिचिह्नं स्तननेपथ्यादिकं चिह्नमात्रेण स्त्री चिह्नस्त्री अपगतस्त्री वेदछद्मस्थः केवलीवा अन्योवा स्त्रीवेषधारी यः कश्चिदिति। वेदस्त्रीतु पुरुषानिलापरूपः स्त्रीवेदोदयः। अनिलापभावौ तु निर्युक्तिकृदेव गाथापश्चार्द्धेनाह। अनिलाप्यते इत्यनिलापः स्त्रीलिंगानिधानः शब्दः। तद्यथा।शाला माला सिद्धिरिति। नावस्त्री तुद्वेधा। आगमतोनोआगमतश्च। आगमतः स्त्रीपदार्थज्ञस्तत्र चोपयुक्तउपयोगोनावइति कृत्वा नोआगमतस्तु नावविषये निक्षेपे वेदेस्त्रीवेदरूपे वस्तुन्युपयुक्तातडपयोगानन्यत्वान्नावस्त्री नवति । यथाऽग्नावुपयुक्तोमाणवकोग्निरेव नवत्येवमत्रापि। यदिवा स्त्रिवेदनिवर्तकान्युदयप्राप्तानि यानि कर्माणि तेपूपयुक्तेति तान्यनुनवंतीनावस्त्रीति। एतावानेव स्त्रियोनिक्षेपइति। परिज्ञानिक्षेपस्तु शस्त्रपरिज्ञावद् द्रष्टव्यः। सांप्रतं स्त्रीविपक्षनूतं पुरुषनिक्षेपार्थमाह। (नामंठवणाइत्यादि)। णामंठवणादविए खेत्ते कालेयपज्जणएकंमे। नोगेगुणेयनावे, दसएएपुरिसणिक्खेवा ॥५७॥ नामेति संज्ञा तन्मात्रेण पुरुषोनामपुरुषः। यथाघटः पटइति यस्य वा पुरुषइति नामेति। स्थापनापुरुषः काष्ठादिनिवर्तितोजिनप्रतिमादिकः । द्रव्यपुरुषोज्ञशरीरजव्यशरीरव्यतिरिक्तोनो आगमतएकनविकोबद्धायुष्कोनिमुखनामगोत्रश्चेति। द्रव्यप्रधानोवा मम्मणवणिगादिरिति। योयस्मिन् सुराष्ट्रादौ क्षेत्रे नवः सक्षेत्रपुरुषोयथा सौराष्ट्रिकइति । यस्यच यत् क्षेत्रमाश्रित्य पुंस्त्वं नवतीति।योयावंतं कालं पुरुषवेदवेद्यानि कर्माणि वेदयते सकालपुरुषइति। यथा पुरिसेणंनंते पुरिसेत्ति कालउक्केच चिरं होइ। गो. जहन्नेणं एगंसमयंउक्कोसेणंजोजम्मिकालेपुरिसोन वइ। जहाकोइएगंमिपक्खेपुरिसोएगंमिनपुंसगोत्ति। प्रजन्यतेऽपत्यं येन तत्प्रजननं शिश्नं लिंगं तत्प्रधानः पुरुषः परपुरुषकार्यरहितत्वात् प्रजननपुरुषः।कर्मानुष्ठानं तत्प्रधानः पुरुषः कर्मपुरुषः कर्मकरादिकस्तथा नोगप्रधानः पुरुषोनोगपुरुषश्चक्रवर्त्यादिस्तथा गुणाव्यायामविक्रमधैर्यसत्वादिकास्तत्प्रधानः पुरुषोगुणपुरुषः। नावपुरुषस्तु पुंवेदोदये वर्तमानस्तद्वेद्या

नि कर्माण्यनुनवन्तीत्येते दशपुरुषनिक्षेपान्नवंति। सांप्रतं प्रागुल्लिंगितमुद्देशार्थाधिकारमधि कृत्याह (पढमेइत्यादि) पढमेसंथवसंलवमाइहिखलणाउद्दोतिसीलस्स। बितिएइहेवखलियस्सश्रवन्नाकम्मबंधोयं॥५७॥प्रथमे उद्देशके अध्ययनार्थाधिकारः।तद्यथा। स्त्रीनिःसार्धं संस्तवेन परिचयेन यथा संलापेन निन्नकथाद्यालापेनादिग्रहणादंगप्रत्यंगनिरीक्षणादिना कामोत्काचकारिणोनवेदल्पसत्वस्य शीलस्य चारित्रस्य स्खलनातुशब्दात्तत्परित्यागोवेति। द्वितीये त्वयमर्थाधिकारस्तद्यथा। शीलस्खलितस्य साधोरिहैवास्मिन्नेव जन्मनि स्वपक्षप रपक्षकृता तिरस्कारादिका विमंबना तत्प्रत्ययश्च कर्मबंधस्ततश्च संसारसागरपर्यटनमिति। किं स्त्रीनिः कश्चित् शीलात् प्रच्याव्यात्मवशः कृतोयेनैवमुच्यते कृतइति दर्शयितुमा ह। (सूरामोइत्यादि) सूरामोमन्नंता, कतिववियाहिंउवहिप्पहाणाहिं॥ गहियाहुंश्च नयपङ्गोवकूलवालादिणोबहवे॥५९॥ बहवः पुरुषाश्चनयप्रद्योतकूलवालादयः शूरा वयमित्येवं मन्यमानाः। मो इतिनिपातोवाक्यालंकारार्थः। कृत्रिमानिः सद्भावरहितानिः स्त्रीनिस्तथोपधिर्माया तत्प्रधानानिः कृतकपटशतानिर्गृहीत्वा आत्मवशतां नीताः केचन राज्यादपरे शीलात् प्रच्याव्येहैव विमंबनां प्रापिताः॥ अनयकुमारादिकथानकानिच मूला दावश्यकादवगंतव्यानि। कथानकत्रयोपन्यासस्तु यथाक्रमं मर्त्यबुद्धिविक्रमात्यंतबुद्धि विक्रमतपस्वित्वख्यापनार्थइति। यतएवं ततोयत्कर्तव्यं तदाह। तम्हाणउवीसंनोगं तवो णिच्चमेवइत्नीसु॥ पढमुद्देसेनणिया, जेदोसातेगणंतेणं॥६०॥ (तम्हाइत्यादि)। यस्मा त् स्त्रियः सुगतिमार्गार्गलामायाप्रधानावंचनानिपुणास्तस्मादेतदवगम्य नैव विश्रंनोवि श्वासस्तासां विवेकिना नित्यं सदा गंतव्योयातव्यः कर्तव्यइत्यर्थः। ये दोषाः प्रथमोद्दे शके अस्योपलक्षणार्थत्वात् द्वितीयेच तान् गणयता पर्यालोचयता तासां मूर्तिमत्कप टराशिनूतानामात्महितमिच्छता नविश्वसनीयमिति। अपिच। सुसमत्नावसमत्ना, की रंतीअप्पसत्तियापुरिसा। दीसंतीसूरवादीणारीवसगाणतेसूरा॥६१॥(सुसमत्नेत्यादि) परा नीकविजयादौ सुष्ठु समर्थाअपि संतः पुरुषाः स्त्रीनिरात्मवशीकृताअसमर्थाभ्रूक्षेपमात्र नीरवः क्रियंतेल्पसात्विकाः स्त्रीणामपि पादपतनादिचाटुकरणेन निःसाराः क्रियंते त था दृश्यंते प्रत्यक्षेणोपलन्यंते। शूरमात्मानं वदितुं शीलं येषां ते शूरवादिनोपि नारीवश गाः संतोदीनतां गताः। एवंनूताश्च नते शूराइति। तस्मात् स्थितमेतदविश्वास्याः स्त्रियइ ति। उक्तंच। कोवीससेऊतासिं,कतिवयनरियाणडुच्चियद्वाणे। खणरत्तविरत्तेणं, धिरत्थु इत्नीणहियियाणं॥१॥ अणं नणंतिपुरउ अण्णंपासेइविज्ञमाणीउ। अन्नंच तासिंहिय ए, जंचखमंतंकरिंतिपुणो॥२॥ कोएयाणंणाहिइ, वेत्तलयागुम्मगुविलहिययाणं॥ नावंन ग्गासाणं तनुपन्नंनणंतीणं॥३॥ महिलायरत्तमेत्ता, उन्नुखंमंचसक्कराचेव। सापुण विरत्तमित्ताणिंबंकूरेविसेसेत्ति॥४॥ महिलादिज्ञकरेज्ञवमारिज्ञवसंठविज्ञवमणुस्सं। तुठा

जीवाविज्जाश्रद्दवरणरं वंचयावेज्जा ॥ ५ ॥ णविरक्कंतेसुकयं, णविपेद्दंणवियदाणस म्माणं ॥ एकुलंणपुत्तपंश्रायतंच शीलंमहिलियाउ ॥ ६ ॥ मावीसंनद्दताणं महि लाहिययाणकवड नरियाणं ॥ सिसुसेद्दनिद्दयाणं अलियवयणजंपणरयाणं ॥ ७ ॥ मारेइ जियंतंपिहुमयंपि अणुमरइकाइनत्तारं ॥ विसहरगइवचरियं वंकविवंकंमहेलाणं ॥ ८ ॥ गंगाएवालुयंसागरेजलंहिमवउंयपरिमाणं । जाणंति बुद्धिमंतामहिलाहिययंणजाणंति ॥ ए ॥ रोवावंतिरुवंतिय अलियंजपंतिपत्तियावंति ॥ कवडेणयखंतिविसंमरंतिणयजंतिस प्रावं ॥१०॥ चिंतिंतिकज्जमण्णंश्रण्णंसंठवइनासईश्रण्णं॥श्राढवइकुणइश्रण्णं माइणगूणिय मिसारो ॥ ११ ॥ असयारंनाणतद्दासवेसिंलोगगरद्दणिज्जाणं ॥ परलोगवेरियाणंकारणयं चेवइहीउं ॥ १२ ॥ अहवाकोजुवईणं जाणइचरियंसहावकुमिलाणं ॥ दोसाणआगरोचि य जणेसरीरेवसइकासा ॥ १३ ॥ मूलडुच्चरियाणं हवइउणरयस्सवत्तिणी ॥ विवुला मो क्खस्समहाविग्धंवज्जेयवासयानारी ॥ १४ ॥ धसातेवरपुरिसाजेच्चियमोत्तूणणियययजुव ईउं ॥ पवइयाकयनियमासिवमयलमणुत्तरंपत्ता ॥ १५ ॥ अधुना यादृक्षः शूरोनवति तादृक्षं दर्शयितुमाह । धम्मंमिजोदढमइसोसूरोसत्तिउयवीरोय ॥ णहुधम्मणिरुस्साहोपुरि सोसूरोसुवलिउंवि ॥ ६२ ॥ (धम्ममित्यादि) । धर्मे श्रुतचारित्राख्ये दृढा निश्चला मति र्यस्य सतथा एवंनूतः सइंद्रियनोइंद्रियारिजयाच्छूरस्तथा सात्त्विकोमहासत्वोपेतोऽसा वेव वीरः स्वकर्मदारुणसमर्थोऽसावेवेति । किमिति यतोनैव धर्मनिरुत्साहः सदनुष्ठाननि रुद्यमः सत्पुरुषाचीर्णमार्गपरिभ्रष्टः पुरुषः सुष्टु बलवानपि शूरोनवतीति । एतानेव दोषान् पुरुषसंबंधेन स्त्रीणामपि दर्शयितुमाह । एतेचेवयदोसा पुरीससमाएविइत्थियाणंपि ॥ त म्हाणअप्पमाउविरागमग्गंमितासिंतु ॥६०॥(एतेचेवेत्यादि)। ये प्राक्शीलप्रध्वंसादयः स्त्री परिचयादिन्यः पुरुषाणामनिहिताएतएव न्यूनाधिकाः पुरुषेण सह यः समायः संबंधस्त स्मिन स्त्रीणामपि यस्माद्दोषानवंति तस्मात्तासामपि विरागमार्गे प्रवृत्तानां पुरुषपरिचया दिपरिहारलक्षणोऽप्रमादएव श्रेयानिति । एवं यडुक्तं स्त्रीपरिज्ञेति तत्पुरुषोत्तमधर्मप्रति पादनार्थमन्यथा पुरुषपरिज्ञेत्यपि वक्तव्येति । सांप्रतं सूत्रानुगमे स्खलितादिगुणोपेतं सूत्रमुच्चारणीयं । तच्चेदं । ( जेमायरंचेत्यादि ) । अस्य चाऽयमनंतरसूत्रेण सह संबं धः । तद्यथा । अनंतरसूत्रेनिहितमामोक्षाय परिव्रजेदित्येतच्चाऽशेषानिष्वंगवर्जितस्य नवतीत्यतोऽनेन तदनिष्वंगवर्जनमनिधीयते । यः कश्चिडत्तमसत्वोमातरं पितरं जननीं जनयितारमेतद्ग्रहणादन्यदपि भ्रातृपुत्रादिकं पूर्वसंयोगं तथा श्वश्रूश्वशुरादिकं पश्चात्सं योगं च विप्रहाय त्यक्त्वा । चकारौ समुच्चयार्थौ । एकोमातापित्राद्यनिष्वंगवर्जितः क षायरहितोवा तथा सहितोज्ञानदर्शनचारित्रैः स्वस्मै वा हितः स्वहितः परमार्थानुष्ठा नविधायी चरिष्यामि संयमं करिष्यामीत्येवं कृतप्रतिज्ञः । ता मेव प्रतिज्ञां सर्वप्रधान

नूतां लेशतोदर्शयति । आरतमुपरतं मैथुनं कामाभिलापोयस्यासावारतमैथुनस्तदेवंभू तोविविक्तेषु स्त्रीपशुपंमकवर्जितेषु स्थानेषु चरिष्यामीत्येवं सम्यगुत्थानेनोत्थाय विहरती ति । क्वचित्पाठो ( विवित्तेसित्ति ) विविक्तं स्त्रीपंडकादिरहितं स्थानं संयमानुपरोध्ये षितुं शीलमस्य तथेति ॥ १ ॥ तस्यैवं कृतप्रतिज्ञस्य साधोर्यथावत्यविवेकिस्त्रीजनात्त दर्शयितुमाह । ( सुहुमेणेत्यादि ) । तं महापुरुषं साधुं सूक्ष्मेणाऽपरकार्यव्यपदेशभूते न छन्नपदेनेति छद्मना कपटजालेन पराक्रम्य तत्समीपमागत्य यदिवा पराक्रम्येति शील स्खलनयोग्यतापत्त्या अभिभूय काः स्त्रियः कूलवालकादीनामिव मागधगणिकाद्यानाना विधकपटशतकरणदक्षाविविधबिब्बोकवत्योभावमंदाः कामोऽनेकविधायितया सदसद्वि वेकविकलाः समीपमागत्य शीलात् ध्वंसयंति । एतदुक्तं भवति भ्रातृपुत्रव्यपदेशेन साधुस मीपमागत्य संयमाद् भ्रंशयंति । तथाचोक्तं । पियपुत्तेभाइ किडगाणत्तूचकिन्हगायसय णकिडगाय॥एतेजोव्वण किन्हगा पच्छन्नपइमहिलियाणं । यदिवा छन्नपदेनेति गुप्ताभि मानेन । तद्यथा । काले प्रसुप्तस्य जनार्दनस्य मेघांधकारासु च शर्वरीषु॥मिथ्या न भाषा मि विशालनेत्रे ते प्रत्ययाये प्रथमाक्षरेषु इत्यादि ॥ ताः स्त्रीयो मायाप्रधानाः प्रतारणो पायमपि जानंत्युत्पन्नप्रतिभतया विदंति । पाठांतरं वा ज्ञातवत्यः यथाश्लिष्यंते विवेकि नोपि साधवएके तथाविधकर्मोदयात् तासु संगं उपयांति ॥ २ ॥

पासे भिसं णिसीयंति, अभिक्खणं पोसवत्थं परिहिंति ॥ कायं अहे
वि दंसंति, बाहूउद्दत्तुकक्खमणुवजे ॥ ३ ॥ सयणासणेहिं जोगेहिं,
इत्थिउ एगता णिमंतंति ॥ एयाणिचेव सेजाणे, पासाणि विरूवरूवाणि॥४॥

अर्थ—हवे जे उपाये करी ते स्त्री साधुने विप्रतारे ते उपाय कहेछे. ते स्त्री पासेके० साधुनी पासे भिसं के० ढुकडी एटले नजीक आवी णिसीयंति के० बेशीने अभिक्खणं— के० वारंवार पोस के० जेरीते कामविकार पोषाय तेरीते वत्थंपरिहिंति के० वस्त्र पहेरे कायंअहे के० नीचलुं शरीर जे जंघादिक ते विदंसंति के० देखाडे बाहूउद्दत्तु के० बं ने बाहु उंची उपाडीने कक्खं के० कांख देखाडती छती अणुवजे के० साधुने सन्मुख जाय अथवा साधुने सन्मुख नजर राखे ॥ ३ ॥ वली इत्थिउ एगता के० कोइ एक स्त्री एकदा प्रस्तावे जोगेहिं के० साधुने लेवा योग्य एवा सयणासणेहिं के० सय नाशन एटले पाट पाटलादिके करी निर्व्यंजन वेलाये स्नेहना वचने करी णिमंतंतिके० निमंत्रणा करे तेवारे विरूवरूवाणि एयाणि के० विरूपरूप एवा ए पूर्वोक्त नानाप्र कारना जे पाट पाटलादिक तेने पासाणिके० ए सुफने बंधनना करनाराछे एरीते सेके० ते साधु जाणे के० जाणीने त्यां बेसे नही. चेव शब्द पद पूरणार्थेछे. ॥ ४ ॥

॥ दीपिका–नृशं सस्नेहं निषीदंति तिष्ठंतिस्त्रियः पुष्णात्यतिपोषं मनोहरवस्त्रं परिद धति अनीक्ष्णं निरंतरं तथाधःकायं ऊर्वादिकं दर्शयंति बाहून् उद्धृत्य ऊर्ध्वीकृत्य कक्षा मादर्श्यानुव्रजेत् अनुकूलं गच्छेत् ॥ ३ ॥ शयनासनैर्योग्यैर्भोगयोग्यैः स्त्रियएकदा नि र्व्यंजनकालादौ निमंत्रयंति प्रार्थयंति साधुं । ससाधुस्तानि शयनासनानि पाशरूपाणि जानीयात् बंधनरूपाणि अवगच्छेत विरूपरूपाणि तानि नानाविधानि ॥ ४ ॥

---

॥ टीका–तानेव सूक्ष्मप्रतारणोपायान् दर्शयितुमाह । ( पासेनिसमित्यादि ) पार्श्वे समीपे नृशमत्यर्थमुरःपीडमतिस्नेहमाविष्कुर्वत्योनिषीदंति विश्रंभमापादयितुमुपविशं तीति । तथा कामं पुष्णातीति पोषं कामोत्काचकारि शोभनमित्यर्थः । तच्च तद् स्त्रं तदभीक्ष्णमनवरतं तेन शिथिलादिव्यपदेशेन परिदधति स्वाभिलापमावेदयंत्यः सा धुप्रतारणार्थं परिधानं शिथिलीकृत्य पुनर्निबध्नंतीति । तथाऽधःकायमूर्वादिकमनंगोद्दीप नाय दर्शयंति प्रकटयंति तथा बाहुमुद्धृत्य कक्षामादर्श्याऽनुकूलं साध्वभिमुखं व्रजेत् ग च्छेत् । संभावनायां लिङ् । संभाव्यते एतदनंगप्रत्यंगसंदर्शकत्वं स्त्रीणामिति ॥३॥ अपिच । ( सयणासणेइत्यादि ) शय्यतेऽस्मिन्निति शयनं पर्यंकादि तथाऽऽस्यतेऽस्मिन्नित्यासनमा संदकादीत्येवमादिना योग्येनोपभोगार्हेण कालोचितेन स्त्रियोयोषितएकदेति विविक्त देशकालादौ निमंत्रयंत्यभ्युपगमं ग्राहयंति । इदमुक्तं भवति । शयनासनाद्युपभोगंप्रति साधुं प्रार्थयंति । एतानेव शयनासननिमंत्रणरूपान् ससाधुर्विदितवेद्यः परमार्थदर्शी जा नीयादवबुध्येत स्त्रीसंबंधिकारिणः पाशयंति बध्नंतीति पाशास्तान्विरूपरूपान् नानाप्रका रानिति । इदमुक्तं भवति । स्त्रियोह्यासन्नगामिन्योभवंति । तथाचोक्तं । अंबं वा निंबं वाअग्गा सगुणेन आरुहाइ वल्ली । एवं इत्थीतोविजं आसन्नं तमिच्छंति ।१। तदेवंभूताः स्त्रियोज्ञात्वा न ताभिः सार्धं साधुः संगं कुर्याद्यतस्तदुपचारादिकःसंगोडुप्परिहार्योभवति । तदुक्तं।जंइछति घेत्तुंजे, पुव्विंतं आमिसेण गिण्हाहि॥आमिसपासनिबद्धोकाहिइकज्जंअकज्जंवा॥ २ ॥ ४ ॥

नोतासु चक्खु संधेज्जा, नोविय साहसं समभिजाणे ॥ णोसद्धियंपि वि हरेज्जा, एवमप्पासु रक्खिओ होइ ॥५॥ आमंतिय उस्सविय भिक्खु आ यसा निमंतंति ॥ एताणि चेव सेजाणे, सद्दाणि विरूवरूवाणि ॥ ६ ॥

अर्थ–नो तासुचक्खुसंधेज्जा के० तेस्त्रीनी दृष्टी साथे साधु पोतानी दृष्टी मेळवे न ही, तथा नोवियसाहसं के० मैथुनादिक अकार्यनुं करवुं करे नही, अने समभिजाणे के० ते स्त्रीनुं कहेलुं जे विषयनी प्रार्थनारूप वचन तेने अनुमोदे नही. णोसद्धियं पिवि हरेज्जा के० वळी ते स्त्रीनीसाथे ग्रामादिकने विषे विचरे नही, एव के० एरीते रहेता

नूतां लेशतोदर्शयति । आरतमुपरतं मैथुनं कामाभिलापोयस्यासावारतमैथुनस्तदेवंभू तोविविक्तेषु स्त्रीपशुपंडकवर्जितेषु स्थानेषु चरिष्यामीत्येवं सम्यगुत्थानेनोत्थाय विहरती ति । क्वचित्पाठो ( विवित्तेसित्ति ) विविक्तं स्त्रीपंडकादिरहितं स्थानं संयमानुपरोध्ये षितुं शीलमस्य तथेति ॥ १ ॥ तस्यैवं कृतप्रतिज्ञस्य साधोर्यथाभवत्यविवेकिस्त्रीजनात्त द्दर्शयितुमाह । ( सुहुमेणेत्यादि ) । तं महापुरुषं साधुं सूक्ष्मेणाऽपरकार्यव्यपदेशभूते न छन्नपदेनेति छद्मना कपटजालेन पराक्रम्य तत्समीपमागत्य यदिवा पराक्रम्येति शील स्खलनयोग्यतापत्त्या अभिभूय काः स्त्रियः कूलवालकादीनामिव मागधगणिकाद्यानाना विधकपटशतकरणदक्षाविविधबिब्बोकवत्योभावमंदाः कामोद्रेकविधायितया सदसद्वि वेकविकलाः समीपमागत्य शीलात् ध्वंसयंति । एतदुक्तं भवति भ्रातृपुत्रव्यपदेशेन साधुस मीपमागत्य संयमाद् भ्रंशयंति । तथाचोक्तं । पियपुत्तेभाइ किडगाणत्तूचकिम्हगायसय णकिडगाय॥एतेजोव्वण किम्हगा पच्छन्नपइमहिलियाणं । यदिवा छन्नपदेनेति गुप्ताभि मानेन । तद्यथा । काले प्रसुप्तस्य जनार्दनस्य मेघांधकारासु च शर्वरीषु॥मिथ्या न भाषा मि विशालनेत्रे ते प्रत्ययाये प्रथमाक्षरेषु इत्यादि ॥ ताः स्त्रीयो मायाप्रधानाः प्रतारणो पायमपि जानंत्युत्पन्नप्रतिभतया विदंति । पाठांतरं वा ज्ञातवत्यः यथाश्लिष्यंते विवेकि नोपि साधवएके तथाविधकर्मोदयात् तासु संगं उपयांति ॥ २ ॥

पासे भिसं णिसीयंति, अभिक्खणं पोसवत्थं परिहिंति ॥ कायं अहे
वि दंसंति, बाहूउद्धटुकक्खमणुव्वजे ॥ ३ ॥ सयणासणेहिं जोगेहिं,
इत्थिओ एगता णिमंतंति ॥ एयाणिचेव सेजाणे, पासाणि विरूवरूवाणि॥४॥

अर्थ—हवे जे उपाये करी ते स्त्री साधुने विप्रतारे ते उपाय कहेछे. ते स्त्री पासेके० साधुनी पासे भिसं के० ढुकडी एटले नजीक आवी णिसीयंति के० बेशीने अभिक्खणं के० वारंवार पोस के० जेरीते कामविकार पोषाय तेरीते वत्थंपरिहिंति के० वस्त्र पहेरे कायंअहे के० नीचलुं शरीर जे जंघादिक ते विदंसंति के० देखाडे बाहूउद्धटु के० बं ने बाहु उंची उपाडीने कक्खं के० कांख देखाडती छती अणुव्वजे के० साधुने सन्मुख जाय अथवा साधुने सन्मुख नजर राखे ॥ ३ ॥ वली इत्थिओ एगता के० कोइ एक स्त्री एकदा प्रस्तावे जोगेहिं के० साधुने लेवा योग्य एवा सयणासणेहिं के० सय नाशन एटले पाट पाटलादिके करी निर्थंजन वेलाये स्नेहना वचने करी णिमंतंतिके० निमंत्रणा करे तेवारे विरूवरूवाणि एयाणि के० विरूपरूप एवा ए पूर्वोक्त नानाप्र कारना जे पाट पाटलादिक तेने पासाणिके० ए मुझने बंधनना करनाराछे एरीते सेके० ते साधु जाणे के० जाणीने त्यां बेसे नही. चेव शब्द पद पूरणार्थछे. ॥ ४ ॥

॥ दीपिका—भृशं सस्नेहं निषीदंति तिष्ठंतिस्त्रियः पुष्णात्यतिपोषं मनोहरवस्त्रं परिद धति अनीक्ष्णं निरंतरं तथाधःकायं कर्वादिकं दर्शयंति बाहून् उद्धृत्य ऊर्ध्वीकृत्य कक्षा मादर्श्यानुव्रजेत् अनुकूलं गच्छेत् ॥ ३ ॥ शयनासनैर्योग्यैर्भोगयोग्यैः स्त्रियएकदा नि र्व्यंजनकालादौ निमंत्रयंति प्रार्थयंति साधुं । ससाधुस्तानि शयनासनानि पाशरूपाणि जानीयात् बंधनरूपाणि अवगच्छेत विरूपरूपाणि तानि नानाविधानि ॥ ४ ॥

॥ टीका—तानेव सूक्ष्मप्रतारणोपायान् दर्शयितुमाह । ( पासेनिसमित्यादि ) पार्श्वे समीपे भृशमत्यर्थमुरःपीडमतिस्नेहमाविष्कुर्वत्योनिषीदंति विश्रंभमापादयितुमुपविशं तीति । तथा कामं पुष्णातीति पोषं कामोत्काचकारि शोभनमित्यर्थः । तच्च तद्व स्त्रं तदभीक्ष्णमनवरतं तेन शिथिलादिव्यपदेशेन परिदधति स्वाभिलापमावेदयंत्यः सा धुप्रतारणार्थं परिधानं शिथिलीकृत्य पुनर्निबध्नंतीति । तथाऽधःकायमूर्वादिकमनंगोद्दीप नाय दर्शयंति प्रकटयंति तथा बाहुमुद्धृत्य कक्षामादर्श्याऽनुकूलं साध्वभिमुखं व्रजेत् ग च्छेत् । संभावनायां लिङ् । संभाव्यते एतदनंगप्रत्यंगसंदर्शकत्वं स्त्रीणामिति ॥३॥ अपिच । ( सयणासणेइत्यादि ) शय्यतेऽस्मिन्निति शयनं पर्यंकादि तथाऽऽस्यतेऽस्मिन्नित्यासनमा संदकादीत्येवमादिना योग्येनोपभोगार्हेण कालोचितेन स्त्रियोयोषितएकदेति विविक्त देशकालादौ निमंत्रयंत्यभ्युपगमं ग्राहयंति । इदमुक्तं भवति । शयनासनाद्युपभोगंप्रति साधुं प्रार्थयंति । एतानेव शयनासननिमंत्रणरूपान् ससाधुर्विदितवेद्यः परमार्थदर्शी जा नीयादवबुध्येत स्त्रीसंबंधिकारिणः पाशयंति बध्नंतीति पाशास्तान्विरूपरूपान् नानाप्रका रानिति । इदमुक्तं भवति । स्त्रियोह्यासन्नगामिन्योभवंति । तथाचोक्तं । अंबं वा निंबं वाअभ्या सगुणेन आरुहइ वल्ली । एवं इत्थीतोविअं आसन्नं तमिच्छंति । १ । तदेवंभूताः स्त्रियोज्ञात्वा न ताभिः सार्धं साधुः संगं कुर्यायतस्तदुपचारादिकःसंगोदुष्परिहार्योभवति । तदुक्तं।जंइच्छसि घेत्तुंजे, पुव्विंतं आमिसेण गिण्हाहि।आमिसपासनिबद्धोकाहिइकज्जंअकज्जंवा॥ २ ॥ ४ ॥

नोतासु चक्खु संधेज्जा, नोविय साहसं समभिजाणे ॥ णोसहियंपि वि हरेज्जा, एवमप्पासु रक्खिउं होइ ॥५॥ आमंतिय उस्सविय भिक्खु आ यसा निमंतंति ॥ एताणि चेव सेजाणे, सद्दाणि विरूवरूवाणि ॥ ६॥

अर्थ—नो तासुचक्खुसंधेज्जा के० तेस्त्रीनी दृष्टी साथे साधु पोतानी दृष्टी मेळवे न ही, तथा नोवियसाहसं के० मैथुनादिक अकार्यनुं करवुं करे नही, अने समभिजाणे के० ते स्त्रीनुं कहेलुं जे विषयनी प्रार्थनारूप वचन तेने अनुमोदे नही. णोसहियं पिवि हरेज्जा के० वळी ते स्त्रीनीसाथे ग्रामादिकने विषे विचरे नही, एव के० एरीते रहेता

थका अप्पा के० पोताना आत्मानु रकिउं के० रक्षण सु के० रुमीरीते होइ के० था य ॥ ५ ॥ स्त्री स्वनावे अकार्य करवाने सावधान होयछे, तेमाटे निरकु के०साधुने आ मंतिय के० आमंत्रीने कहे के हुं अमुक वखते आवीश, एम संकेत कहीने उस्स विय के० विश्वास उपजावे आयसा के० पोते पोताना आत्माने मैथुन सेववाने अर्थे एकदा प्रस्तावे निमंतंति के० साधुने निमंत्रण करे, अथवा साधुने निवारवा नणी ते स्त्री एम कहेके आयसा के० माहारा नर्तारना आदेशथी हुं तमारा पाशे आवी छुं, एवी रीते पोताने वश करवाना वचन कहे एताणिचके० ए पूर्वोक्त वचनने करी अंहींच पद पूरणार्थे ने एव के० एम से के० ते साधु जाणे के० ज्ञ परिज्ञायेकरी स्त्रीनुं स्वरूप जेवुंछे तेवुं जाणे सुंजाणे तोके सद्दाणि विरूवरूवाणि के० विषय संबधिया नानाप्रकारना हावनावादिकरूप जे स्त्रीना शब्द तेने साधु बंध पासना कारण जाणे. ॥ ६ ॥

---

॥ दीपिका—नो तासु स्त्रीषु चक्षुः संदध्यात् संधयेत् । स्वदृष्टिः स्त्रीदृष्टौ न निवेशयेदित्यर्थः॥ यतिः कार्ये ईषदवज्ञया निरीक्षेत । यदुक्तं । कार्येपीषन्मतिमान्निरीक्षते योषिदंगमस्थिरया॥ अस्निग्धयादृशावज्ञयाह्यकुपितोपि कुपितइवेति॥तथा नोपि च साहसमकार्यकरणं तत्प्रार्थ नया समनुजानीयात्प्रतिपद्येत स्त्रीनिः सार्धं ग्रामादौ न विहरेन्नगच्छेत्। अपिशब्दात्तानिः सहै कासने नतिष्ठेत्॥ यदुक्तं। मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो नवेत्॥बलवानिंद्रियग्रामः पंमितोप्यत्र मुह्यतीति । एवमात्मा सुरक्षितोनवति ॥ ५ ॥ ताः स्त्रियः साधुमामंत्र्य सं केतं ग्राहयित्वा (उस्सविअत्ति) संस्थाप्य उच्चावचैर्विश्वासजनकैरालापैर्विश्रंने पातयित्वा निकुं आत्मनोनिमंत्रयंति आत्मनोगेन साधुमन्युपगमं कारयंति सच निक्षुरेतान्विरूपरूपा न् नानाविधान् शब्दादिविषयान् ज्ञपरिज्ञया जानीयात् प्रत्याख्यानपरिज्ञया परिहरेत् ॥६॥

---

॥ टीका—किंच । ( णोतासु इत्यादि ) नोनैव तासु शयनासनोपमंत्रणपाशावपाशिकासु स्त्रीषु चक्षुर्नेत्रं संदध्यात्संधयेद्वा न तद्दृष्टौ स्वदृष्टिं निवेशयेत् । सतिच प्रयोजने ईषदवज्ञया निरीक्षेत । तथाचोक्तं । कार्येपीषन्मतिमान्निरीक्षते योषिदंगमस्थिरया । अस्निग्धया दृशाऽवज्ञया ह्यकुपितोपि कुपितइव ॥ १ ॥ तथा नापिच साहसमकार्यकरणं तत्प्रार्थनया समनुजानीयात्प्रतिपद्येत । तथा ह्यसति साहसमेतत्संग्रामावतरणवद्य न्नरकपातादिविपाकवेदिनोपि साधोर्योषिदासंजनमिति । तथा नैव स्त्रीनिः सार्धं ग्रामादौ विहरेत् गच्छेत् । अपिशब्दान्न तानिः सार्धं विविक्तासनोनवेद्यतोमहापापस्थानमेतद्यतीनां यत् स्त्रीनिः सह सांगत्यमिति ॥ तथाचोक्तं । मात्रा स्वस्रा दुहित्रा वा नविविक्तासनो नवेत् ॥ बलवानिंद्रियग्रामः पंमितोप्यत्रमुह्यति ॥ १ ॥ एवमनेन स्त्रीसंगवर्जनेनात्मा स

मस्तापायस्थानेन्योरक्षितोभवति । यतः सर्वापायानां स्त्रीसंबंधः कारणमतः स्वहितार्थी तत्संगं दूरतः परिहरेदिति ॥ ५ ॥ कथं चैताः पाशाइव पाशिकाइत्याह ( आमंतिये त्यादि ) स्त्रियोहि स्वभावेनैवाकर्तव्यप्रवणाः साधुमामंत्र्य यथाहममुकस्यां वेलायां भव दंतिकमागमिष्यामीत्येवं संकेतं ग्राहित्वा तथा ( उस्सवियत्ति ) संस्थाप्योच्चावचैर्वि श्रंभजनकैरालापैर्विश्रंभे पातयित्वा पुनरकार्यकरणायात्मना निमंत्रयंत्यात्मनोपभोगेन साधुमभ्युपगमं कारयंति । यदिवा साधोर्भयापहरणार्थं ताएव योषितः प्रोचुस्तद्यथा भ तारमामंत्र्याप्रष्ट्वाहमिहायाता तथा संस्थाप्य भोजनपदधावनशयनादिकया क्रिययो पचर्य ततस्त्वदंतिकमागतेत्यतोभवता सर्वा मद्भर्तृजनितामाशंकां परित्यज्य निर्भयेन भाव्यमित्येवमादिकैर्वचोभिर्विश्रंभमुत्पाद्य भिक्षुमात्मना निमंत्रयंते । युष्मदीयमिदं शरीरकं यादृक्तस्य क्षोदीयसोगरीयसोवा कार्यस्य क्षमं तत्रैव निमज्ञतामित्येवमुपप्र लोभयंति । सच भिक्षुरवगतपरमार्थएतानेव विरूपरूपान्नानाप्रकारान् शब्दादीन् विष यान् तत्स्वरूपनिरूपणतोज्ञपरिज्ञया जानीयाद्यथैते स्त्रीसंसर्गापादिताः शब्दादयोविष याडुर्गतिगमनैकहेतवः सन्मार्गार्गलारूपाइत्येवमवबुध्येत । यथा प्रत्याख्यानपरिज्ञया च तद्विपाकागमेन परिहरेदिति ॥ ६ ॥

मणबंधणेहिं णेगेहि,कलुण विणीयमुवगसित्ताणं॥अडु मंजुलाइं भासं
ति, आणवयंति भिन्नकहाहिं॥७॥ सीहं जहा च कुणिमेणं, निभ्रयमेगच
रंति पासेणं ॥ एवं त्थियाउ वंधंति संवुमं एगतियमणगारं ॥ ८ ॥

अर्थ–(मणबंधणेहिंके०) मनने बंधन करे एवा अणेगेहिके० अनेक प्रपंचकरती कलुण के० जे थकी पुरुषने दया उपजे तेवा करुणाना वचने विणीय के० विनय पूर्वक उवगसित्ताणं के० साधुनी पासे आवीने अडु के० अथवा निरंतर मंजुलाइं के० मधुर स्नेह सहित मनोहर वचन भासंति के० बोले तथा भिन्नकहाहिं के० भि न्नकथा एटले रहस्यवार्ता जे मैथुन संबंधि छाना वचन तेणे करी आणवयंति के० से वकनी पेरे साधुने ते स्त्री पोतानी आज्ञा करावे, अथवा भिन्नकहाहि के० मैथुन संबं धिया वचनेकरी ते स्त्री आणवयंति के० साधुनुं चित्त मैथुन सेववा नणी प्रवर्त्ते तेम मैथुन सेववानी आज्ञा आपी पोतानी आज्ञायें साधुने प्रवर्त्तावे ॥ ७ ॥ हवे दृष्टांते करी देखाडेछे. जहाचके० जेम सीहंकुणिमेणंके० सिंहने मांसे करी लोभवीने निभ्रयं के० निर्भ य करी ने एगचरंति के० एकलो थको विचरे तेम करी पछी तेने पासेणं के० अनेक बंधने बांधीने कदर्थियें एवं के० एम त्थियाउ के० स्त्रीपण संवुमं के० जेणे मन वचन

अने कायाने संवरयाछे एवा एगतियं अणगारंके० कोइएक सुव्रती अणगारने स्नेहरूप बंधनेकरी बंधंतिके० बांधे धर्म थकी पाडे तो बीजा सामान्य साधुनुं केवुंज शुं. ॥८॥

---

॥ दीपिका–मनो बध्यते यैस्तानि मनोबंधनानि मंजुलालापस्निग्धावलोकनांगप्रकटनादीनि तैरनेकैः करुणालापविनयपूर्वकं ( उवगसित्ताणंति ) उपसंश्लिष्य समीपमागत्याथवा तदनंतरं मंजुलानि पेशलानि जापंते । तथा भिन्नकथाभीरहस्यालापैर्मैथुनसंबद्धैर्वचोभिः साधोश्चित्तमकार्यकरणंप्रति आज्ञापयंति प्रवर्तयंति ॥ ७ ॥ यथा सिंहं (कुणिमेणं) मांसेनोपलोभ्य निर्भयमेकचरं पाशेन यंत्रेण बध्नंति एवं स्त्रियोप्येकं कंचनाऽनगारं साधुं संवृतमपि बध्नंति स्ववशं कुर्वंति ॥ ८ ॥

---

॥ टीका–अन्यच्च । ( मणबंधणेहिइत्यादि ) मनोबध्यते यैस्तानि मनोबंधनानि मंजुलालापस्निग्धावलोकनांगप्रत्यंगप्रकटनादीनि । तथाचोक्तं । णाहपियकंत सामिय दतियजियाउ तुमं मह पिउत्ति। जीएजीयामिअहं पहवसितंमेशरीरस्स ॥ १ ॥ इत्यादिभिरनेकैः प्रपंचैः करुणालापविनयपूर्वकं ( उवगसित्ताणंति ) उपसंश्लिष्य समीपमागत्याऽथ तदनंतरं मंजुलानि पेशलानि विश्रंभजनकानि कामोत्काचकानि वा जापंते। तडुक्तं । मितमहुररिभिय जंपुल्लएहिंईसीकमरकहसिएहिं॥ सविगारेहिवरागंहियंपिहियं मयहीए ॥१॥तथा भिन्नकथाभीरहस्यालापैर्मैथुनसंबद्धैर्वचोभिः साधोश्चित्तमादाय तमकार्यकरणं प्रत्याज्ञापयंति प्रवर्तयंति स्ववशं वा ज्ञात्वा कर्मकरवदाज्ञां कारयंतीति ॥ ७ ॥ अपिच । (सीहंजहेत्यादि) यथेति दृष्टांतोपदर्शनार्थे । यथा बंधनविधिज्ञाः सिंहं पिशितादिनामिषेणोपप्रलोभ्य निर्भयं गतभीकं निर्भयत्वादेवैकचरं पाशेन गलयंत्रादिना बध्नंति बध्वाच बहुप्रकारं कदर्थयंत्येवं स्त्रियोनानाविधैरुपायैः पेशलभाषणादिभिः (एगतियंति ) कंचन तथाविधमनगारं साधुं संवृतमपि मनोवाकायगुप्तमपि बध्नंति स्ववशं कुर्वंतीति । संवृतग्रहणं च स्त्रीणां सामर्थ्योपदर्शनार्थं। तथाहि। संवृतोपि ताभिर्बध्यते किं पुनरपरोऽसंवृतइति ॥ ८ ॥

अह तत्थ पुणो णमयंती रहकारोव णेमि अणुपुव्वी ॥ बद्धे मिएव पासे णं फंदंते वि णमुच्चए ताहे ॥९॥ अह से णुतप्पई पच्छा भोच्चा पायसंच विसम्मिसं ॥ एवं विवेगमादाय, संवासो नविकप्पए दविए ॥ १० ॥

अर्थ–अथ के० हवे साधुने पोताने वश करीने पछी तत्थ के० त्यांते स्त्री पोताना कार्यनेविषे ते साधुने पुणोके० वली णमयंती के० नमाडे एटले सेवकनी पेरे कार्य क

रावे रहकारोव के० जेम रथकार सूत्रधार अणुपुव्वीके० अनुक्रमे णेमिके० पइडानो बाहेरलो प्रदेश नमाडे तेम साधुने ते स्त्री पोताना कार्य करवाने विषे नमाडे प्रवर्त्तावे, तेवारे ते साधु, बद्धे मिएवपासेणंके० मृगनी पेरे स्त्रीरूप पासे करी बंधाणो थको जेम मृग पासे करी बंधाणो होय ते फंदंतेविके० फंदाणोथको अरहो परहो हाले चाले पण ताहेके० ते पास थकी णमुच्चएके० मूकाय नही तेम साधु पण स्त्रीरूपीआ पास थकी मूकाय नही॥ए॥ अथ के० हवे स्त्रीरूपीआ पासमां पड्या पठी, सेके० ते साधु णुतप्पइ के० पश्चात्ताप करे पछा के० पठी संयम छांमीने गृहवास आदरे, तेवारे जूरे जेम विसम्मिसं के० विषमिश्रित एवो पायसं के० दूध तेने नोच्चा के० जमीने पठी पश्चात्ताप करेके ए अन्नमे सा वास्ते आसेव्यो एम चिंतवे चके० तेनी पेरे ते साधु पण पश्चाताप करे एवंके० एवो विवेग मादायके० विवेक ग्रहण करीने दविए के० मुक्ति गमन योग्य एवा साधुने संयमनी हे षणी एवीजे स्त्री तेनी साथे संवासो नविकप्पएके० संवास संसर्ग करवो नकल्पे. ॥१०॥

---

॥ दीपिका–अथ पुनस्तत्र स्वात्मनि अवस्तुनि नमयंति आसक्तं कुर्वंति । यथा रथकारोवर्धकिर्नेमिचक्रधाराकाष्ठं आनुपूर्व्या नमयति एवं स्त्रियोपि साधुं नमयंति स्ववशं कुर्वंति । सच साधुर्मृगवत् पाशेन बद्धोमोक्षार्थं स्पंदमानोपि चलमानोपि पाशान्नमुच्यते ॥ ए ॥ अथ ससाधुः पाशबद्धमृगइवाऽनुतप्यते पश्चात्तापं करोति । यतः । मया परिजनस्यार्थे कृतं कर्म सुदारुणं ॥ एकाकी तेन दह्येहं गतास्ते फलनागिनइति । यथा कश्चिद्विषमिश्रं पायसं नुक्त्वाऽनुतप्यते एवं पूर्वोक्तप्रकारेण विपाकं स्वानुष्ठानस्यादाय प्राप्य तानिः सह संवासोनकल्पते द्रव्यमुक्तियोग्ये साधौ ॥ १० ॥

---

॥ टीका–किंच । ( अहतहेत्यादि ) अथेति स्ववशीकरणादनंतरं पुनस्तत्र स्वाभिप्रेते वस्तुनि नमयंति प्रह्वं कुर्वंति । यथा रथकारोवार्धकिर्नेमिकाष्ठं चक्रवाह्यभ्रमिरूपमानुपूर्व्या नमयत्येवं ताअपि साधुं स्वकार्यानुकूल्ये प्रवर्तयंति । सच साधुर्मृगवत् पाशेन बद्धोमोक्षार्थं स्पंदमानोपि ततः पाशान्नमुच्यतइति ॥ ए ॥ किंच । (अहसेइत्यादि) अथासौ साधुः स्त्रीपाशावबद्धोमृगवत् कूटके पतितः सन् कुटुंबकृते अहर्निशं क्लिश्यमानः पश्चादनुतप्यते । तथाहि । गृहांतर्गतानामेतदवश्यं संनाव्यते । तद्यथा । कोधायउकोसमवित्तु कोहोवणाहिं काहोविजावित्त कोजगाम उपहिय उपरिणीय उकोवकुमार उपडियतो जीवखडप्पडेहि परवंधइ पवेहनारउ । तथा यत् । मया परिजनस्यार्थे, कृतं कर्म सुदारुणं ॥ एकाकी तेन दह्येहं गतास्ते फलनागिनः ॥ १ ॥ इत्येवं बहुप्रकारं महामोहात्मके कुटुंबकूटके पतिताअनुतप्यंते । अमुमेवार्थं दृष्टांतेन स्पष्टयति । यथा कश्चिद्विष

तथा गणधरे कह्याछे. (एतावएजीवकाए के०) एटलीज ए जीवनी निकायछे ( णावरे कोइविज्जई के० ) परंतु एथकी उपरांत बीजी कोइ जीवनी निकाय नथी. ॥ ८ ॥

॥ दीपिका–पृथिवीजीवाः पृथक् प्रत्येकं सत्वाजंतवो ज्ञेयाः। आपश्च जीवाएवमग्नि कायाजीवावायुजीवाश्च पृथक्सत्वाः प्रत्येकजीवास्तृणानि कुशादीनि वृक्षाश्चूताद्याः बीजानि शाल्यादीनि एतेच वनस्पतिनेदाः ॥७॥ अथापरे त्रसाः प्राणिनोद्विन्त्रिचतुःपं चेंद्रियाएवं षट्कायाआख्यातास्तीर्थंकृद्भिः। एतावान् जीवराशिर्नापरो विद्यते कश्चित् ॥८॥

॥ टीका–चारित्रमार्गस्य प्राणातिपातविरमणमूलत्वात्तस्य च तत्परिज्ञानपूर्वकत्वात्तो जीवस्वरूपनिरूपणार्थमाह। ( पुढवीजीवाइत्यादि ) पृथिव्येव पृथिव्याश्रितावाजीवास्तेच प्रत्येकशरीरत्वात्पृथक् प्रत्येकं सत्वाजंतवोऽवगंतव्याः। तथा आपश्च जीवाएवमग्निकाया श्च तथापरे वायुजीवास्तदेवं चतुर्महाभूतसमाश्रिताः सत्वाः प्रत्येकशरीरिणोऽवगंतव्याः। एतएव पृथिव्यप्तेजोवायुसमाश्रिताः सत्वाः प्रत्येकशरीरिणोवक्ष्यमाणवनस्पतेस्तु सा धारणा साधारणशरीरत्वेनापृथक्त्वमप्यस्तीत्यस्यार्थस्य दर्शनाय पुनः पृथक् सत्वग्रहणमि ति। वनस्पतिकायस्तु यः सूक्ष्मः ससर्वोपि निगोदरूपः। साधारणबादरस्तु साधारणा ऽसाधारणश्चेति। तत्र प्रत्येकशरीरिणोऽसाधारणस्य कतिचिन्नेदान्निर्दिदिक्षुराह। तत्र तृ णानि दर्नवीरणादीनि वृक्षाश्चूताशोकादयः सहबीजैः शालिगोधूमादिनिर्वर्तितइति सबी जकाएते सर्वेपि वनस्पतिकायाः सत्वाअवगंतव्याः। अनेनच बौद्धादिमतनिरासः कृ तोवगंतव्यइति। एतेषां च पृथिव्यादीनां जीवानां जीवत्वेन प्रसिद्धिस्वरूपनिरूपणमाचा रे प्रथमाध्ययने शास्त्रपरिज्ञाख्ये न्यक्षेण प्रतिपादितमिति नेह प्रतन्यते ॥ ७ ॥ षष्ठजी वनिकायप्रतिपादनायाह। ( आहावरेत्यादि ) तत्र पृथिव्यप्तेजोवायुवनस्पतयएकेंद्रियाः सूक्ष्मबादरपर्याप्तापर्याप्तकन्नेदेन प्रत्येकं चतुर्विधाः। अथानंतरमपरेऽन्ये त्रसंतीति त्रसा द्वित्रिचतुःपंचेंद्रियाः कृमिपिपीलिकाभ्रमरमनुष्यादयः। तत्र द्वित्रिचतुरिंद्रियाः प्रत्येकं पर्या प्तकापर्याप्तकन्नेदात्षड्विधाः। पंचेंद्रियास्तु संज्ञ्यसंज्ञिपर्याप्तकापर्याप्तकन्नेदाच्चतुर्विधाः। तदे देवमनंतरोक्तया नीत्या चतुर्दशभूतग्रामात्मकतया व्याख्यातास्तीर्थकरगणधरादिभिः। एतावानेवतन्नेदात्मकएव संक्षेपतोजीवनिकायोजीवराशिर्नवत्यंडजोद्भिज्जसंस्वेदजादेरत्रैवां तर्नावान्नापरोजीवराशिर्विद्यते कश्चिदिति ॥ ८ ॥

सव्वाहिं अणुजुत्तीहिं, मतिमं पडिलेहिया ॥ सवे अक्कंतउक्काय,  
अतो सवे अहिंसया ॥९॥ एयं खु णाणिणो सारं, जं न हिंसति  
कंचण ॥ अहिंसा समयं चेव, एतावंतं विजाणिया ॥ १० ॥

अर्थ–ए पूर्वोक्त छ जीवनी निकाय कही हवे जे कांइ करवुं ते देखाडेछे. ( सव्वाहिं अ णुजुत्तीहिं के० ) समस्त अनुयुक्ति एटले जीवितव्य साधवाना कारण तेणेकरी जीवने सम्यक् प्रकारे उंलखीने ( मतिमं के० ) बुद्धिवंत पुरुष जीवादिक तत्वने ( पडिलेहिया के० ) प्रतिलेखी एटले आलोचीने, ( सव्वे अक्कंत डुक्काय के० ) सर्वजीवो डुःख थकी आक्रांत थायछे, एटले एकांते डुःख कोइने वल्लन नथी सर्व सुखना अर्थीछे, ( अतो के० ) ते कारण माटे ( सव्वेअहिंसया के० ) पृथव्यादिक सर्व जीवोने हणे नही, छए कायनी दया पाले ॥ ए ॥ ( एयं खुणाणिणोसारं के० ) एहिज निश्चय थकी ज्ञानी ने जाणवानो सारछे, ( जंनहिंसतिकंचण के० ) जे कोइ जीवनो विनाश नकरे परमा र्थ थकी तेनेज ज्ञानी कहीये, के जे कोइ परजीवने पीडा उपजाववा थकी निवर्त्ते उ क्तंच किंताए पडियाए इति वचनात् ( अहिंसा समयंचेव के० ) अहिंसा जे दया तेज निश्चये थकी आगमनुं तत्व जाणवुं ( एतावंतं विजाणिया ) किंवहुना एटलुंज जाणीने दयाने विषे यत्न करवो परंतु घणुं जाणे शुं फलछे. ॥ १० ॥

---

॥ दीपिका–सर्वाभिरनुकूलयुक्तिभिर्मतिमान् पृथिव्यादिजीवान् प्रत्युपेक्ष्य पर्यालोच्य जी वत्वेन प्रसाध्य तथा सर्वे जीवाअकांतडुःखाअनभिमतडुःखाः सुखैषिणश्चेति मत्वाऽतो मतिमान्सर्वान्प्राणिनोन हिंस्यात् ॥ ए ॥ खुर्वाक्यालंकारे निश्चयेवा । एतदेव ज्ञानिनः सारं यत्कंचन प्राणिनं न हिनस्ति अहिंसाप्रधानं संयममेतावंतमेव विज्ञानं यन्न हिंस्या त्कंचन किंबहुना ज्ञातेन एतावता ज्ञातेन विवक्षितकार्यसिद्धिः ॥ १० ॥

---

॥ टीका–तदेवं षड्जीवनिकायं प्रदर्श्य यत्तत्र विधेयं तद्दर्शयितुमाह । ( सव्वाहिंत्यादि ) सर्वायाः कार्श्नानुरूपाः पृथिव्यादिजीवनिकायसाधनत्वेनानुकूलायुक्तयः साधनानि । य दिवा सिद्धविरुद्धानैकांतिकपरिहारेण पक्षधर्मत्वसपक्षसत्वविपक्षव्यावृत्तिरूपतया यु क्तिसंगतायुक्तयस्ताभिर्मतिमान् सद्विवेकी पृथिव्यादिजीवनिकायान्प्रत्युपेक्ष्य पर्यालोच्य जीवत्वेन प्रसाध्य तथा सर्वेपि प्राणिनोऽकांतडुःखाडुःखद्विषः सुखलिप्सवश्च मत्वाऽतोम तिमान् सर्वानपि प्रणिनोन हिंस्यादिति । युक्तयश्च तत्प्रसाधिकाः संक्षेपेणेमाइति । सा त्मिका पृथिवी तदात्मनां विडुमलवणोपलादीनां समानजातीयांकुरसद्भावादर्शोविकारां कुरवत् । तथा सचेतनमंभोभूमिखननादाविष्कृतस्वनावसंभवाद्दर्डुरवत् । तथा सात्मकं तेजस्तद्योग्याहारवृध्या वृध्युपलब्धेर्बालकवत् । तथा सात्मकोवायुरपराप्रेरितनियततिरश्ची नगतिमत्वाद्गोवत् । तथा सचेतनावनस्पतयोजन्मजरामरणरोगादीनां समुदितानां सद्भावात्स्त्रीवत्तथा क्षतसंरोहणाहारोपादानदौहृदसद्भावस्पर्शसंकोच सायान्हस्वापप्रबो

धाश्रयोपसर्पणादिन्योहेतुन्योवनस्पतेश्चैतन्यसिद्धिः । द्वींद्रियादीनां तु पुनः कृम्यादीनां स्पष्टमेव चैतन्यं तद्वेदनाश्चोपक्रमिकाः स्वाभाविकाश्च समुपलभ्यमानामनोवाक्कायैः कृत कारितानुमतिभिश्च नवकेन भेदेन तत्पीडाकारिणउपमर्दान्निवर्तितव्यमिति ॥ ए ॥ एतदे व समर्थयन्नाह । ( एयंखुइत्यादि ) खुशब्दोवाक्यालंकारेऽवधारणेवा । एतदेवानंतरोक्तं प्राणातिपातनिवर्तनं ज्ञानिनोजीवस्वरूपतद्वधकमेवंधवेदिनः सारं परमार्थप्रधानं । पुन रप्यादरख्यापनार्थमेतदेवाह । यत्कंचनप्राणिनमनिष्टदुःखं सुखैषिणं न हिनस्ति प्रभूतवे दिनोपि ज्ञानिनएतदेव सारतरं ज्ञानं यत्प्राणातिपातनिवर्तनमिति । ज्ञानमपि तदेव पर मार्थतोयत्पीडातोनिवर्तनं । यथोक्तं । किंताए पढियाए, पयकोडीए पयालभूयाए ॥ ज ह्नित्तियं ण णायं, परस्स पीडा न कायवा ॥१॥ तदेवमहिंसाप्रधानः समयआगमः संकेतो वापदेशरूपस्तदेवंभूतमहिंसासमयमेतावंतमेव विज्ञाय किमन्येन बहुना परिज्ञानेनैताव तैव परिज्ञानेन मुमुक्षोर्विवक्षितकार्यपरिसमाप्तेरतोन हिंस्यात्कंचनेति ॥ १० ॥

उड्ढं अहेय तिरियं,जे केइ तसथावरा ॥ सवन्न विरतिं विज्जा, सं
ति निवाणमाहियं ॥ ११॥ पभू दोसे निराकिच्चा,ण विरुझेज्ज के
णई ॥ मणसा वयसा चेव, कायसा चेव अंतसो ॥ १२ ॥

अर्थ-( उड्ढंअहेयतिरियं के० ) उंचो नीचो अने तीर्गो एतावता सर्व लोकने विषे ( जेकेइतसथावरा के० ) जे कांइ त्रस अने स्थावर जीवछे, ( सवन्नविरतिंविज्जा के० ) ते सर्वजीवनी निवृत्तिकरे एटले प्राणातिपात थकी निवर्ते, ( संतिनिवाणमाहियं के०) एहिज विरति, शांति अने निर्वाण श्रीतीर्थंकरें कह्युंछे. ॥ ११ ॥ ( पभूदोसेनिराकिच्चा के० ) प्रभु एटले समर्थ इंद्रीयनो जीपनार मिथ्यात्व अविरति प्रमादादिक दोषने नि राकरी एटले अवगणीने ( णविरुझेज्जकेणई के० ) कोइ पण जीवनीसाथे विरोध ना व नकरे, ( मणसावयसाचेव के०) मने करी वचने करी वली (कायसाचेवअंतसोके०) कायायें करी निश्चय थकी कोइ पण जीवनी साथे जावजीवसुधी विरोध नकरे. ॥१२॥

---

॥ दीपिका–उर्ध्वमधस्तिर्यक्च ये केचन त्रसाः स्थावराश्च प्राणिनस्तत्र सर्वत्र प्राणिनि विरतिं प्राणातिपातनिवृत्तिं विजानीयात्कुर्यात् ।एषैव विरतेः शांतिहेतुत्वाच्छांतिर्वर्तते । त था निर्वाणहेतुत्वान्निर्वाणमप्याख्याता एषैव विरतिः ॥११॥ प्रभुः समर्थोदोषान् मिथ्या त्वविरतिप्रमादकषायादीन् निराकृत्याऽपनीय केनापि प्राणिना सार्धं न विरुध्येत्त केनैव सह विरोधं न कुर्यात् मनसा वचसा कायेन चांतशः परमार्थतः केनापि नविरुध्येत॥१२॥

॥ टीका—सांप्रतं क्षेत्रप्राणातिपातमधिकृत्याह । ( उड्ढमहेत्यादि ) ऊर्ध्वमधस्तिर्यक्च ये केचन त्रसास्तेजोवायुर्द्वींद्रियादयस्तथा स्थावराः पृथिव्यादयः किंबहुनोक्तेन सर्वत्र प्राणिनि त्रसस्थावरसूक्ष्मबादरनेदभिन्ने विरतिं प्राणातिपातनिवृत्तिं विजानीयात्कुर्यात्। परमार्थतएवमेवासौ ज्ञाता नवति। यदि सम्यक् क्रियतऽति एवैवच प्राणातिपातनिवृत्तिः परेषामात्मनश्च शांतिहेतुत्वाच्छांतिर्वर्तते । यतोविरतिमतोनान्ये केचन बिन्यति नाप्यसौ नवांतरेपि कुतश्चिद्बिनेति । अपिच निर्वाणप्रधानैककारणत्वान्निर्वाणमपि प्राणातिपातनिवृत्तिरेव। यदिवा शांतिरुपशमःशांतता निवृत्तिर्निर्वाणं विरतिमांश्चार्तरौद्रध्यानानावाडुपशांतिरूपोनिर्वृतिनूतश्च नवति ॥ ११ ॥ किंचान्यत् । ( पनूदोसेइत्यादि ) इंद्रियाणां प्रनवतीति प्रनुर्वा वश्येंद्रियइत्यर्थः । यदिवा संयमाचारकाणि कर्माण्यनिनूय मोक्षमार्गं पालयितव्ये प्रनुः समर्थः सएवंनूतः प्रनुर्दूषयंतीति दोषामिथ्यात्वाविरतिप्रमादकषाययोगास्तान्निराकृत्याऽपनीय केनापि प्राणिना सार्धं नविरुध्येत न केनचित्सह विरोधं कुर्यात्रिविधेनापि योगेनेति मनसा वाचा कायेन चैवांतशोयावज्जीवं परोपकारक्रियया न विरोधं कुर्यादिति ॥ १२ ॥

संवुडे से महापन्ने, धीरे दत्तेसणं चरे ॥ एसणासमिए णिच्चं, व
ज्जयंते अणेसणं ॥१३॥ नूयाइंच समारंन त मुद्दिस्साय जं कडं॥
तारिसं तु ण गिण्हेज्जा, अन्नपाणं सुसंजए ॥ १४ ॥

अर्थ—( संवुडेसेमहापन्नेके० ) आश्रवनो रोधकरी संवरने पाम्यो ते महाप्राज्ञ एटले विपुल बुद्धिवंत तथा (धीरेदत्तेसणंचरेके०) परीसह जीतवाने धीर सुनट समान एवो ठतो दीधेली एषणाने चरे; अर्थात् दातारेदीधो एषणीक निर्दोष एवोजे आहारतेने लिए (एसणासमिएणिच्चंके०) एषणा एटले आहारनी गवेषणा तेने विषे समिति सहित नित्यसदाकाल (वज्जयंतेअणेसणं के०) अनेषणीयने वर्जतो थको संयम पाले ॥१३॥ (नूयाइंचसमारंन के० ) नूत एटले प्राणीनो समारंन करीने ( तमुद्दिस्सायजंकडंके ) यतिने अर्थे उद्देशीने कीधो एवो जे आधाकर्मिक आहार ( तारिसंके०) तादृस एटले तेवो ( अन्नपाणं के० ) अन्न, पान, वस्त्र, पात्र अने शय्यादिक ( णगिण्हेज्जा के० ) तेने जे ग्रहण करे नही, ते ( सुसंजए के० ) सुसंयत जाणवो. ॥ १४ ॥

---

दीपिका—इंद्रियैः संवृतः समहाप्रज्ञोविपुलमतिर्धीरोऽक्षोन्योनिक्षुर्दत्तेषणां चरेत् आहारोपधिशय्यादिकं स्वामिना दत्तं सदेषणीयं गृण्हीतेत्यर्थः।एषणायां गवेषणग्रहणग्रासरूपायां त्रिविधायामपि समितः सम्यक्तयाऽनेषणां वर्जयन् नित्यं संयममनुपालयेत्॥१३॥

नूतानि प्राणिनः समारम्य संताप्य तं साधुमुद्दिश्य साध्वर्थं यत्कृतं तादृशमाधाकर्म दोष डुष्टमाहारादिकं न गृह्णीयात् नकं पानंच सुसंयतोगृहीतव्रतस्तादृशं न भुंजीत ॥१४॥

॥ टीका—उत्तरगुणानधिकृत्याह । (संवुडे इत्यादि) आश्रवद्वाराणां रोधेनेंद्रियनिरोधेन च संवृतः सन्निकुमेद्दती प्रज्ञा यस्यासौ महाप्रज्ञोविपुलबुद्धिरित्यर्थः । तदनेन जीवाजीवादिपदार्थानिज्ञता वेदिता नवति । धीरोऽक्षोन्यः क्षुत्पिपासादिपरीषहैर्न क्षोन्यते । तदेव दर्शयति । आहारोपधिशय्यादिके स्वस्वामिना तत्संदिष्टेन वा दत्ते सत्येषणां चरत्येषणीयं गृह्णातीत्यर्थः । एषणायाएषणायांवा गवेषणग्रहणैषणग्रासरूपायां त्रिविधायामपि सम्यगितः समितः ससाधुर्नित्यमेषणासमितः सन्ननेषणां परिवर्जयन् परित्यजन्संयममनुपालयेत् । उपलक्षणार्थत्वादस्य शेषानिरपीर्यासमित्यादिनिः समितोऽद्रष्टव्यइति ॥ १३ ॥ अनेषणीयपरिहारमधिकृत्याह (नूयाइंइत्यादि) अनूवन् नवंति नविष्यंति च प्राणिनस्तानि नूतानि प्राणिनः समारम्य संरंनसमारंनारंनैरुपतापयित्वा तं साधुमुद्दिश्य साध्वर्थं यत्कृतं तदकल्पितमाहारोपकरणादिकं तादृशमाधाकर्मदोषडुष्टं सुसंयतः सुतपस्वी तदन्नं पानकं वा न भुंजीत । तु शब्दस्यैवकारार्थत्वान्नैवाभ्यवहरेदेवं तेन मार्गोऽनुपालितोनवति ॥ १४ ॥

पूईकम्मं न सेविज्जा, एस धम्मे वुसीमठ ॥ जं किंचि अनिकंखेज्जा, सवसो तं नन्नोत्तए ॥ १५ ॥ हणंतं णाणुजाणेज्जा, आयगुत्ते जिइंदिए ॥ ठाणाइं संति सढीणं, गामेसु नगरेसु वा ॥ १६ ॥

अर्थ—(पूईकम्मंनसेविज्जाके०) शुद्धाहार पण जो आधाकर्मिकना एक कण सहित होय तो ते अशुद्ध थाय, तेमाटे तेने पूतिकर्म कहिए; एवो आहारादिकने नसेवे एटले नन्नोगवे (एसधम्मे के०) एवो धर्माचार ते (वुसीमठ के०) साचा संयमवंतनो जाणवो तथा (जंकिंचि के०) जेकांइ निर्दोष आहार होय परंतु तेने (अनिकंखेज्जा के०) सदोष करी जाणे तेपण सशंकित थयो माटे (सवसोतंनन्नोत्तए के०) ते सर्वथा प्रकारे नोगववुं नकल्पे ॥१५॥ (ठाणाइंसंतिसढीणंके०) श्रद्धावंतना स्थान श्रद्धावंत धर्मवंतना आश्रय (गामेसुनगरेसुवाके०) एवा ग्रामने विषे अथवा नगरने विषे साधु रह्या छे त्यांनो आश्रीत कोइएक कूप खनन सत्रुकारकादिकनो करावनार एवो पुरुष साधुने पूछे, जे एमां धर्मछे किंवा नथी एम पुछयां थकां (आयगुत्तेजिइंदिए के०) आत्मगुप्त तथा जितेंद्रिय एवो साधु, (हणंतंणाणुजाणेज्जा के०) आरंनेकरी प्राणी हणाता होय तेवा कार्यने अनुमोदे नही, जे एतुं रुडुं काम करेछे एम कहे नही ॥ १६ ॥

॥ दीपिका–आधाकर्माद्यविशुद्धिकोटचवयवेनापि संपृक्तं पूतिकर्म तन्न सेवेत । एषधर्मः (बुसीमत्ति) सम्यक्संयमवतोयत्किंचिदनिकांक्षितानुष्ठानं तत्र सर्वशः सर्वप्रकारम प्याहारादिकं पूतिकर्म नोक्तं न कल्पते ॥ १५ ॥ धर्मश्रद्धावतां ग्रामेषु स्थानान्याश्रया विद्यंते तत्र तत्स्थानाश्रितः कश्चिद्धर्मबुध्या कूपतडागखननप्रपासत्रादिकां क्रियां कुर्यात्ते न च किमत्र धर्मोस्ति नास्तीत्येवं पृष्टः साधुस्तं प्राणिनोघ्नंतं नानुजानीयात् । किंभूतः साधुः आत्मगुप्तोमनोवाक्कायगुप्तोजितेंद्रियः ॥ १६ ॥

---

॥ टीका– किंच (पूतीत्यादि) आधाकर्माद्यविशुद्धकोटचवयवेनापि संपृक्तं पूतिकर्म तदेवंभूतमाहारादिकं न सेवेत नोपभुंजीत । एषोऽनंतो धर्मकल्पस्वभावः (बुसीमत्ति) सम्यक् संयमवतोऽयमेवानुष्ठानकल्पोयद्भुताशुद्धमाहारादिकं परिहरतीति । किंच । यद्यप्य शुद्धत्वेनाशिंकेत किंचिदप्याहारादिकं तत्सर्वशः सर्वप्रकारमप्याहारोपकरणपूतिकर्म भोक्तुं न कल्पतइति ॥ १५ ॥ किंचान्यत् (हणंतमित्यादि) धर्मश्रद्धावतां ग्रामेषु नग रेषु वा खेटखर्वटादिषु वा स्थानान्याश्रयाः संति विद्यंते तत्र तत्स्थानाश्रितः कश्चिद्धर्मो पदेशेन किल धर्मश्रद्धालुतया प्राणुपमर्दकारिणां धर्मबुध्या कूपतडागखननप्रपासत्रा दिकां क्रियां कुर्यात्तेन च तथाभूतक्रियायाः कर्ता किमत्र धर्मोस्ति नास्तीत्येवं पृष्टोवा तडुपरोधाद्भयाद्वा तं प्राणिनोघ्नंतं नानुजानीयात् । किंभूतः सन्नात्मना मनोवाक्कायरूपे ण गुप्तआत्मगुप्तस्तथा जितेंद्रियोवश्येंद्रियः सावद्यानुष्ठानं नानुमन्यते ॥ १६ ॥

तहागिरं समारप्न, अत्थि पुन्नंति णोव ए॥ अहवा णत्थि पुन्नंति,
एवमेयं महप्नयं ॥ १७ ॥ दाणठयाय जे पाणा, हम्मंति तस
थावरा ॥ तेसिं सारखणठाए, तम्हा अत्थित्ति णोवए ॥ १८ ॥

अर्थ–हवे ए स्वरूप विशेषे दीपावेछे अहो मुनीश्वर आ अमारे अनुष्ठाने पुण्यछे किं वा नथी एम पुछ्यां थकां (तहा के०) ते साधु (गिरंसमारप्न के०) एवी वाणी कहे के आ समारंभ करवामां (अत्थिपुन्नंतिणोवए के०) पुण्यछे एम पण मुख थकी कहे नही; (अहवा के०) अथवा (णत्थिपुन्नंति के०) एमां पुण्य नथी एम पण मुख थकी कहे नही. (एवमेयं महप्नयं के०) एम ए बने प्रकारने दोषना हेतु तथा महाभयना कारण जाणीने एवी भाषा नबोले ॥ १७ ॥ हवे जे कारणे एवी भाषा नबोले ते कारण कहेछे. (दाणठयायजेपाणा के०) दानने अर्थे अनेक लोकने अन्नपाणी आपवा सारुं जे प्राणी एटले जीव (तसथावरा के०) त्रस अने स्थावर (हम्मति के०) हणायछे (तेसिंसारक्खणठाए के०) तेजीवोने राखवाने अर्थे (तम्हा

अछित्तिनोवए के० ) तेकारणे आ तमारा अनुष्ठाने पुण्यछे एम पण साधु नकहे. ॥१८॥

॥ दीपिका—केनचिद्राजादिना कूपखननसत्रदानादिप्रवृत्तेन पृष्टः साधुः किमस्मदनुष्ठानेऽस्ति पुण्यमाहोस्विन्नास्तीत्येवं नूतां गिरं समारभ्य निशम्यास्तिपुण्यं नास्तिवेत्येवमुभयथापि महाभयमिति मत्वा नानुमन्येत ॥ १७ ॥ अन्नपानादिदानार्थं पाकादिक्रियायां ये प्राणिनोहन्यंते त्रसाःस्थावराश्च तेषां संरक्षणार्थं साधुरत्र पुण्यमस्तीति नोवदेत्॥१८॥

॥ टीका—सावद्यानुष्ठानानुमतिं परिहर्तुकामआह । ( तहागिरमित्यादि ) केनचिद्राजादिना कूपखननसत्रदानादिप्रवृत्तेन पृष्टः साधुः किमस्मदनुष्ठानं अस्ति पुण्यमाहोस्विन्नास्तीत्येवं नूतां गिरं समारभ्य निशम्याश्रित्य चास्ति पुण्यं नास्तिवेत्येवमुभयथापि महाभयमिति मत्वा दोषहेतुत्वेन नानुमन्येत ॥१७॥ किमर्थं नानुमन्येतइत्याह ( दाणठयाइत्यादि ) अन्नपानदानार्थमाहारमुदकंच पचनपाचनादिकया क्रियया कूपखननादिकया चोपकल्पयेत्। तत्र यस्माद्धन्यंते व्यापाद्यंते त्रसाः स्थावराश्च जंतवस्तस्मात्तेषां रक्षानिमित्तं साधुरात्मगुप्तोजितेंद्रियोऽत्र भवदीयानुष्ठाने पुण्यमित्येवं नो वदेदिति ॥ १८ ॥

जेसिं तं उवकप्पंति, अन्नपाणं तहाविहं ॥ तेसिं लाभं तरायंति,
तम्हा णत्थित्ति णो वए॥ १९ ॥ जे य दानं पसंसंति, वहमिछंति
पाणिणं ॥ जेयणं पडिसेहंति वित्तिछेयं करंति ते ॥ २० ॥

अर्थ—अने ( जेसिंतं उवकप्पंति के० ) जे लोकने निमित्ते उपकल्पे एटले वांछे शुं वांछे तोके (अन्नपाणंतहाविहंके० ) अन्न पाणी तथाविध दोषे दुष्ट अनेक प्रकारे करी नीपजावेछे तथापि तेनो निषेध करे तो (तेसिंलाभंतरायंतिके०) तेने लाभांतराय रूप आहार देवानुं विघ्न थाय ( तम्हा के० ) ते कारणे आ तमारे अनुष्ठाने पुण्य (णत्थित्तिके०) नथी (नोवए के०) एम पण नकहे. ॥१९॥ (जेयदानंपसंसंति के०) तेमाटे जे कोइ परमार्थीनो जाण यति दाननी प्रशंसाकरे ते ( वहमिछंतिपाणिणं के० ) ते प्राणीना वधनी इछा करेछे, ( जेयणंपडिसेहंतिके० ) अने जे यति दान आपवानो निषेध करे ( वित्तिछेयंकरंतिते के० ) तो ते यति अनेक जीवोनी आजीविकानो छेद करेछे. ॥ २० ॥

॥ दीपिका—येषां जंतूनां कृते तदन्नपानादिकं धर्मबुध्या उपकल्पयंति निष्पादयंति तन्निषेधे तेषामाहारार्थिनां लाभांतरायोविघ्नोभवेत् । तस्मात्कूपखननसत्रादिकर्मणिनास्ति पुण्यमित्यपि नो वदेत् ॥ १९ ॥ प्रपासत्रादिदानं ये प्रशंसंति ते प्राणिनां वधमिछं

ति येच निषेधंति प्रतिषेधयंति तेप्यगीतार्थाः प्राणिनां वृत्तिछेदं आजीविकाविघ्नं कुर्वंति २०

॥ टीका–यद्येवं नास्तिपुण्यमिति ब्रूयात्तदेतदपि न ब्रूयादित्याह । ( जेसिमित्यादि ) येषां जंतूनां तदन्नपानादिकं किल धर्मबुध्योपकल्पयंति तथाविधं प्राण्युपमर्ददोषदुष्टं निष्पादयंति तन्निषेधेच यस्मात्तेषामाहारपानार्थिनां तल्लाभांतरायोविघ्नोनवेत्तदभावेन तु पीड्येरंस्तस्मात्कूपखननसत्रादिके कर्मणि नास्ति पुण्यमित्येतदपि नोवदेदिति ॥ १९ ॥ एनमेवार्थं पुनरपि समासतः स्पष्टतरं बिभणिषुराह । ( जेयदाणमित्यादि ) ये केचन प्रपासत्रादिकं दानं बहूनां जंतूनामुपकारीति कृत्वा प्रशंसंति श्लाघंते ते परमार्थानभिज्ञाः प्रभूततरप्राणिनां तत्प्रशंसा द्वारेण वधं प्राणातिपातमिछंति । तद्दानस्य प्राणातिपातमंतरेणानुपपत्तेः । येपिच किल सूक्ष्मधियोवयमित्येवं मन्यमानाआगमसद्भावानभिज्ञाः प्रतिषेधंति. निषेधयंति तेप्यगीतार्थाः प्राणिनां वृत्तिछेदं वर्तनोपायविघ्नं कुर्वंतीति ॥ २० ॥

डुहउवि ते ण भासंति, अछिवा नछिवा पुणो ॥ आयं रयस्स हेच्चाणं, निव्वाणं पाउणंति ते ॥ २१ ॥ निव्वाणं परमं बुद्धा, णक्खत्ताणव चंदमा ॥ तम्हा सदा जए दंते, निव्वाणं संधए मुणी॥२२॥

अर्थ–( अछिवानछिवा के० ) अस्ति अथवा नास्ति एम न कहे एटले पुण्यछे किंवा पुण्य नथी एवी ( डुहउवि के० ) बन्ने प्रकारनी वाणीने ( पुणोके० ) वली (तेके०) तेसाधु (णभासंति के०) भाषेनही; केमके ए थकी (रयस्सके०) कर्मरूप रज तेनो (आयं के० ) लाभ तेने ( हिच्चाके० ) जाणीने तेवी वाणीने उच्चार करवानो त्याग करे, (निव्वाणंपाउणंतितेके०) ते साधु निर्वाण प्रत्ये पामे; एटले अनवद्य भाषक एवो साधु संसाररहित थाय ॥ २१ ॥ (निव्वाणंपरमंबुद्धा के०) निर्वाण एटले मोक्ष तेने परम प्रधान जाणे, (णक्खत्ताणवचंदमाके०) नक्षत्रचंद्रमानी पेरे, जेम नक्षत्रमां चंद्रमा प्रधानछे. तेम तत्वना जाण पुरुष सर्व गतिउमां मुक्तिने प्रधान कहेछे. (तम्हाके०) तेमाटे (सदाजएदंतेके०) संयमवंत पुरुष ते निरंतर प्रयत्नवान इंद्रियनुं दमन करनार थको (निव्वाणंसंधए मुणीके० ) एवो साधु मोक्षने साधे अर्थात् सर्व क्रिया मोक्षने अर्थे करे. ॥ २२ ॥

॥ दीपिका–द्विधापि ते पुनः साधवोन भाषंते अस्ति पुण्यं नास्तिवा इति किंतु पृष्टैः सद्भिर्मौनमेवाश्रयणीयं । निर्वधेत्वस्माकं निर्दोषाहारः कल्पते । एवंविधविषये साधूनामधिकारएव नास्तीति वक्तव्यं । यदुक्तं । सत्यं वप्रेषु शीतं शशिकरधवलं वारि पीत्वा प्रकामं, व्युछिन्नाशेषतृष्णाः प्रमुदितमनसः प्राणिसार्थाभवंति ॥ शोषं नीते जलौघे दिन

करकिरणैर्यात्यनंताविनाशं तेनोदासीनजावं व्रजति मुनिगणः कूपवप्रादिकार्ये ॥ १ ॥ एवं रजसः कर्मणआयं लानं हित्वा त्यक्त्वाऽनवद्यजाषिणोनिर्वाणं मोक्षं प्राप्नुवंति ॥ ॥ २१ ॥ येषां निर्वाणं मोक्षएव परमं प्रधानं ते बुद्धाज्ञाततत्वाः। यथा नक्षत्राणां मध्ये चंद्रमाप्रधानएवं मोक्षमेवाश्रित्य प्राप्य ये प्रवृत्तास्ते एव बुद्धानां मध्ये प्रधानाः। त स्मात्सदा सर्वकालं यतः प्रयत्नवान् इंद्रियदमने दांतोमुनिर्निर्वाणं संधयेन्निर्वाणार्थं सर्वाः क्रियाः कुर्यादित्यर्थः ॥ २२ ॥

---

॥ टीका—तदेवं राज्ञा अन्येन वेश्वरेण कूपतडागयागसत्रदानाद्युद्यतेन पुण्यसद्भावं पृष्टैर्मुमुक्षुनिर्यद्विधेयं तद्दर्शयितुमाह। (डुहउवीत्यादि) यद्यस्ति पुण्यमित्येवमूचुस्ततोनंता नां सत्वानां सूक्ष्मबादराणां सर्वदा प्राणत्यागएव स्यात्प्रीणनमात्रंतु पुनः स्वल्पानां स्वल्पका लीयमतोस्तीति न वक्तव्यं। नास्ति पुण्यमित्येवं प्रतिषेधेपि तदर्थिनामंतरायः स्यादित्यतो द्विधाप्यस्ति नास्ति वा पुण्यमित्येवं ते मुमुक्षवः साधवः पुनर्न जाषंते किंतु पृष्टैः सद्भिर्मौ नं समाश्रयणीयं। निर्बंधेत्वस्माकं द्विचत्वारिंशद्दोषवर्जितआहारः कल्पते। एवंविधविष ये मुमुक्षूणामधिकारएव नास्तीति। उक्तंच। सत्यं वप्रेषु शीतं शशिकरधवलं वारि पी त्वा प्रकामं, व्युच्छिन्नाशेषतृष्णाः प्रमुदितमनसः प्राणिसार्थाजवंति ॥ शोषं नीते जलौ घे दिनकरकिरणैर्यात्यनंताविनाशं, तेनोदासीनजावं व्रजति मुनिगणः कूपवप्रादिकार्ये ॥१ तदेवमुजयथापि जाषिते रजसः कर्मणआयोलाजोजवतीत्यतस्तं चायं रजसोमौनेना नवद्यजाषणेन वा हित्वा त्यक्त्वा तेऽनवद्यजाषिणोनिर्वाणं मोक्षं प्राप्नुवंतीति॥२१॥ अपिच। निव्वाणमित्यादि) निर्वृतिर्निर्वाणं तत्परमं प्रधानं येषां परलोकार्थिनां बुद्धानां ते तथा तानेव बुद्धान्निर्वाणवादित्वेन प्रधानानित्येवं दृष्टांतेन दर्शयति। यथा नक्षत्राणा मश्विन्यादीनां सौम्यत्वप्रमाणप्रकाशकत्वैरधिकश्चंद्रमाएवं परलोकार्थिनां बुद्धानां मध्ये ये स्वर्गचक्रवर्तिसंपन्निदानपरित्यागेनाशेषकर्मक्षयरूपं निर्वाणमेवाजिसंधाय प्रवृत्तास्त एव प्रधानानापरइति। यदिवा यथा नक्षत्राणां चंद्रमाः प्रधानजावमनुजवत्येवं लोक स्य निर्वाणं परमं प्रधानमित्येवं बुद्धाअवगततत्वाः प्रतिपादयंतीति। यस्माच्च निर्वाणं प्रधानं तस्मात्कारणात्सदा सर्वकालं यतः प्रयतः प्रयत्नवान् इंद्रियनोइंद्रियदमनेन दांतो मुनिः साधुर्निर्वाणमजिसंधयेन्निर्वाणार्थं सर्वाः क्रियाः कुर्यादित्यर्थः ॥ २२ ॥

बुज्जमाणाण पाणाणं किच्चंताण सकम्मणा ॥ आघाति साहु तं, दीवं, पतिट्ठे सा पवुच्चई ॥ २३ ॥ आयगुत्ते सया दंते, छिन्नसोए अणासवे ॥ जे धम्मं सुद्धमक्खाति, पडिपुन्नमणालिसं ॥ २४ ॥

अर्थ-( वुज्झमाणाण पाणाणं के० ) संसार समुद्रमां विचरता प्राणी ( किच्चंताण सकम्मणा के० ) पोतपोताना कर्मेकरी छेदन भेदननी कदर्थना पामता एवा असरण जीवोने पण ( आघातिसाहुतं दीवं के० ) श्रीतीर्थंकर गणधरनो कहेलो आश्वासनूत द्वीप समान एवो सम्यक् दर्शनादिक धर्म जाणवो, ( पतिठ्ठेसापवुच्चई के० ) एने संसार समुद्रमां परिभ्रमणनो टालनार कहिए ॥ २३॥ एवा धर्मनो प्ररुपनार कोण ते कहेछे. ( आयगुत्तेसयादंतेके०) आत्माजेनो गुप्तछे ते आत्मगुप्त कहिए तथा सदादांत एटले सर्वकाल पांचेंद्रियनो संवर करनार (छिन्नसोए के०) जेणे संसारना स्त्रोत छेद्याछे (अणासवेके०) अनाश्रव एटले प्राणातिपातादिक आश्रव रहित ( जेधम्मं सुद्धमरकाति के० ) एवो जे होय ते सुद्धो धर्म कहे ते धर्म केवोछे, तो के ( पडिपुन्न के० ) प्रतिपूर्ण सर्व विरतिरूप तथा ( अणालिसं के० ) निरुपमछे. एटले एवो धर्म अन्य दर्शनीउना कोइपण शास्त्रमां कह्यो नथी माटे ए धर्म उपमारहित छे. ॥ २४ ॥

---

॥ दीपिका–संसारसागरे मिथ्यात्वकषायादिभिर्वाह्यमानानां संमुखं नीयमानानां तथा स्वकर्मभिः कृत्यमानानां पीड्यमानानां प्राणिनां परोपकारनिरतस्तीर्थकारणतस्तीर्थकरो गणधरादिर्वा साधु शोभनं द्वीपमाश्वासनूतमाख्याति। यथा समुद्रपतितस्य जंतोः कश्चित्सुखार्थं द्वीपं वक्ति तथा संसारभ्रमणविश्रामहेतुं सम्यग्दर्शनादिकं जिनादिर्वक्ति एषा संसारभ्रमणविरतिरूपा प्रतिष्ठाप्रोच्यते तज्ज्ञैः ॥ २३ ॥ आत्मा गुप्तोयस्य सआत्मगुप्तः सदांतोवशीकृतेंद्रियः। तथा छिन्नानि त्रोटितानि संसारस्त्रोतांसि येन सछिन्नस्त्रोतानिराश्रवः कर्मबंधरहितएवंभूतोयः सशुद्धं निर्दोषं धर्ममाख्याति कथयति। किंभूतं धर्मं प्रतिपूर्णं सर्वविरतिरूपमनीदृशमनन्यसदृशं ॥ २४ ॥

---

॥ टीका–किंचान्यत् । ( वुज्झमाणाण इत्यादि ) संसारसागरस्त्रोतोभिर्मिथ्यात्वकषायप्रमादादिकैरुह्यमानानां तदभिमुखं नीयमानानां तथा स्वकर्मोदयेन निकृत्यमानानामशरणानामसुमतां परहितैकरतः कारणवत्सलस्तीर्थकृदन्योवा गणधराचार्यादिकस्तेषामाश्वासनूतं साधुं शोभनं द्वीपमाख्याति। यथा समुद्रांतः पतितस्य जंतोर्जलकल्लोलाकुलितस्य मुमूर्षोरतिश्रांतस्य विश्रामहेतुं द्वीपं कश्चित्साधुर्वत्सलतया समाख्यात्येवं तथाभूतं द्वीपं सम्यग्दर्शनादिकं संसारभ्रमणविश्रामहेतुं तीर्थपरतीर्थिकैरनाख्यातपूर्वमाख्यात्येवं च कृत्वा प्रतिष्ठानं प्रतिष्ठा संसारभ्रमणविरतिलक्षणैषा दर्शनाद्यवाप्तिसाध्या मोक्षप्राप्तिः प्रकर्षेण तत्वज्ञैरुच्यते प्रोच्यतइति ॥ २३ ॥ किंभूतोऽसावाश्वासद्वीपोभवति कीदृग्विधेन वाऽसावाख्यायतइत्येदाह । ( आयगुत्ते इत्यादि ) मनोवाक्कायैरात्मा गुप्तोयस्य स

आत्मगुप्तस्तथा सदा सर्वकालमिंद्रियनोइंद्रियदमनेन दांतोवश्येंद्रियोधर्मध्यानध्यायी वे त्यर्थः । तथा छिन्नानि त्रोटितानि संसारस्रोतांसि येन सतथा । एतदेव स्पष्टतरमाह निर्गतआश्रवः प्राणातिपातादिकः कर्मप्रवेशद्वाररूपोयस्मात्सनिराश्रवोयएवंभूतः संशु द्धं समस्तदोषाऽपेतं धर्ममाख्याति । किंभूतं धर्मं प्रतिपूर्णं निरवयवतया सर्वविरत्याख्यं मोक्षगमनैकहेतुमनीदृशमनन्यसदृशमद्वितीयमिति यावत् ॥ २४ ॥

तमेव अवि जाणंता, अबुद्धा बुद्धमाणिणो ॥ बुद्धा मोत्तियम न्नंता, अंतएते समाहिए ॥ २५ ॥ तेय बीओदगं चेव, तमुद्दिस्सा य जं कडं ॥ भोच्चा झाणं झियायंति, अखेयन्ना असमाहिया ॥ २६ ॥

अर्थ-(तमेवअविजाणंता के०) ते शुद्ध प्रतिपूर्ण धर्मना आचारनुं जे जाणपणु तेने विषे ( अबुद्धाबुद्धमाणिणो के० ) अबुद्ध एटले अविवेकी उतां, पोतामां पंमित पणु मानता थका जे अमेज धर्मना जाणडैयें, ( बुद्धामोत्तियमन्नंता के०) तत्वना जाण एवा बुद्धिमान अमेज डैयें, एवीरीते मानता एवा जनो ( अंतएतेसमाहिए के० ) ते जाव समाधि थकी अत्यंत दूर वर्त्तनार जाणवा ॥ २५ ॥ एवा कोण पुरुष ते कहेले. ( तेयबीओदगंचेव के० ) ते शाक्यादिक अन्य दर्शनी अथवा एवा जे स्वतीर्थिक पासत्था दिक तेबीज एटले शाली गोधूमादिक तथा उदक ते सचित्तपाणी तथा (तमुद्दिस्सायजंकडं के० ) तेने अर्थे उद्देशीने जे आहारादिक कीधो ते सर्वने अविवेकी पणे जीव्हाना लं पटी उता ( जोच्चा के० ) जोगवी ने ( झाणंझियायंति के० ) आर्त्त ध्यान ध्यावे, एट ले संघनो जोजनादिक थशे तेवारे आपणने पण मलशे, एवो आर्त्त ध्यानं ध्यावे ते तात्विके ( अखेयन्ना असमाहिया के० ) धर्माधर्मने विषे अखेदज्ञ एटले अनिपुण तथा एवा ध्यानना ध्यावनार सदा असंतोषी होय माटे असमाधिवंत जाणवा ॥२६॥

॥ दीपिका-तमेवं धर्ममजानानाअबुद्धानिर्विवेकाबुद्धमानिनः पंडितंमन्याबुद्धाः स्मोवयमिति मन्यमानाः समाधेः सम्यग्दर्शनादंते पर्यंतेऽतिदूरे वर्तंते इति तेऽन्ये तीर्थिकाज्ञेयाः ॥ २५ ॥ बीजानि शालिगोधूमादीनि उदकमप्रासुकजलं च शाक्यादय स्तानुद्दिश्य तद्भक्तैर्यदाहारादिकं कृतं तत्सर्वं भुक्त्वा सातर्धिरसगौरवासक्ताः संघभक्ता दिक्रियया तदवाप्तिकृते आर्तं ध्यानं ध्यायंति । नहि ऐहिकसुखार्थिनां परिग्रहवतां धर्मं ध्यानं स्यात् । यतः । ग्रामक्षेमगृहादीनां, गृहक्षेत्रजनस्य च । यस्मिन् परिग्रहोदृष्टो, ध्यानं तत्र कुतः शुभमिति । मोहस्यायतनं धृतेरपचयः शांतेः प्रतीपोविधि,र्व्याक्षेपस्य सुहृन्मदस्य भवनं पापस्य वासोनिजः ॥ दुःखस्य प्रभवः सुखस्य निधनं ध्यानस्य क

ष्टोरिपुः प्राज्ञस्यापि परिग्रहोग्रहइव क्लेशाय नाशाय च ॥ १ ॥ तथा ते कुतीर्थिकाध र्माधर्मविवेके ऽखेदज्ञाश्चनिपुणाश्चसमाहिताश्च समाधेर्मोक्षमार्गाद्दूरस्थाइत्यर्थः ॥ २६ ॥

---

॥ टीका–एवंनूतधर्मव्यतिरेकिणां दोषानिधित्सयाऽह । (तमेवेत्यादि) तमेवंनूतं शुद्धं प रिपूर्णमनीदृशं धर्ममजानानाश्चप्रबुद्धाश्च विवेकिनः पंडितमानिनोवयमेव प्रतिबुद्धाधर्मत त्वमित्येवं मन्यमानाभावसमाधेः सम्यग्दर्शनाख्यादंते पर्यंते विदूरे वर्त्ततइति तेच सर्वेपि प रतीर्थिकाइष्टव्याइति ॥ २५॥ किमिति ते तीर्थिकाभावमार्गरूपात्समाधेर्दूरे वर्त्ततइत्याशंक्या ह । (तेयबीउंदगमित्यादि) तेच शाक्यादयोजीवाजीवानभिज्ञतया बीजानि शालिगोधूमादी नि तथा शीतोदकमप्रासुकोदकं तांश्चोद्दिश्य तद्भक्तैर्यदाहारादिकं कृतं निष्पादितं तत्सर्वमवि वेकितया शाक्यादयोभुक्त्वाऽन्यवहृत्य पुनः सातर्द्धिरसगौरवासक्तमनसः संघभक्तादिक्रिय या तदवाप्तिकृते आर्त्तं ध्यानं ध्यायंति । नह्यैहिकसुखैषिणां दासीदासधनधान्यादिपरिग्रहव तां धर्मध्यानं नवतीति । तथाचोक्तं । ग्रामक्षेत्रगृहादीनां गृहक्षेत्रजनस्य च ॥ यस्मिन्परिग्र होदृष्टो, ध्यानं तत्र कुतः शुभमिति । तथा । मोहस्यायतनं धृतेरपचयः शांतेः प्रतीपो विधि,र्व्याक्षेपस्य सुहृन्मदस्य नवनं पापस्य वासोनिजः ॥ डुःखस्य प्रनवः सुखस्य निध नं ध्यानस्य कष्टोरिपु:,प्राज्ञस्यापि परिग्रहोग्रहइव क्लेशाय नाशाय च ॥ १ ॥ तदेवं पच नपाचनादिक्रियाप्रवृत्तानां तदेव चानुप्रेक्षमाणानां कुतः शुभध्यानस्य संनवइति । अपि च । ते तीर्थिकाधर्माधर्मविवेके कर्तव्ये अखेदज्ञाश्चनिपुणाः । तथाहि । शाक्यामनोज्ञाहा रवसतिशय्यासनादिकं रागकारणमपि शुभध्याननिमित्तत्वेनाध्यवस्यंति । तथाचोक्तं । म णुसुंनोयणं सुंचेत्यादि । तथा मांसं कल्किकमित्यपदिश्य संज्ञांतरसमाश्रयणान्निर्दोषं म न्यंते बुद्धसंघादिनिमित्तं चारंनं निर्दोषमिति । तडुक्तं । मंसनिवत्तिं काउं,सेवइ दंतिक्कगंतिध णिनेया ॥ इयवइऊणारंनं, परववएसा कुणइ बालो ॥ १ ॥ नचैतावन्निर्दोषता । नहि लू तादिकं शीतलिकाद्यनिधानांतरमात्रेणान्यथात्वं नजते विषं वा मधुरकानिधानेनेति । ए वमन्येषामपि कापिलादीनामाविर्नावतिरोनावानिधानाभ्यां विनाशोत्पादावनिदधताम नैपुण्यमाविष्करणीयं । तदेवं ते वराकाः शाक्यादयोमनोदिष्टनोजिनः सपरिग्रहतयार्त्त ध्यायिनोऽसमाहितामोक्षमार्गाख्याद्भावसमाधेरसंवृततया दूरेण वर्त्ततइत्यर्थः ॥ २६ ॥

जहा ढंकाय कंकाय कुललामगुकासिहा ॥ मछेसणं जियायंति, झाणं ते कलुसाधमं ॥ २७ ॥ एवंतु समणाएगे, मिछदिछी अ णारिया ॥ विसएसणं जियायंति, कंकावा कलुसाहमा ॥ २८ ॥

अर्थ—( जहाढंकायकंकाय के० ) जेम ढंक पक्षी विशेष, तथा कंक पक्षी विशेष ( कुललामगुकासिहा के० ) कुलला पक्षी विशेष मूंगु पक्षी विशेष काक पक्षी विशेष एसर्वे पक्षी मांसना अर्थि मांसनी इहा एटले वांछाना करनार छे. ते ( मछेसणंझि यायंति के०) माछलानी प्राप्तिनी एषणाने ध्यावतां थकां रहेछे. ( घ्राणंतेकलुसा धमं के०) एवा मांसाहारी जीवो ते सर्वकाल कलुष एटले मलीन एवुं माछलानी गवे षणानुं अधम ध्यान ध्यावेछे. ॥ २७ ॥ ( एवंतुसमणाएगे के० ) ए प्रकारे कोइएक अन्यतीर्थिक अथवा पासछादिक कुशीलिया श्रमण ( मिछदिठि के० ) मिथ्यादृष्टी ( अणारिया के० ) अनार्य ते ( विसएसणंझियायंति के० ) विषयनी एषणा एटले, श ब्द रूप रस गंधनी प्राप्तिने ध्यावेछे ( कंकावाकलुसाहमा के०) ते पूर्वोक्त कंकादिक प क्षीनी पेरे कलुषित चित्त वाला अधम पुरुषो जाणवा. ॥ २८ ॥

॥ दीपिका—यथा ढंकादयः पक्षिविशेषाजलाश्रयनिवासाआमिषजीविनोमत्स्यप्रा प्तिं ध्यायंति तत्ध्यायिनश्च ते कलुषाधमाः स्युः। एवं शाक्यादयोविषयप्राप्तिं ध्यायंतः क लुषाधमाश्च स्युः ॥ २७ ॥

टीका—यथा चैते रससातागौरवतयार्तध्यायिनोभवंति तथा दृष्टांतद्वारेण दर्शयितु माह । (जहाढंकायइत्यादि) यथेत्युदाहरणन्यासार्थः ।यथा येन प्रकारेण ढंकादयः पक्षि विशेषाजलाश्रयाआमिषजीविनोमत्स्यप्राप्तिं ध्यायंत्येवंभूतं च ध्यानमार्तरौद्रध्यानरूपत याऽत्यंतकलुषमधमं च भवतीति॥२७॥ दार्ष्टांतिकं दर्शयितुमाह । (एवमित्यादि) एवमि ति यथा ढंकादयोमत्स्यान्वेषणपरं ध्यानं ध्यायंति तत्ध्यायिनश्च कलुषाधमाभवंत्येवमेव मिथ्यादृष्टयः श्रमणाएके शाक्यादयोऽनार्यकर्मकारित्वात्संरंभपरिग्रहतया अनार्याः संतो विषयाणां शब्दादीनां प्राप्तिं ध्यायंति तत्ध्यायिनश्च कंकाइव कलुषाधमाभवंतीति ॥२८॥

सुद्धं मग्गं विराहित्ता, इहमेगेउ डुम्मती॥ उम्मग्गगता डुक्खं,
घायमेसंति तं तहा ॥ २९ ॥ जहा आसाविणिं नावं, जाइअंधो
डुरूहिया ॥ इछइ पारमागंतुं, अंतराय विसीयंती ॥ ३० ॥

अर्थ—(सुद्धंमग्गंविराहित्ताके०)शुद्धमार्गजे सम्यक्दर्शनादिक तेने कुमार्गनी प्ररुपणाये विराधता एवा (इहके०) आसंसारमांहे ( मेगेउडुम्मतीके०) कोइएक डुराचारी पोताना दर्शनना अनुरागे प्रवर्त्तता ( उम्मग्गगताडुक्खं के० ) उन्मार्गे गत एटले अरिहंत नापी त तत्व थकी विपरीत मार्गे प्राप्त थया छता डुःखजे अष्ट प्रकारना कर्म असातोदयरू प तेणे करी ( घायमेसंतितंतहा के० ) तथा प्रकारे ते घात एटले नरकादिकगतिमांहे

अनेक प्रकारेकरी जन्ममरणछेदन चेदनादिक डुःखनी वेदना पामे. ॥ २९ ॥ (जहाके०) जेम (जाइअंधोके०) जात्यंध पुरुष (आसाविणिंके०) शतछिद्र सहित एवी (नावंके०) नावने विषे (डुरूहिया के०) बेसीने (इछति पारमागंतुंके०) समुद्र तरी पार पामवानी इछा करे पण तेवी नावा थकी समुद्रनो शीरीते पार पामे? (अंतरायविसीयंतीके०) ते पुरुष अंतराले विपीदंति एटले वचमांज बुडे, परंतु पार पामे नही. ॥ ३० ॥

॥ दीपिका– शुद्धं निर्दोपं मोक्षमार्गप्ररूपणया विराध्य दूषयित्वा इह संसारे एके शाक्यादयोडुर्मतयउन्मार्गगताडुःखं घातं च मृतिं ते शाक्यादयस्तथा तेन प्रकारेण एपंति अन्वेषयंति डुःखमरणे शतशः प्रार्थयंतीत्यर्थः ॥ २९ ॥ यथा जात्यंधआस्राविणीं शतछिद्रां नावमारुह्य पारमागंतुमिछति। न चासौ छिद्रनावारूढः पारगतः स्यात् किंतर्हि अंतराले जलमध्यएव विपीदति निमज्जति ॥ ३० ॥

॥ टीका–किंच (शुद्धमित्यादि) शुद्धमवदातं निर्दोषं मार्गं सम्यग्दर्शनादिकं मोक्षमार्गं कुमार्गप्ररूपणया विराध्य दूषयित्वा इहास्मिन्संसारे मोक्षमार्गप्ररूपणप्रस्तावे वा एके शाक्यादयः स्वदर्शनानुसारेण महामोहाकुलितांतरात्मानोडुष्टा पापोपादानतया मतिर्येषां ते डुष्टमतयः संतउन्मार्गेण संसारावतरणरूपेण गताः प्रवृत्ताउन्मार्गगताडुःखयतीति डुःखमष्टप्रकारं कर्मासातोदयरूपं वा तद्दुःखं घातं चांतशस्तथा सन्मार्गविराधनतया उन्मार्गगमनं चैपंत्यन्वेषयंति। डुःखमरणे शतशः प्रार्थयंतीत्यर्थ. ॥ २९ ॥ शाक्यादीनां चापायं दिदर्शयिषुस्तावद्दृष्टांतमाह । (जहाआसाविणिमित्यादि) यथा जात्यंधआस्राविणीं शतछिद्रां नावमारुह्य पारमागंतुमिछति। नचासौ सछिद्रतया पारगामी नवति किंतर्ह्यंतरालएव जलमध्यएव विपीदति निमज्जतीत्यर्थः ॥ ३० ॥

एवंतु समणा एगे, मिछदिठी अणारिया ॥ सोयं कसिणमावन्ना, आगंतारो महप्नयं ॥ ३१ ॥ इमंच धम्ममादाय, कासवेण पवेदितं ॥ तरे सोयं महाघोरं, अत्तत्ताए परिवए ॥ ३२ ॥

अर्थ–हवे ए दृष्टांत अन्यतीर्थिक साथे जोडेछे (एवंतुसमणाएगे के०) एरीते कोइ एक अन्य दर्शनी श्रमण, (मिछदिठी अणारिया के०) मिथ्यादृष्टी अनाचारी विपरीत मार्गना उपदेशक विपरीत बुद्धिना धणी ते (सोयंकसिणमावन्ना के०) श्रोत एटले कर्मनो आश्रव तेने विषे संपूर्ण पोहोच्या थका (आगंतारोमहप्नयं के०) आवते काले महानय एटले अत्यंत बीहामणा एवा नरकादिकना डुःख पामे. ॥ ३१ ॥ (इमंचधम्ममादाय के०) एम सर्वलोक प्रसिद्ध छकाय जीवोनो वाछल कारी एवो श्रुत चारित्र

रूप धर्म तेने ग्रहण करीने ( कासवेणपवेदितं के० ) ते धर्म काश्यपगोत्री श्रीमहावीर देवे कह्यो ते धर्मने आदरवा थकी फल जे थाय ते कहेछे (तरेसोयंमहाघोरं के०) ते माहाघोर एवो संसार समुद्रनो श्रोत एटले प्रवाहरूप स्थानक तेने तरे अर्थात् संसार समुद्रने उलंघीने पारपामे, ( अत्तत्ताएपरिव्वए के० ) ते कारण माटे आत्मानो त्राइ एटले रक्षपाल एवो साधु ते एहिज सम्यग् धर्मने समाचारे ॥ ३२ ॥

॥ दीपिका–एवमेके शाक्यादयः श्रमणामिथ्यादृष्टयोऽनार्याभावस्रोतःकर्माश्रवरूपं कृत्स्नं समापन्नाः संतोमहाभयं पौनःपुन्येन दुःखमागंतारआगमनशीलाः स्युः संसार सागरोत्तरणं न स्यादिति ॥३१॥ इमं प्रत्यक्षं धर्मं । चः पुनरर्थे । काश्यपेन श्रीवीरेण प्रवेदितं प्रणीतं आदाय गृहीत्वा भावस्रोतः संसारपर्यटनं महाघोरं तरेल्लंघयेत् । तदेवं जिनप्रणीतधर्माटनेनासता आत्मनस्त्राणाय नरकादिभ्योरक्षणाय परिव्रजेत्संयमानुष्ठायी स्यात् । क्वचित्पश्चार्द्धस्यायं पाठः । ( कुज्जाभिक्खूगिलाणस्स, अगिलाएसमाहिए ) । भिक्षुः साधु ग्लानस्य वैयावृत्यमग्लानोऽपरिश्रांतः कुर्यात्समाधिर्ना ग्लानस्य समाधिमुत्पादयन् ॥३२॥

॥ टीका–दार्ष्टांतिकमाह । ( एवंत्वित्यादि ) एवमेव श्रमणाएके शाक्यादयोमिथ्यादृष्टयोऽनार्याभावस्रोतःकर्माश्रवरूपं कृत्स्नं संपूर्णमापन्नाः संतस्ते महाभयं पौनःपुन्येन संसारपर्यटनतया नारकादिस्वभावं दुःखमागंतारआगमनशीलाभवंति । न तेषां संसारोदधेरास्राविणीं नावं व्यवस्थितानामिवोत्तरणं भवतीति भावः ॥ ३१ ॥ यतः शाक्यादयः श्रमणाः मिथ्यादृष्टयोऽनार्याः कृत्स्नं स्रोतः समापन्नाः महाभयमागंतारोभवंति ततइदमपदिश्यते । ( इमंचेत्यादि ) इदमिति प्रत्यक्षासन्नवाचित्वादिदमोनंतरं वक्ष्यमाणलक्षणं सर्वलोकप्रकटं च दुर्गतिनिषेधेन शोभनगतिधारणाद्धर्मं श्रुतचारित्राख्यं । चशब्दः पुनःशब्दार्थे । सच पूर्वस्माद्व्यतिरेकं दर्शयति । यस्मात्तीर्थोद निप्रणीतधर्मस्यादातारोमहाभयं गंतारोभवंति इमं पुनर्धर्ममादाय गृहीत्वा काश्यपेन श्रीवर्धमानस्वामिना प्रवेदितं प्रणीतं तरेल्लंघयेद्भावस्रोतः संसारपर्यटनस्वभावं । तदेव विशिनष्टि । महाघोरं दुरुत्तारत्वान्महाभयानकं । तथाहि । तदंतर्वर्तिनोजंतवोगर्भाद्गर्भं जन्मतोजन्म मरणान्मरणं दुःखाद्दुःखमित्येवमरघट्टघटीन्यायेनानुभवंतोऽनंतमपि कालमासते । तदेवं काश्यपप्रणीतधर्मादानेन सता आत्मनस्त्राणं नरकादिरक्षा तस्मै आत्मत्राणाय परिःसमंतात्परिव्रजेत्संयमानुष्ठायी भवेदित्यर्थः । क्वचित्पश्चार्धस्यान्यथा पाठः । कुज्जाभिक्खू गिलाणस्स. अगिलाएसमाहिए ॥ भिक्षुः साधुः ग्लानस्यवैयावृत्यमग्लानोऽपरिश्रांतः कुर्यात्सम्यक्समाधिना ग्लानस्य वा समाधिमुत्पादयन्निति ॥ ३२ ॥

विरए गामधम्मेहिं जे केइ जगई जगा ॥ तेसिं अत्तुवमायाए,
थामं कुवं परिवए ॥ ३३ ॥ अइमाणं च मायं च, तं परिन्नाय
पंमिए ॥ सवमेयं णिराकिच्चा, णिवाणं संधए मुणी ॥ ३४ ॥

अर्थ–विरति साधु संयमानुष्ठानने शीरीतें पाले ते उपर कहेडे. ( विरएगामधम्मेहिंके० ) ग्रामधर्मजे शब्दादिक विषय ते थकी विरति थको अने ( जेकेइजगईजगा के० ) जेकांइ जगत्रमांहे त्रस अने स्थावर जीवडे ( तेसिंअत्तुवमायाए के० ) तेने पोताना आत्म तुल्यनी उपमायें देखीने तेने राखवाने अर्थे ( थामंकुवं के० ) बलवीर्य फोरवतो थको ( परिवए के० ) संयम पाले. ॥ ३३ ॥ अइमाणंचमायंच के० ) जे कारणे मान जे डे ते चारित्रने अतिक्रमे डे तेमाटे तेने अतिमान कहिए. एना साथें क्रोध पण लेवो एम ज अतिमाया अने चशब्द थकी लोन पण लेवो ( तं के० ) ते चार कषायने ( पंमिए के० ) पंमित विवेकी जन होय ते एने संयमना शत्रु ( परिन्नाय के० ) ज्ञपरिज्ञायें करी जाणीने ( सवमेयंणिराकिच्चा के० ) एसर्व कषायने संसारनुं कारण जाणीने तेने प्रत्याख्यान परिज्ञायें करी निराकरीने ( णिवाणंसंधएमुणीके० ) साधु मोक्षने सधे वांडाकरे.

॥ दीपिका–ग्राम्यधर्माः शब्दादिविषयास्तेन्योविरताः संत्येके केचन जगति जगाः प्राणिनोजीवितार्थिनस्तेषामात्मोपमया तद्रक्षणाय स्थामं सामर्थ्यं कुर्वन् परिव्रजेत्संयमे ॥ ३३ ॥ अतिमानं च मायां चशब्दात्क्रोधलोनौ गृह्येते । एवं कषायव्रत परिज्ञाय पंमितः सर्वमेतं नवहेतु निराकृत्य निर्वाणमनुसंधयेत् मोक्षार्थं प्रशस्तनावानुगतः स्यात् । सतिच कषाये न संयमः सफलतां याति । यतः । सामन्नमणुचरंतस्स, कसाया जस्स उक्कडा होंति । मन्नामि उन्नुपुप्फंच, निप्फलं तस्स सामन्नंइति ॥ ३४ ॥

॥ टीका–कथं संयमानुष्ठाने परिव्रजेदित्याह । ( विरएइत्यादि ) ग्रामधर्माः शब्दादयो विषयास्तेन्योविरतामनोज्ञेतरेष्वरक्तद्विष्टाः संत्येके केचन जगति पृथिव्यां संसारोदरे ( जगाइति ) जंतवोजीवितार्थिनस्तेषां डुःखद्विषामात्मोपमया डुःखमनुत्पादयन्तद्रक्षणे सामर्थ्यं कुर्यात्कुर्वंश्च संयमानुष्ठाने परिव्रजेदिति ॥ ३३ ॥ संयमविघ्नकारिणामपनयनार्थमाह । ( अइमाणंचेत्यादि ) अतीव मानोऽतिमानश्चारित्रमतिक्रम्य योवर्तते चकारादेतद्वयः क्रोधोपि परिगृह्यते । एवमतिमायां चशब्दादतिलोनं च तमेवंनूतं कषायव्रतं संयमपरिपंथिनं पंमितोविवेकी परिज्ञाय सर्वमेनं संसारकारणनूत कषायसमूहं निराकृत्य निर्वाणमनुसंधयेत्सति च कापायकर्दंबके नसम्यक् संयमः सफलतां प्रतिपाद्यते । तदुक्तं ।

सामस्रमणुचरंतस्स कसाया जस्स उक्कडा होंति ॥ मस्रामि उच्छुपुप्फंच निप्फलं तस्स सा मस्रं ॥१॥ तन्निष्फलत्वेच न मोक्षसंभवः । तथाचोक्तं । संसारादपलायनप्रतिभुवोरागादयो मे स्थितास्तृष्णाबंधनबध्यमानमखिलं किंवेत्सि नेदं जगत् ॥ मृत्यो मुंच जराकरेण परुषं केशेषु मामाग्रहीरेहीत्यादरमंतरेण भवतः किंनागमिष्याम्यहं॥१॥इत्यादि । तदेवमेवंभूतकपायपरित्यागादच्छिन्नप्रशस्तभावानुसंधनया निर्वाणानुसंधानमेव श्रेयइति ॥ ३४ ॥

संधए साहुधम्मंच, पाठांतरं (सद्दए साहुधम्मंच) पावधम्मं णिराकरे ॥ उवहाणवीरिए भिक्खू, कोहं माणंच पत्नए ॥ ३५ ॥
जे य बुद्धा अतिक्कंता, जे य बुद्धा अणागया ॥ संति तेसिं पइठाणं, भूयाणं जगती जहा ॥ ३६ ॥

अर्थ-( संधएसाहुधम्मंच के० ) साधुनो धर्मजे क्षमादिक दश प्रकारनोछे तेने सम्यक् जाणीने वृद्धि करे एटले सम्यक् उपदेशीने वृद्धि पमाडे पाठांतरे ( सद्दए साहुधम्मंच के० ) दश प्रकारनायतिधर्म उपर श्रद्धा राखे. ( पावधम्मंणिराकरे के० ) पाप धर्म जे जीवोनो मर्दन करतो थको धर्मनेभावे प्रवर्त्ते तेने पापधर्म कहिए, तेने निराकरे एटले तेनुं उच्छापन करीने ( उवहाणवीरिएभिक्खू के० ) उपधान जे तप तेने विषे बलवीर्य फोरवतो एवो साधु ( कोहंमाणंचपत्नए के० ) क्रोध अने मानने प्रार्थे नही. चशब्द थकी साधु वर्तमान काले एवीरीते संयम पाले. ॥ ३५ ॥ ए धर्म श्रीमहावीर देवे कह्यो किंवा अन्य जिनोए पण कह्यो ते कहेछे. ( जेयबुद्धाअतिक्कंता के० ) जे तीर्थंकर अतीत काले थया, तथा ( जेयबुद्धाअणागया के० ) जे तीर्थंकर अनागत काले थशे चशब्द थकी जे तीर्थंकर वर्त्तमान काले बिराजमान छे, ते सर्व एज धर्मना कहेनार जाणवा ( संतितेसिंपइठाणं के० ) तेनो प्रतिष्ठान एटले अवलंबननो स्थानक ते शांति एटले समस्त जीवनी दया जाणवी, कोनीपेरे तोके ( जहाके० ) जेम ( भूयाणंजगती के० ) समस्त जीवोने आधारभूत पृथवीरूप स्थानक छे, तेम सर्व तीर्थंकर देवोने जीवदया रूप शांतिनुं स्थानक ते आधारभूत जाणवो. ॥ ३६ ॥

---

॥ दीपिका–साधुधर्मं संयमं संधयेत् वृद्धिं प्रापयेत् तथा पापधर्मं हिंसात्मकं निराकुर्यात् । उपधानं तपस्तत्र वीर्योभिक्षुः क्रोधं मानं च न प्रार्थयेन्नवर्धयेत् ॥ ३५ ॥ ये बुद्धास्तीर्थकृतोऽतिक्रांताअतीताये चाऽनागताः । चशब्दाद्वर्तमानाजिनेंद्रास्तेषां सर्वेषां शांतिर्भावमार्गः प्रतिष्ठानमाधारः । अथवा शांतिर्मोक्षः प्रतिष्ठानमाधारः । मोक्षश्च भावमार्गं विना नस्यादित्यतः सर्वेपि जिनाएनं भावमार्गं प्रतिष्ठानमुक्तवंतोऽनुष्ठितवंतश्चेति ग

म्यंते । भूतानां प्राणिनां यथा त्रिलोकी प्रतिष्ठानमेवं सर्वेपि बुद्धाः शांतिप्रतिष्ठानाः ॥३६॥

॥ टीका–किंच । (संधएइत्यादि) साधूनां धर्मः क्षांत्यादिकोदशविधः सम्यग्दर्शनचारित्राख्योवा तमनुसंधयेद्वृद्धिमापादयेत् । तद्यथा । प्रतिक्षणमपूर्वज्ञानग्रहणेन ज्ञानं तथा शंकादिदोषपरिहारेण सम्यग्जीवादिपदार्थाधिगमेन च सम्यग्दर्शनमस्खलितमूलोत्तरगुणसंपूर्णपालनेन प्रत्यहमपूर्वज्ञानग्रहणेन चारित्रंवृद्धिमापादयेदिति । पाठांतरंवा ( सहहेसाधुधम्मंच ) पूर्वोक्तविशेषणविशिष्टसाधुधर्मं मोक्षमार्गत्वेन श्रद्दधीत निःशंकतया गृह्णीयाच्चशब्दात्सम्यगनुपालयेच्च । तथा पापं पापोपादानकारणं धर्मं प्राणुपमर्देन प्रवृत्तं निराकुर्यात्तथोपधानं तपस्तत्र यथाशक्त्या वीर्यं यस्य सभवत्युपधानवीर्यस्तदेवंभूतोभिक्षुः क्रोधं मानं च न प्रार्थयेन्नवर्धयेद्देति ॥ ३५ ॥ अथैवंभूतं भावमार्गं किं वर्धमानस्वाम्येवोपदिष्टवानुतान्येपीत्येतदाशंक्याह । ( जेयबुद्धाइत्यादि ) ये बुद्धास्तीर्थकृतोऽतीते नादिके कालेऽनंताः समतिक्रांतास्ते सर्वेप्येवंभूतं भावमार्गमुपन्यस्तवंतस्तथा ये चानागता भविष्यदनंतकालभाविनोऽनंताएव तेप्येवमेवोपन्यसिष्यंति । चशब्दाद्वर्तमानकालभाविनश्च संख्येयाइति । न केवलमुपन्यस्तवंतोऽनुष्ठितवंतश्च गम्यंते । तद्दर्शयति । शमनं शांतिर्भावमार्गस्तेषामतीतानागतवर्तमानकालभाविनां बुद्धानां प्रतिष्ठानमाधारोबुद्धत्वस्यान्यथानुपपत्तेः । यदिवा शांतिर्मोक्षः सतेषां प्रतिष्ठानमाधारस्ततस्तदवाप्तिश्च भावमार्गमंतरेण न भवतीत्यतस्ते सर्वेप्येनं भावमार्गमुक्तवंतोऽनुष्ठितवंतश्च गम्यंते । शांतिप्रतिष्ठानत्वे दृष्टांतमाह । भूतानां स्थावरजंगमानां यथा जगती त्रिलोकी प्रतिष्ठानमेवं ते सर्वेपि बुद्धाः शांतिप्रतिष्ठानाइति ॥ ३६ ॥

अहणं वयमावन्नं, फासा उच्चावया फुसे ॥ ण ते सुविणिहणेज्जा वाएणव महागिरी ॥ ३७ ॥ संवुडे से महापन्ने, धीरे दत्तेसणं चरे ॥ निवुडे कालमाकंखी, एवं केवलिणो मयंतिवेमि ॥३८॥
इति मोक्षमार्गनामकं एकादसममज्झयणं सम्मत्तं ॥

अर्थ–(अहणंवयमावन्नंके०) अथ हवे व्रतप्रतिपन्न संयम ग्राहित साधुने (फासाउच्चावयाफुसे के० ) सम विषमादिक उंचा नीचा अनुकूल प्रतिकूल एवा परिसह फरशे (णतेसुविणिहणेज्जा के० ) तोपण तेणे करीने ते धर्मथकी नचुके एटले धर्म थकी भ्रष्ट नथाय, कोनी पेरे तोके ( वाएणवमहागिरी के० ) जेम वायरे करी मेरुपर्वत भोलायमान नथाय, तेम परिसह उपने थके साधुजन व्रत थकी भोलायमान नथाय. ॥३७॥ ( संवुडेसेमहापन्ने के० ) ते साधु संवरवान महाप्रज्ञावंत, ( धीरेदत्तेसणंचरे के० ) धै

र्यवान कर्मविदारवाने सूरवीर, दीधो एषणीक आहार ग्रहण करवाने विषे विचरे (·नि बुमेकालमाकंखी के० ) तथा निवृत्त उपशांत कषाय वालो एवो ठतो मरण कालसु धी संयमने वांछे (एवंकेवलिणोमयं के०) एम केवल ज्ञानीउनो मतछे अने तेज केवल ज्ञानीउनो प्रकाश्यो मार्ग श्रीमहावीर देव कहेछे, पण महारी बुद्धिये हुं केतो नथी. ति बेमिनो अर्थ पूर्ववत् जाणवो ॥ ३ ८ ॥ इतिश्रीसूत्रकृतांगना प्रथमश्रुतस्कंधने विषे मो क्षमार्गनामे एकादशमां अध्ययनो अर्थ समाप्त थयो. ॥

॥ दीपिका—अथ तं साधुं प्रतिपन्नव्रतं उच्चावचाः शुनाशुनाः स्पर्शाः परीषहोप सर्गाः स्पृशेयुः पीडयेयुः । सच साधुस्तैः पीडितोन विहन्यात् न संयमाच्चलेत् । यथा वातेन वायुना महागिरिर्मेरुर्न चलेत् । परीषहोपसर्गजयश्चाभ्यासवशाद्विधेयः । यथा क श्चिद्गोपस्तदहर्जातं तर्णकमुत्पाट्य गवांतिकं नयति आनयति च ततोसौ क्रमेण प्रत्यहं वर्धमानमपि वत्समुत्पाटयन्नन्यासवशाद्विवर्षंत्रिवर्षमपि तमुत्पाटयति । एवं साधुरप्यन्या सात्परीषहोपसर्गजयं विधत्ते ॥३७॥ ससंवृतः साधुर्महाप्रज्ञः सम्यग्दर्शनज्ञानवान् धीरः परीषहादिनिरक्षोभ्यः परेण दत्ते आहारादिके एषणां चरेत् त्रिविधयैषणया युक्तः संयमे चरेत् तथा निर्वृतः शीतीनूतकालं मृत्युकालं यावदनिकांक्षेत् । एतन्मया यत्पूर्वोक्तं त त्केवलिनः सर्वज्ञस्य मतमिति । ब्रवीमीति सुधर्मस्वामी जंबूस्वामिनमाहेति ॥३८॥ इत्ये कादशं मार्गाध्ययनं समाप्तं ॥

॥ टीका—प्रतिपन्ननावमार्गेण च यद्विधेयं तद्दर्शयितुमाह । (अहसुमित्यादि) अथ मार्गप्र तिपत्त्यनतरं साधुं प्रतिपन्नव्रतं संतं स्पर्शाः परीषहोपसर्गरूपाउच्चावचागुरुलघवोनानारू पाव्रा स्पृशेयुः । सच साधुस्तैरनिभुतः संसारस्वनावमपेक्षमाणः कर्मनिर्जरांच न तैरनुकूल प्रतिकूलैर्विहन्यात् नैवं संयमानुष्ठानान्मनागपि विचलेत्किमिव महावातेनेव महागिरिर्मेरु रिति। परीषहोपसर्गजयश्चाभ्यासक्रमेण विधेयोऽभ्यासवतोहि दुष्करमपि सुकरं नवति । अ त्र दृष्टांतः। तद्यथा कश्चिद्गोपस्तदहर्जातं तर्णकमुत्क्षिप्य गवांतिके नयत्यानयति वा ततोसा वनेनैव क्रमेण प्रत्यहं प्रवर्द्धमानमपि वत्समुत्क्षिपन्नन्यासवशाद्विहायनं त्रिहायणमप्यु त्क्षिपत्येवं साधुरप्यन्यासात् शनैःशनैः परिषहोपसर्गजयं विधत्तइति ॥३७॥ सांप्रतमध्यय नार्थमुपसंजिहीर्षुरुक्तशेषमधिकृत्याह । ( संवुडेइत्यादि ) सएवं साधुः संवृताश्रवद्वारत या संवरसंवृत्तोमहती प्रज्ञा यस्यासौ महाप्रज्ञः सम्यग्दर्शनज्ञानवांस्तया धीर्बुद्धिस्तया राज तइति धीरः परीषहोपसर्गाऽक्षोभ्योवा सएवंभूतः सन् परेण दत्ते सत्याहारादिके एषणां चरेत्त्रिविधयाप्येषणया युक्तः सन् संयममनुपालयेत्तथा निवृतः कषायोपशमाच्छीतीभूतका लं मृत्युकालं यावदनिकांक्षेत् । एतन्मया प्राक् प्रतिपादितं तत्केवलिनः सर्वज्ञस्य तीर्थक

तोमतं । एतच्च जंबूस्वामिनमुद्दिश्य सुधर्मस्वाम्याह । तदेतद्यत्त्वया मार्गस्वरूपं प्रश्नितं त न्मया न स्वमनीषिकया कथितं तर्हि केवलिनोमतमेतदित्येवं नवता ग्राह्यं । इतिः परिसमा प्त्यर्थे । ब्रवीमीति पूर्ववत् ॥ ३८ ॥ इति मार्गाख्यमेकादशमध्ययनं समाप्तं ॥

॥ हवे समवसरण नामे बारमुं अध्ययन प्रारंनिए ठैए अगीयारमां अध्ययनने विषे मो क्ष मार्ग कह्यो ते मोक्षने तो जे कुमार्ग मूकीने सुमार्गने पडिवजे ते अंगीकार करे माटे मार्ग प्रतिपत्ति चारित्रियें कुमार्गने परिहरवो ए अधिकारे बारमो अध्ययन प्रारंनियेंबैए.

चत्तारि समोसरणाणिमाणि, पावाडया जाइं पुढोवयंति ॥ कि
रियं अकिरियं विणियंति तइयं, अन्नाण माहंसु चउत्थमेव ॥१॥
अणाणिया ता कुसलावि संता, असंथुयाणो वितिगिछतिन्ना ॥
अकोविया आहु आकोवियेहिं, अणाणुवीइत्तु मुसं वयंति ॥२॥

अर्थ–( चत्तारिसमोसरणाणिमाणि के० ) ए आगल वखाणशे ते चार प्रकारना समोसरण एटले परतीर्थिकनो समुदाय जाणवो ते ( पावाडयाजाइंपुढोवदंति के० ) प्रावाडुक एटले कुवादि ते जुडुं जुडुं बोलेठे ते केवीरीते तोके एकवादि ( किरियं के० ) क्रियानेज सफल कहेठे. तथा बीजो वादि ( अकिरियं के० ) अक्रियानेज सफल कहे ठे अने ( विणियंतितइयं के० ) त्रीजोवादि विनयज प्रधानठे एम बोलेठे ( अन्नाणमा हंसुचउत्थमेव के० ) अन्यवली चोथो अज्ञानवादि ते अज्ञाननेज प्रधान पणे मानेठे ॥ १ ॥ हवे एपूर्वोक्त चारे वादिउमाना सर्व प्रकारे असंबंध प्रलापि अज्ञातिक एवा जे अज्ञानवादि तेनेज पहेला कहेठे. ( अणाणियाताकुसलाविसंता के० ) ते अज्ञानवा दि अज्ञानी ठता एम कहेठेजे अमेज पंमित ठैयें एम मानेठे परंतु ते ( असंथुया के० ) असंबंधनापी जाणवा ते ( णोवितिगिछतिन्ना के० ) चित्तनीजे ब्रांति तेथकी तस्या नथी माटे मृषावादि जाणवा ते अज्ञानवादि ( अकोविया आहुअकोवियेहिं के० ) सम्यक् धर्म प्ररुपवाने अनिपुण एटले साक्षात् सत्यधर्मनुं ज्ञान जाणवाने असमर्थठे माटे ए अकोविद ठे तो एना समीपे सांनले एवा जे एमना शिष्य तेपण अकोविद एटले मूर्ख जाणवा जेमाटे ते एवुं असंबंध वचन बोलेठे के अज्ञान एज श्रेयठे तो एवुं ते मनुं बोलवुं जेठे तेने मूर्खज मान्य करेठे ॥ सरिसासरिसेहिंरच्चंति इतिवचनात् एम ते ( अणाणुवीइत्तुमुसंवयंति के० ) अनालोची थका सर्वकाल मृषाज बोलेठे. ॥ २ ॥

---

॥ दीपिका–सांप्रतं द्वादशमारभ्यते । पूर्वं मार्गउक्तः सच कुमार्गपरित्यागात्सम्यग्भ वतीति इह कुमार्गत्यागउच्यते । यथा ( चत्तारित्ति ) चत्वारि समवसरणानि परतीर्थि

कान्युपगमसमूहरूपाणि इमानि यानि प्रावादुकाः परतीर्थिकाः पृथक् पृथक् वदंति । क्रियामस्तीत्यादिकां वदंतीति क्रियावादिनः १ अक्रियां नास्तीत्यादिकां वदंतीत्यक्रियावादिनः २ तृतीयावैनयिकाः ३ चतुर्थास्त्वज्ञानिकाः ४ इमानि चत्वारि समवसरणान्युच्यंते ॥ १॥ अथैतेषामज्ञानिकाएव सर्वापलापिनस्तानेवादावाह । ( अन्नाणीति ) अज्ञानिकास्तावदादौ प्रदर्श्यंते । अज्ञानिकाः किल वयं कुशलाइति वादिनोपि संस्तुताश्च संबुद्धाः अतएव विचिकित्सा चित्तशुद्धिश्चित्तभ्रांतिस्तां न तीर्णानातिक्रांताः । तथाहि । केचित्सर्वज्ञं मन्यंते केचित्तं निषेधंति एके सर्वगतमात्मानं वदंत्यन्ये देहमात्रमपरे अंगुष्ठपर्वमात्रं । केचित् श्यामाकतंडुलमात्रमन्ये मूर्तममूर्तं हृदयमध्यवर्तिनं ललाटस्थितमित्यादि । एषामेकवाक्यता कथं स्यात् । नचातिशयज्ञानी कश्चिदस्ति य द्वाक्यं प्रमाणीक्रियते । तथा ज्ञानवतां प्रमादोबहुदोषः । ततोवरमज्ञानमेवेति वदंतश्चित्तभ्रांतिं नातिक्रांताअकोविदाः सम्यक्परिज्ञानविकलाअकोविदेभ्यः स्वशिष्येभ्यआहुः । तथा तेऽननुविचिंत्य अविचिंत्य भाषणान्मृषाऽसत्यं वदंति ॥ २ ॥

---

॥ टीका–उक्तमेकादशमध्ययनं । सांप्रतं द्वादशमारभ्यते । अस्य चायमभिसंबंधः । इहानंतराध्ययने मार्गोभिहितः सच कुमार्गव्युदासेन सम्यग्मार्गतां प्रतिपाद्यतेऽतः कुमार्गव्युदासं चिकीर्षुणा तत्स्वरूपमवगंतव्यमित्यतस्तत्स्वरूपनिरूपणार्थमिदमध्ययनमायातमस्य चोपक्रमादीनि चत्वार्यनुयोग द्वाराणि । तत्रोपक्रमांतर्गतोर्थाधिकारोऽयं । तद्यथा । कुमार्गाभिधायिनां क्रियाक्रियाज्ञानिवैनयिकानां चत्वारि समवसरणानीह प्रतिपाद्यंते । नाम निष्पन्नेतु निक्षेपे समवसरणमित्येतन्नामनिक्षेपार्थं निर्युक्तिकृदाह । समवसरणंमिछक्कं सचित्ताचित्तमीसगं दव्वे ॥ खेत्तंमि जंमि खेत्ते,काले जं जंमि कालंमि ॥११॥ ( समवसरणमित्यादि ) समवसरणमिति सृगतावित्येतस्य धातोः समवोपसर्गपूर्वस्य ल्युडंतस्य रूपं । सम्यगेकीभावेनावसरणमेकत्रगमनं मेलापकः समवसरणं तस्मिन्नपि केवलं समाधौ षड्विधोनामादिकोनिक्षेपस्तत्रापि नामस्थापने क्षुण्णे द्रव्यविषयं पुनः समवसरणं नोआगमतोज्ञशरीरभव्यशरीरव्यतिरिक्तं सचित्ताचित्तमिश्रभेदात्रिविधं । सचित्तमपि द्विपदचतुष्पदापदभेदात्रिविधमेव । तत्र द्विपदानां साधुप्रभृतीनां तीर्थकृज्जन्मनिष्क्रमणप्रदेशादौ मेलापकः । चतुष्पदादीनां गवादीनां निपानप्रदेशादौ । अपदानां तु वृक्षादीनां स्वतोनास्ति समवसरणं विवक्षया तु काननादौ भवत्यपि । अचित्तानां तु द्व्यणुकायत्रादीनां तथा मिश्राणां सेनादीनां समवसरणसद्भावोऽवगंतव्यइति । क्षेत्रसमवसरणं तु परमार्थतोनास्ति विवक्षया तु यत्र द्विपदादयः समवसरंति व्याख्यायते च समवसरणं त्रि तत्क्षेत्रप्राधान्यादिदमुच्यते । एवं कालसमवसरणमपि द्रष्टव्यमिति । इदानीं भाव

समवसरणमधिकृत्याह । " नावसमोसरणं पुण, णायवं ढविहंमि नावंमि ॥ अहवा वि किरिय अकिरिया, अन्नाणी नेव वेणइया ॥ १९ ॥ ( नावसमवसरणमित्यादि ) नावानामौदयिकादीनां समवसरणमेकत्र मेलको नावसमवसरणं । तत्रौदयिको नावएकविंशति नेदः । तद्यथा । गतिश्चतुर्धा । कषायाश्चतुर्विधाः । एवं लिंगं त्रिविधं । मिथ्यात्वाज्ञानाऽसंयतत्वाऽसिद्धत्वानि प्रत्येकमेकैकविधानि । लेश्याः कृष्णादिनेदेन षड्विधानवंति । औपशमिको द्विविधः । सम्यक्त्वचारित्रोपशमनेदात् । क्षायोपशमिकोप्यष्टादशनेदनिन्नः । तद्यथा । ज्ञानं मतिश्रुतावधिमनःपर्यायनेदाच्चतुर्धा । अज्ञानं मत्यज्ञानश्रुताज्ञानविनंगनेदात्त्रिविधं । दर्शनं चक्षुरचक्षुरवधिदर्शननेदात्त्रिविधमेव । लब्धिर्दानलाननोगोपनोगवीर्यनेदात्पंचधा । सम्यक्त्वचारित्रसंयमासंयमाः प्रत्येकमेकप्रकाराइति । क्षायिकोनवप्रकारः । तद्यथा । केवलज्ञानं केवलदर्शनं दानादिलब्धयः पंच सम्यक्त्वं चारित्रं चेति । जीवत्वनव्यत्वानव्यत्व नेदात्पारिणामिकस्त्रिविधः । सान्निपातिकस्तु द्वित्रिचतुःपंचकसंयोगैर्नवति । तत्र द्विकसंयोगः संसिद्धस्य क्षायिकपारिणामिकनावद्वयसद्भावादवगंतव्यः । त्रिकसंयोगस्तु मिथ्यादृष्टिसम्यग्दृष्टचविरतानामौदयिकक्षायोपशमिकपारिणामिकनावसद्भावादवगंतव्यः । तथा नवस्थकेवलिनोप्यौदयिकक्षायिकपारिणामिकसद्भावाद्विज्ञेयइति । चतुष्कसंयोगोपि क्षायिकसम्यग्दृष्टीनामौदयिकक्षायिकक्षायोपशमिकपारिणामिकनावसद्भावात्तथोपशमिकसम्यग्दृष्टीनामौदयिकोपशमिकक्षायोपशमिकपारिणामिकसद्भावाच्चेति । पंचकसंयोगस्तु क्षायिकसम्यग्दृष्टीनामुपशमश्रेण्यां समस्तोपशांतचारित्रमोहानां नावपंचकसद्भावाद्विज्ञेयइति । तदेवं नावानां द्विकत्रिकचतुष्कपंचकसंयोगात्संनविनः सान्निपातिकनेदाः षड्नवंत्येतएव त्रिकसंयोगचतुष्कसंयोगगतिनेदात्पंचदशधा प्रदेशांतरेऽनिहिताइति । षड्विधे नावे नावसमवसरणं निर्युक्तिकृदेव दर्शयति । क्रियां जीवादिपदार्थोस्तीत्यादिकां वदितुं शीलं येषां ते क्रियावादिनः । एतद्विपर्यस्ताअक्रियावादिनस्तथा ज्ञानिनोज्ञाननिन्हववादिनस्तथा वैनयिकाविनयेन चरंति तत्प्रयोजनावा वैनयिकाः । एषां चतुर्णामपि सप्तनेदानामाक्षेपं कृत्वा यत्र विक्षेपः क्रियते तद्भावसमवसरणमित्येतच्च स्वयमेव निर्युक्तिकरोंऽत्यगाथया कथयिष्यति । सांप्रतमेतेषामेवानिधानान्वर्थतादर्शनद्वारेण स्वरूपमाविष्कुर्वन्नाह । "अत्थित्ति किरियवादी, वयंति णत्थियकिरियवादीया ॥ अन्नाणी अन्नाणं, विणइत्ता वेणइयवादी" ॥ २० ॥ ( अस्तित्त्वीत्यादि ) जीवादिसद्भावपदार्थोस्त्येवेत्येवं सावधारणक्रियाभ्युपगमोयेषां ते अस्तीति क्रियावादिनस्ते चैवंवादित्वान्मिथ्यादृष्टयः । तथाहि । यदि जीवोस्त्येवेत्येवमभ्युपगम्यते ततः सावधारणत्वान्न कथंचिन्नास्तीत्यतः स्वरूपसत्तावत्पररूपापत्तिरिति स्यादेवंच नानेकं जगत् स्यान्नचैतद्दृष्टमिष्टं वा । तथा नास्त्येव जीवादिकः पदार्थइत्येवं वादिनोऽक्रियावादिनस्ते

प्यसद्भूतार्थप्रतिपादनान्मिथ्यादृष्टयएव । तथा ह्येकांतेन जीवास्तित्वप्रतिषेधे कर्तुरभावा न्नास्तीत्येतस्यापि प्रतिषेधस्याभावस्तदभावाच्च सर्वास्तित्वमनिवारितमिति ॥ तथा न ज्ञा नमज्ञानं तद्विद्यते येषां ते ज्ञानिनस्ते ह्यज्ञानमेव श्रेयइत्येवं वदंत्येतेपि मिथ्यादृष्टयएव। तथा ह्यज्ञानमेव श्रेयइत्येतदपि न ज्ञानमृतेभणितुं पार्यते तदभिधानाच्चावश्यं ज्ञानम भ्युपगतं तैरिति । तथा वैनयिकाविनयादेव केवलात्स्वर्गमोक्षावाप्तिमभिलपंतोमिथ्याद ष्टयोयतोन ज्ञानक्रियाभ्यामंतरेण मोक्षावाप्तिरिति । एषां च क्रियावाद्यादीनां स्वरूपं त न्निराकरणं चाचारटीकायां विस्तरेण प्रतिपादितमिति नेह प्रतन्यते । सांप्रतमेतेषां भेद संख्यानिरूपणार्थमाह । " असियसयं किरियाणं, अकिरियाणं च होइ चुलसीति ॥ अना णियसत्तठी, वेणइयाणं च बत्तीसा." ॥ २१ ॥ ( असियेत्यादि ) क्रियावादिनामशीत्यधि कं शतं भवति तच्चानया प्रक्रियया । तद्यथा । जीवादयोनव पदार्थाः परिपाट्या स्थाप्यं ते । तदधः स्वतः परतइति भेदद्वयं ततोप्यधोनित्यानित्यभेदद्वयं ततोप्यधस्तात्परिपाट्या कालस्वभावनियतीश्वरात्मपदानि पंच व्यवस्थाप्यंते । ततश्चैवं चारणिकाप्रक्रमः । तद्य था । अस्ति जीवः स्वतोनित्यः कालतः । तथाऽस्ति जीवः स्वतोऽनित्यः कालतएव । ए वं परतोपि भंगद्वयं । सर्वेपि च चत्वारः कालेन लब्धाः । स्वभावनियतीश्वरात्मपदान्य पि प्रत्येकं चत्वारएव लभंते । ततश्च पंचापि चतुष्ककाविंशतिर्भवंति । सापि जीवपदा र्थेन लब्धा । एवमजीवादयोप्यष्टौ प्रत्येकं विंशतिं लभंते । ततश्च नवविंशतयोमीलि ताः क्रियावादिनामशीत्युत्तरशतं भवतीति । इदानीमक्रियावादिनां नसंत्येव जीवादयः पदार्थाइत्येवमभ्युपगमवतामनेनोपायेन चतुरशीतिरवगंतव्या । तद्यथा । जीवादीन् प दार्थान् सप्तान्लिख्य तदधः स्वपरभेदद्वयं व्यवस्थाप्यं । ततोप्यधः कालयदृच्छानियति स्वभावेश्वरात्मपदानि षड्व्यवस्थाप्यानि । भंगकानयनोपायस्त्वयं । नास्ति जीवः स्वतः कालतः । तथा नास्ति जीवः परतः कालतः । एवं यदृच्छानियतिस्वभावेश्वरात्मभिः प्र त्येकं द्वौद्वौ भंगकौ लभ्येते । सर्वेपि द्वादश । तेऽपि च जीवादिपदार्थसप्तकेन गुणिता श्चतुरशीतिरिति । तथाचोक्तं । कालयदृच्छानियतिस्वभावेश्वरात्मतश्चतुरशीतिः । नास्तिक वादिगणमते न संति भावाः स्वपरसंस्थाः । सांप्रतमज्ञानिकानामज्ञानादेव विवक्षितका र्यसिद्धिमिच्छतां ज्ञानं तु सदपि निष्फलं बहुदोषत्वाच्चेत्येवमभ्युपगमवतां सप्तषष्टिरनेनो पायेनावगंतव्या । जीवाजीवादीन् नव पदार्थान् परिपाट्या व्यवस्थाप्य तदधोऽमी सप्त भंगकाः संस्थाप्याः । सत् असत् सदसत् अवक्तव्यं सदवक्तव्यं असदवक्तव्यं सद सदवक्तव्यमिति । अभिलापस्त्वयं । सन् जीवः कोवेत्ति किंवा तेन ज्ञातेन १ असन् जीवः कोवेत्ति किंवा तेन ज्ञातेन, २ सदसन् जीवः कोवेत्ति किंवा तेन ज्ञातेन ३ अव क्तव्योजीवः कोवेत्ति किंवा तेन ज्ञातेन ४ सदवक्तव्योजीवः कोवेत्ति किंवा तेन ज्ञातेत ५ अ

सदवक्तव्योजीवः कोवेत्ति किंवातेन ज्ञातेन ६ सदसदवक्तव्योजीवः कोवेत्ति किंवातेन ज्ञातेन ७ एवमजीवादिष्वपि सप्त भंगकाः । सर्वेपि मिलितास्त्रिपष्टिस्तथाऽपरे ऽमी च त्वारोभंगकाः । तद्यथा । सती भावोत्पत्तिः कोवेत्ति किंवा तया ज्ञातया १ असती भावोत्पत्तिः कोवेत्ति किंवा तया ज्ञातया २ सदसती भावोत्पत्तिः कोवेत्ति किंवा तया ज्ञा तया ३ अवक्तव्या भावोत्पत्तिः कोवेत्ति किंवा तया ज्ञातया ४ सर्वेपि सप्तषष्टिरिस्युत्तरं भंगकत्रयमुत्पन्नभावावयवोपेक्षमिह भावोत्पत्तौ न संभवतीति नोपन्यस्तं । उक्तंच । अ ज्ञानिकवादिमतं नव जीवादीन् सदादिसप्तविधान् ॥ भावोत्पत्तिः सदसद्वेधा वाच्या च कोवेत्ति ॥ १ ॥ इदानीं वैनयिकानां विनयादेव केवलात्परलोकमपीछतां द्वात्रिंशदनेन प्रक्रमेण योज्याः । तद्यथा । सुरनृपतियतिज्ञानिस्थविराधममातृपितृषु मनसा वाचा कायेन दानेन चतुर्विधोविनयोविधेयः । सर्वेप्यष्टौ चतुष्ककामिलिता द्वात्रिंशदिति । उक्तं च वैनयिकमतं विनयश्चेतोवाक्कायदानतः कार्यः । सुरनृपतियतिज्ञानिस्थविराधम मातृपितृषु सदा ॥ १ ॥ सर्वे प्येते क्रियाज्ञानिवैनयिकवादिभेदाएकीकृतास्त्रीणि त्रिप ष्ठ्यधिकानि प्रावाडुकमतशतानि भवंति । तदेवंवादिनां मतभेदसंख्यां प्रदर्श्याऽधुना ते षामध्ययनोपयोगित्वं दर्शयितुमाह । “ तेसिं मताणुमएणं पन्नवणावन्निया इहऊयणे॥ सप्नावणिह्यट्ठं, समोसरणमाहु तेणं तु ” ॥ २२ ॥ ( तेसिंमताणुमएणंइत्यादि ) तेषां पूर्वोक्तवादिनां मतमभिप्रायस्तेन यदनुमतं पक्षीकृतं तेन पक्षीकृतेन पक्षीकृताश्रयणेन प्र ज्ञापना प्ररूपणा वर्णिता प्रतिपादिता इहास्मिन्नध्ययने गणधरैः । किमर्थमिति दर्श यति । तेषां यः सद्भावः परमार्थस्तस्य निश्चयोनिर्णयस्तदर्थं तेनैव कारणेनेदमध्ययनं सम वसरणाख्यमाहुर्गणधराः । तथाहि । वादिनां सम्यगवसरणं मेलापकस्तन्मतनिश्चयार्थं मस्मिन्नध्ययने क्रियतइत्यतः समवसरणाख्यमिदमध्ययनं क्रियते । इदानीं तेषां सम्यग् मिथ्यात्ववादित्वं विभागेन यथा भवति तथा दर्शयितुमाह । “ सम्मदिट्ठी किरिया, वा दीमिछाय सेसगा वाई ॥ जहि ऊणमिछवाय, सेवहवायं इमं सवं ॥ २३ ॥ ( सम्मदि ठीत्यादि ) सम्यगविपरीता दृष्टिर्दर्शनं पदार्थपरिछित्तिर्यस्यासौ सम्यग्दृष्टिः । कोसावित्या ह । क्रियामस्तीत्येवंभूतां वदितुं शीलमस्येति क्रियावादी । अत्रच क्रियावादीत्येतदभि त्तिकिरियवादीत्यनेन प्राक् प्रसाधितं सदभूयसम्यग्दृष्टित्वं विधीयते तस्याऽसिद्धत्वादिति। तथाहि । अस्ति लोकालोकविभागः । अस्त्यात्मा अस्ति पुण्यपापविभागः । अस्ति त त्फलं स्वर्गनरकावाप्तिलक्षणं । अस्ति कालः कारणत्वेनाशेषस्य जगतः प्रभववृद्धिस्थि तिविनाशेषु साध्येषु तथा शीतोष्णवर्षावनस्पतिपुष्पफलादिषु चेति । तथाचोक्तं । का लः पचति भूतानीत्यादि । तथास्तिस्वभावोपि करणत्वेनाशेषस्य जगतः स्वोभावः स्वभाव इति कृत्वा तेनहि जीवाजीवभव्यत्वमूर्तत्वानां स्वरूपानुविधानात् । तथा धर्माऽधर्माका

शकालादीनां च गतिस्थित्यवगाहपरत्वापरत्वादिस्वरूपापादनादिति । तथा चोक्तं । कः कंटकानामित्यादि । तथा नियतिरपि कारणत्वेनाश्रीयते । तथातथा पदार्थानां नियते रेव नियतित्वात् । तथाचोक्तं । प्राप्तव्योनियतिबलाश्रयेणेत्यादि । तथा पुरा कृतं यच्च शुनाशुनमिष्टानिष्टफलकारणं । तथा चोक्तं । यथायथा पूर्वकृतस्य कर्मणः फलं निधान स्यमिहोपतिष्ठते ॥ तथातथा पूर्वकृतानुसारिणी प्रदीपहस्तेव मतिः प्रवर्तते ॥ १ ॥ तथा । स्वकर्मणा युक्तएव सर्वोह्युत्पद्यते जनः ॥ सयथाऽकृष्यते तेन न यथा स्वयमि च्छतीत्यादि । तथा पुरुषकारोपि कारणं यस्मान्नपुरुषकारमंतरेण किंचित्सिध्यति । तथा चोक्तं । न दैवमिति संचिंत्य त्यजेदुद्यममात्मनः ॥ अनुद्यमेन कस्तैलं तिलेन्य. प्राप्नुमर्हति ॥ १ ॥ तथा । उद्यमाच्चारुचित्रांगि नरोनद्राणि पश्यति ॥ उद्यमात्कृमिकीटोपि निनत्ति महतोद्रुमान् ॥ २ ॥ तदेवं सर्वानपि कालादीन् कारणत्वेनान्युपगच्छन् तथात्मपुण्यपापपरलोकादिकं चेच्छन् क्रियावादी सम्यग्दृष्टि त्वेनान्युपगंतव्यः । शेषकास्तु वादाअक्रियावादाज्ञानवादवैनयिकवादामिथ्यावादाइ त्येवं द्रष्टव्याः । तथाहि । अक्रियावाद्यत्यंतनास्तिकोऽध्यक्षसिद्धं जीवाजीवादिपदा र्थजातमपन्हुवन् मिथ्यादृष्टिरेव नवति । अज्ञानवादी तु सति मत्यादिके हेयोपादे यप्रदर्शके ज्ञानपंचके ऽज्ञानमेव श्रेयइत्येवं वदन् कथं नोन्मत्तः स्यात्तथा विनयवाद्य पि विनयादेव केवलात् क्रियासाध्यां सिद्धिमिच्छन्नपकर्णयितव्यः । तदेवं विपरीतार्था निधायकाएते मिथ्यादृष्टयो ऽवगंतव्याः । ननुच क्रियावाद्यप्यशीत्युत्तरशतनेदोनवति तत्रतत्र प्रदेशे कालादीनन्युपगच्छन्नेव मिथ्यावादित्वेनोपन्यस्तस्तत्कथमिह सम्यग्दृष्टित्वे. नोच्यतइति । उच्यते । सतत्रास्त्येव जीवइत्येवं सावधारणतयाऽन्युपगमं कुर्वन् का लएवैकः सर्वस्यास्य जगतः कारणं तथा स्वनावएव नियतिरेव पूर्वकृतमेव पुरुषकारएवे त्येवमपरनिरपेक्षतयैकांतेन कालादीनां कारणत्वेनाश्रयणान्मिथ्यात्वं । तथाहि । अ स्त्येव जीवइत्येवमस्तिना सह जीवस्य सामानाधिकरण्यात् । यद्यदस्ति तत्तज्जीवइति प्रा प्तमतोनिरवधारणपक्षसमाश्रयणादिह सम्यक्त्वमनिहितं । तथा कालादीनामपि स मुदितानां परस्परसव्यपेक्षाणां कारणत्वेनेहाश्रयणात्सम्यक्त्वमिति । ननुच कथं कालादीनां प्रत्येकं निरपेक्षाणां मिथ्यात्वस्वनावत्वे सति समुदितानां सम्यक्त्वसद्भावः । नहि यत्प्रत्येकं नास्ति तत्समुदायेपि नवितुमर्हति सिकतातैलवत् । नैतदस्ति प्रत्येकं प्रत्येकं पद्मरागादिमणिष्वविद्यमानापि रत्नावली समुदाये नवंती दृष्टा । नच दृष्टे ऽनुपपन्नं नामेति यत्किंचिदेतत् । तथाचोक्तं । कालो सहावणियई, पुव्वकयं पुरिसकारणे गंता ॥ मिच्छत्तं ते चेव उ, समासउ होंति संमत्तं ॥ १ ॥ सव्वे विय कालाइ इय समुदा येण साहगा नणिया ॥ जुज्जंतियएमेवय, सम्मं सव्वस्स कज्जस्स ॥ २ ॥ नहि काला

दी हिंतो, केवलएहिं तु जायए किंचि ॥ इह मुग्गरंधणादिवि, ता सव्वे समुदिता हेक ॥ ३ ॥ जह णेगलरकणगुणा, वेरुलियादीमणीविसंजुत्ता ॥ रयणावलीवएसं, ण लहं ति महघमुल्लावि ॥ ४ ॥ तह णिययवादसुविणि, छियावि अप्पाणपरकनिरवेरका ॥ स म्मदं सणसदं, सव्वेवि णयाणपाविंति ॥ ५ ॥ जह पुण तेचेव मणी, जहा गुणविसे सजागपडिबद्धा ॥ रयणावलित्तिजणइ, चयंतिपाडिक्कसम्मार्ड ॥ ६ ॥ तह सव्वे णयवा या, जहाणुरूवविणिउत्तवत्तवा ॥ सम्मदं सणसदं, लभंति ण विसेससम्मार्ड ॥ ७ ॥ तम्हा मिच्छदिट्ठी, सव्वे विणया सपरकपडिबद्धा ॥ अण्णोण्णनिस्सिया पुण, हवंति सम्म त्तसब्भावा ॥ ८ ॥ यतएवं तस्मात्यक्त्वा मिथ्यात्ववादं कालादिप्रत्येकैकांतकारणरूपं से वध्वमंगीकुरुध्वं सम्यग्वादं परस्परसव्यपेक्षकालादिकारणरूपमिममिति मयोक्तं प्रत्यक्षाव सन्नं सत्यमवितथमिति । गतोनामनिष्पन्नोनिक्षेपः। सांप्रतं सूत्रानुगमेऽस्खलितादिगुणो पेतं सूत्रमुच्चारयितव्यं तच्चेदं । (चत्तारीत्यादि) अस्य च प्राक्तनाध्ययनेन सह्रायं संबं धः । तद्यथा । साधुना प्रतिपन्नभावमार्गेण कुमार्गाश्रिताः परवादिनः सम्यक्परिज्ञाय प रिहर्तव्यास्तत्स्वरूपाविष्करणं चानेनाध्ययनेनोपदिश्यते इत्यनंतरसूत्रस्यानेन सूत्रेण सह संबंधोयं । तद्यथा । संवृतोमहाप्रज्ञोवीरोदत्तैषणां चरन्नभिनिर्वृतः सन् मृत्युकालमभिकां क्षेदेतत्केवलिनोभाषितं। तथा परतीर्थिकपरिहारं च कुर्यात् एतच्च केवलिनो मतं । अ तस्तत्परिहारार्थं तत्स्वरूपनिरूपणमनेन क्रियते। चत्तारीति संख्यापदमपरसंख्यानिवृत्त्य र्थं समवसरणानि परतीर्थिकाभ्युपगमसमूहरूपाणि यानि प्रावादुकाः पृथग्वदंति तानि चामूनि अन्वर्थाभिधायिभिः संज्ञापदैर्निर्दिश्यंते । तद्यथा । क्रियामस्तीत्यादिकां वदितुं शीलं येषां ते क्रियावादिनस्तथाऽक्रियां नास्तीत्यादिकां वदितुं शीलं येषां तेऽक्रिया वादिनस्तथा तृतीयावैनयिकाश्चतुर्थास्त्वज्ञानिकाइति ॥ १ ॥ तदेवं क्रियाऽक्रियावैनयि काज्ञानवादिनः सामान्येन प्रदर्श्याधुना तद्दूषणार्थं तन्मतोपन्यासं पश्चानुपूर्व्याप्यस्ती त्यतः पश्चानुपूर्व्याकर्तुमाह। यदि चैतेषामज्ञानिकाएव सर्वापलापितयाऽत्यंतमसंबद्धाश्च तस्तानेवादावाह । (अण्णाणियाइत्यादि) अज्ञानं विद्यते येषामज्ञानेन वा चरंतीत्य ज्ञानिकाः । अज्ञानिकावा तावत्प्रदर्श्यंते । ते चाज्ञानिकाः किल वयं कुशलाइत्येवं वादि नोपि संतो ऽसंस्तुताज्ञानमेव श्रेयइत्येवं वादितया असंबद्धाः । असंस्तुतत्वादेव विचिकि त्सा चित्तविप्लुतिश्चित्तभ्रांतिः संशीतिस्तां न तीर्णानातिक्रांताः । तथाहि । ते ऊचुर्यएते ज्ञानिनस्ते परस्परविरुद्धवादितया असंबद्धाअसंस्तुतत्वादेव विचिकित्सान यथार्थवा दिनोभवंति । तथा ह्येके सर्वगतमात्मानं वदंति तथान्ये असर्वगतं अपरे अंगुष्ठपर्वमा त्रं केचन श्यामाकतंडुलमात्रमन्ये मूर्तममूर्तं हृदयमध्यवर्तिनं ललाटव्यवस्थितमित्या द्यात्मपदार्थएव सर्वपदार्थपुरःसरे तेषां नैकवाक्यता । नचातिशयज्ञानी कश्चिदस्तीति य

द्वाक्यं प्रमाणीक्रियेत । न चासौ विद्यमानोप्युपलभ्यते ऽर्वाग्दर्शिना । नासर्वज्ञः सर्वं जानातीति वचनात् । तथाचोक्तं । सर्वज्ञोसाविति ह्येतत्तत्कालेऽपि बुभुत्सुभिः ॥ तज्ज्ञान ज्ञेयविज्ञानशून्यैर्विज्ञायते कथं॥१॥ नच तस्य सम्यक् तदुपायपरिज्ञानाभावात्संभवः संभवा भावश्चेतरेतराश्रयत्वात् । तथाहि । न विशिष्टपरिज्ञानमृते तदवाप्त्युपायपरिज्ञानमुपायमंतरे ण नचोपेयस्य विशिष्टपरिज्ञानस्यावाप्तिरिति । नच ज्ञानं ज्ञेयस्य स्वरूपं परिच्छेत्तुमलं । त थाहि । यत्किमप्युपलभ्यते तस्यार्वाग्मध्यपरभागैर्भाव्यं । तत्रार्वाग्भावस्यवोपलब्धेर्नेतर योस्तेनैव व्यवहितत्वात् । अर्वाग्भागस्यापि भागत्रयकल्पनात्तत्सर्वारातीय भागपरिकल्प नया परमाणुपर्यवसानता परमाणोश्च स्वाभाविकविप्रकृष्टत्वादर्वाग्दर्शिनां नोपलब्धि रिति । तदेवं सर्वज्ञस्याभावादसर्वज्ञस्य च यथावस्थितवस्तुस्वरूपापरिच्छेदात्सर्ववादि नां च परस्परविरोधेन पदार्थस्वरूपाभ्युपगमात् यथोत्तरपरिज्ञानिनां प्रमादवतां बहुतर दोषसंभवादज्ञानमेव श्रेयः । तथाहि । यद्यज्ञानवान् कथंचित्पादेन शिरसि हन्यात् तथापि चित्तशुद्धेर्न तथाविधदोषानुषंगी स्यादित्येवमज्ञानिनएवंवादिनः संतोऽसं बद्धानेवं विधां चित्तविद्रुतिं वितीर्णाइति । तत्रैवं वादिनस्ते अज्ञानिकाश्चकोविदा अनिपुणाः सम्यक् परिज्ञानविकलाइत्यवगंतव्याः । तथाहि । यत्तैरभिहितं ज्ञानवादि नः परस्परविरुद्धार्थवादितया न यथार्थवादिनइति तद्भवत्वसर्वज्ञप्रणीतागमाभ्युपगम वादिनामयथार्थवादित्वं । नचाभ्युपगमवादाएव बाधायै प्रकल्प्यंते । सर्वज्ञप्रणीतागमाभ्यु पगमवादिनां तु न क्वचित्परस्परतोविरोधः सर्वज्ञत्वान्यथानुपपत्तेरिति । तथाहि । प्रक्षी णाऽशेषावरणतया रागद्वेषमोहानामनृतकारणानामभावान्न तद्वाक्यमयथार्थमित्येवं तत्प्रणीतागमवतां न विरोधवादित्वमिति । ननुच स्यादेतद्यदि सर्वज्ञः कश्चित्स्यान्नचासौ संभवतीत्युक्तं प्राक्।सत्यमुक्तमयुक्तं तूक्तं।तथाहि । यत्तावदुक्तं नचासौ विद्यमानोप्युपल भ्यते ऽर्वाग्दर्शिभिस्तदयुक्तं।यतोयद्यपि परचेतोवृत्तीनां दुरन्वयत्वात्सरागावीतरागाइव चेष्टं ते वीतरागाः सरागाइवेत्यतः प्रत्यक्षेणानुपलब्धिस्तथापि संभवानुमानस्य सद्भावात्बाध कप्रमाणाभावाच्च तदस्तित्वमनिवार्यं । संभवानुमानं त्विदं व्याकरणादिना शास्त्राभ्यासेन संक्रियमाणायाः प्रज्ञायाज्ञानातिशयोज्ञेयावगमं प्रत्युपलब्धस्तदत्र कश्चित्तथाभूताभ्या सवशात्सर्वज्ञोपि स्यादिति । नच तदभावसाधकं प्रमाणमस्ति । तथाहि । न तावदर्वा ग्दर्शिभिः प्रत्यक्षेण सर्वज्ञाभावः साधयितुं शक्यस्तस्यहि तज्ज्ञानज्ञेयविज्ञानशून्यत्वादशू न्यत्वाभ्युपगमेच सर्वज्ञत्वापत्तिरिति । नाप्यनुमानेन तदव्यभिचारिलिंगाभावादिति । ना प्यनुमानेन सर्वज्ञाभावः साध्यते । तस्य सादृश्यबलेन प्रवृत्तेः । नच सर्वज्ञाभावे साध्ये तादृग्विधं सादृश्यमस्ति येनार्गा सिध्यतीति । नाप्यर्थनिष्पत्त्या तस्याः प्रत्यक्षादिप्रमा णपूर्वकत्वेन प्रवृत्तेः । प्रत्यक्षादीनां च तत्साधकत्वेनाप्रवर्तमानात्तस्याप्यप्रवृत्तिः । ना

प्यागमेन तस्य सर्वज्ञसाधकत्वेनापि दर्शनान्नप्रमाणपंचकाभावरूपेणाभावेन सर्वज्ञाभावः सिध्यति । तथाहि । सर्वत्र सर्वदा न संभवति तद्ग्राहकप्रमाणमित्येतदर्वाग्दर्शिनोव क्तुं न युज्यते तेन हि देशकालविप्रकृष्टानां पुरुषाणां यद्विज्ञानं तस्य ग्रहीतुमशक्यत्वा त्तद्ग्रहणे वा तस्यैव सर्वज्ञत्वापत्तेः । नचार्वाग्दर्शिनां ज्ञानं निवर्तमानं सर्वज्ञाभावं भाव यति तस्याऽव्यापकत्वात् । नचाव्यापकव्यावृत्त्या पदार्थव्यावृत्तिर्युक्तेति । नच वस्त्वंतर विज्ञानरूपोभावः सर्वज्ञाभावसाधनायालं । वस्त्वंतरसर्वज्ञयोरेकज्ञानसंसर्गप्रतिबंधाभावा त् । तदेवं सर्वज्ञबाधकप्रमाणाभावात्संभवानुमानस्य च प्रतिपादितत्वादस्ति सर्वज्ञस्त त्प्रणीतागमाभ्युपगमाच्च मतभेददोषोदूरापास्तइति । तथाहि । तत्प्रणीतागमाभ्युपगम वादिनामेकवाक्यतया शरीरमात्रव्यापी संसार्यात्मास्ति तत्रैव तद्गुणोपलब्धेरिति । इतरे तराश्रयदोषश्चात्र नावतरत्येव । यतो ऽभ्यस्यमानायाः प्रज्ञायाज्ञानातिशयः स्वात्मन्यपि दृष्टोनच दृष्टेऽनुपपन्नं नामेति । यदप्यभिहितं । तद्यथा । नच ज्ञानं ज्ञेयस्य स्वरूपं परिच्छे त्तुमलं सर्वत्रार्वाग्भावेनेत्यवधानात्सर्वारातीयभागस्य च परमाणुरूपतयाऽतींद्रियत्वादित्ये तदपि वाङ्मात्रमेव । यतः सर्वज्ञज्ञानस्य देशकालस्वभावव्यवहितानामपि ग्रहणान्ना स्ति व्यवधानसंभवः । अर्वाग्दर्शिज्ञानस्याप्यवयव द्वारेणाऽवयविनि प्रवृत्तेर्नास्ति व्यवधा नं । न ह्यवयवी स्वावयवैर्व्यवधीयतइति युक्तिसंगतं । अपि चाज्ञानमेव श्रेयइत्यत्राऽ ज्ञानमिति किमयं पर्युदासआहोस्वित्प्रसज्यप्रतिषेधस्तत्र यदि ज्ञानादन्यदज्ञानमिति ततः पर्युदासवृत्त्या ज्ञानांतरमेव समाश्रितं स्यान्नाज्ञानवादइति । अथ ज्ञानं न भवतीत्यज्ञानं तुच्छोनीरूपोज्ञानाभावः सच सर्वसामर्थ्यरहितइति कथंश्रेयानिति । अपिच ज्ञानं श्रेय इति प्रसज्यप्रतिषेधेन ज्ञानं श्रेयोभवतीति क्रियाप्रतिषेधएव कृतः स्यादेतच्चाध्यक्षबाधि न । यतः सम्यग्ज्ञानादर्थं परिच्छिद्य प्रवर्तमानोर्थक्रियार्थी न विसंवाद्यतइति । किंचाऽ ज्ञानप्रमादवद्भिः पादेन शिरःस्पर्शनेपि स्वल्पदोषवत्तां परिज्ञायैवाज्ञानं श्रेयइत्यभ्युपगम्य ते । एवंच सति प्रत्यक्षएव स्यादभ्युपगमविरोधोनानुमानं प्रमाणमिति । तथा तदेवं सर्वथा तेऽज्ञानवादिनोऽकोविदाधर्मोपदेशं प्रत्यनिपुणाः संतोऽकोविदेभ्यएव स्वशिष्येभ्य आहुः कथितवंतः । छांदसत्वाच्चैकवचनं सूत्रेकृतमिति । शाक्याअपि प्रायशोऽज्ञानिका अविज्ञोपचितं कर्मबंधं न यांतीत्येवं यतस्तेऽभ्युपगमयंति । तथा येच बालमत्तसुप्तादयो ऽस्पष्टविज्ञानाअबंधकाइत्येवमभ्युपगमं कुर्वंति ते सर्वेप्यकोविदाइष्टव्याइति । तथाऽ ज्ञानपक्षसमाश्रयणाच्चाननुविचिंत्य भाषणान्मृषा ते सदा वदंति । अनुविचिंत्य भाषणं यतोज्ञाने सति भवति तत्पूर्वकत्वाच्च सत्यवादस्यातोज्ञानानभ्युपगमादननुविचिंत्य भाष णाभावस्तदभावाच्च तेषां मृषावादित्वमिति ॥ २ ॥

मेवापादयति ततश्च विवक्षितार्थावज्ञासनात्तेषामेवं वादिनामज्ञानावृतत्वमेवावशिष्यते नाभिप्रेतार्थावाप्तिरित्युक्तावैनयिकाः । सांप्रतमक्रियावादिदर्शनं निराचिकीर्षुः पश्चार्धमाह । लवं कर्म तस्मादपशंकितुमपसर्तुं शीलं येषां ते लवापशंकिनोलोकायतिकाः शाक्यादयश्च तेषामात्मैव नास्ति कुतस्तक्रिया तज्जनितोवा कर्मबंधइति । उपचारमात्रेण त्वस्तिबंधः । तद्यथा । बद्धामुक्ताश्च कथ्यंते, मुष्टिग्रंथिकपोतकाः ॥ नचान्ये द्रव्यतः संति, मुष्टिग्रंथिकपोतकाः ॥ १ ॥ तथा बौद्धानामयमभ्युपगमोयथा क्षणिकाः सर्वसंस्काराश्त्यस्थितानां च कुतः क्रियेत्यक्रियावादित्वं योपि स्कंधपंचकाभ्युपगमस्तेषां सोपि संवृतमात्रेण न परमार्थेन यतस्तेषामयमभ्युपगमस्तद्यथा विचार्यमाणाः पदार्थान कथंचिदप्यात्मानं विज्ञानेन समर्पयितुमलं तथा ह्यवयवी तत्वातत्त्वाभ्यां विचार्यमाणोनघटां प्रांचति । नाप्यवयवाः परमाणुपर्यवसानतयाऽतिसूक्ष्मत्वाज्ज्ञानगोचरतां प्रतिपद्यंते । विज्ञानमपि ज्ञेयाभावेनामूर्तस्य निराकारतया न स्वरूपं बिभर्त्ति । तथा चोक्तं । यथा यथार्थाश्चिंत्यंते, विविच्यंते तथातथा ॥ यद्येतत्स्वयमर्थेभ्यो,रोचते तत्र के वयमिति । प्रछन्नलोकायतिकाहि बौद्धास्तत्रानागतैः क्षणैः । चशब्दादतीतैश्च वर्तमानक्षणस्यासंगतेर्नक्रिया नापिच तज्जनितः कर्मबंधइति । तदेवमक्रियावादिनोनास्तिकवादिनः सर्वापलापितयालवापशंकिनः संतोनक्रियामाहुस्तथा अक्रियआत्मा येषां सर्वव्यापितया तेप्यक्रियावादिनः सांख्यास्तदेवं लोकायतिकाबौद्धसांख्याअनुपसंख्यया अपरिज्ञानेनेत्येतत्पूर्वोक्तमुदाहृतवंतस्तथैव तत्त्वाज्ञानेनैवोदाहृतवंतस्तद्यथास्माकमेवमभ्युपगमोर्थोऽवभासते युज्यमानकोभवतीति ॥ तदेवंश्लोकपूर्वार्द्धं काकाक्षिगोलकन्यायेनाक्रियावादिमतेप्यायोज्यमिति ॥४॥

सम्मिस्सनावं व गिरागहीए,से मुम्मुई होइ अणाणुवाई॥ इमं
डुपरकं इममेगपरकं, आहंसु बलायतणं च कम्मं ॥ ५ ॥ ते एव
मरकंति अबुज्झमाणा, विरूवरूवाणि अकिरियवाई ॥ जे मा
यइत्ता वहवे मणूसा, जमंति संसारमणोवदग्गं ॥ ६ ॥

अर्थ–( सेके० ) ते लोकायिक परवादी ( वगिरागहीए के० ) पोतानी वाणीयें करी ग्रह्या अर्थने विषे पण वली पोतानेज वचने निषेध करतां थकां ( सम्मिस्सनावंके० ) मिश्रनावनेज अंगीकार करेछे एटले पोते बोलता थकाज जेनी अस्ति कहे तेनीज वली नास्ति कहे तेमज जेनी नास्ति कहे तेनीज अस्ति कहेछे एरीते मिश्रनाव जाणवो केमके जे नास्तिक जीवादिक पदार्थनो अनाव कहेछे तेपण पोते पोताना शास्त्रे करी पोताना शिष्यने पोतानो मार्ग शीखावेछे के सर्व पदार्थ शून्यपणेछे तेवारे पोते तथा

शास्त्र अने शिष्य ए क्यांछे एम नविचारे तेमाटे ए असंबंध वचनना बोलनार माटे ए
ने मिश्रभाव सहित जाणवा तथा सांख्यदर्शनी एम कहेछे के आत्मा सर्वव्यापि छे तथा
अक्रियछे ए पण असमंजस बोले छे कारणके ए दर्शनवाला एम कहेछे के प्रकृतिने
वियोगें मोक्षछे जो एमछे तो आत्माने बंधमोक्षनो सद्भाव थाप्यो एम सिद्ध थयुं का
रणके प्रकृतिनो बंध हतो तेनो वियोग थवाथी मोक्ष थयो एथी स्पष्ट मालम पडेछे के
बंध मोक्षनो सद्भाव थयो अने बंध मोक्षना सद्भावने लीधे आत्मा सक्रियछे एवुं एम
भाज बोलवा उपरथी जणायछे तो पोतानाज वचनथी जेनुं स्थापन कर्युं तेने पोता
नाज वचनथी उत्थापेछे एरीते मिश्रभाव सर्व दर्शनीउनो जाणवो ए वर्णिका मात्र ल
ख्युंछे ( सेमुम्मुईहोइअणाणुवाई के० ) ते अक्रियावादी आदेदेइने जे परवादीछे ते जैन
मतानुसारीने अनेक हेतु दृष्टांते करी व्याकुल छतो तेनो उत्तर आपवाने असमर्थ
थाय मुम्मुई एटले मूक सरखो थाय अर्थात् कांइपण बोली शके नही ते दर्शनी केवो
जाणवो तोके अनानुवादी एटले जिनभाषित वचन सांभळीने पछी बोलवा असमर्थ
एवो छतो मौन भावनेज अंगीकार करे इत्यर्थः हवे यद्यपि ते दर्शनीउ जैनमतानुसारीने
सन्मुख बोली नशके तथापि कदाग्रहे पड्या थका पोताना पक्षनुं स्थापन करे तेनी रीत
कहेछे. ( इमंडुपर्कंइममेगपर्कंके०) एम अमारो एक पक्ष छे ते एम डुपक्ष जाणवो एट
ले ए पक्षना शुं वखाण करिए ए अमारा पक्षने बीजो कोइ उत्थापी नशके एवो ए पक्ष
उत्तमछे अहीं पूर्वापर विरोध वचनछे ते भाव पाछलना मिश्रभाव कहेवाथी कह्युंछे ए डु
पक्ष शब्दनो अर्थछे अथवा जे पोतानुं खोटुं होय तेने साचुं करे तेने उत्सूत्रभाषण कर
वाने लीधे डुपक्ष एटले आभवमां तथा परभवमां विडंबना थाय ए पण डुपक्ष शब्दनो
अर्थ छे तथा ते परवादि जेवारे पोची नशके तेवारे ( आहंसुछलायतणंचकम्मं के० ) छ
लायतन एटले छले करी बोले ते छल त्रण प्रकारनाछे एक वाक्छल, बीजो सामान्यछल
अने त्रीजो उपचारछल एवां छले करी बोलीने पोतानो एक पक्ष स्थापन करे तथा कर्म
एटले एक पक्षादि स्थापन करवाने अर्थे बोले ॥ ५ ॥ ( तेएवमक्खंति के० ) ते बौद्धादि
क परवादीउ सत्यमार्गने अजाणता मिथ्यात्व पडले आवरया थकां असंबंध वचन बोले
एवाते ( अबुज्झमाणा के० ) तत्वने अजाणता ( विरूवरूवाणिअकिरियवाई के० ) विरू
परूप नाना प्रकारना कुशास्त्रनी प्ररूपणा करे एवाते अक्रियावादि नास्तिकादिक मिथ्या
त्वी छे ( जेमायईत्ताबहवेमणूसा के० ) जेमनो मत ग्रहण करीने घणा मनुष्य मिथ्यात्वे
मोह्या थका ( भमंतिसंसारमणोवदग्गं के० ) अनंत संसार परिभ्रमण करेछे ॥ ६ ॥

---

॥ दीपिका–गिरा स्ववाचा स्वांगीकारेण गृहीते तस्मिन्नर्थे तस्यायेन्य गिरा प्रतिषेधं

कुर्वाणाः सन्मिश्रीजावमस्तित्वनास्तित्वाच्युपगमं ते नास्तिकादयः कुर्वंति । वाशब्दात्प्रति षेधे वाच्येऽस्तित्वमेव कथयंति । तथाहि । नास्तिकास्तावत्स्वशिष्येच्योजीवाद्यजावप्रति पादकं शास्त्रं वदंतोनांतरीयकतयाऽत्मानं कर्तारं करणं च शास्त्रं कर्मतापन्नांश्च शिष्यान वश्यमंगीकुर्युः । सर्वशून्यत्वे त्वस्य त्रितयस्याजावान्मिश्रीजावोव्यत्ययोवा स्यादेव । त था बौद्धादिः कश्चित्स्याद्वादिना सम्यग्हेतुदृष्टांतैर्व्याकुलीकृतः सन् ( मुम्मुईहोइत्ति ) ग ऊदजापित्वेनाव्यक्तजाषी स्यात् । अथवा मूकादपि मूकोमूकमूकः स्यात् । प्राकृतशैल्या बांदसत्वाच्चैवं प्रयोगः । स्याद्वादिनोक्तं साधनमनुवदितुं शीलमस्येत्यनुवादी तन्निषेधाद ननुवादी व्याकुलितमनाअनुवादमपि कर्तुं न शक्नोतीति । स्वमतमाश्रित्याह । ( इमंड पक्कमित्यादि ) इदमस्मदंगीकृतं मतमेकः पक्षोस्येत्येकपक्षं निष्प्रतिपक्षमित्यर्थः । इदं च परमतं द्वौ पक्षौ यस्य तद्विपक्षं सप्रतिपक्षमित्यर्थः । तथा स्याद्वादिसाधनोक्तौ बलायतनं बलं नवकंबलोदेवदत्तइत्यादिकमाहुरुक्तवंतः । चशब्दादस्य च दूषणाजा सादिकं कर्मच एकपक्षद्विपक्षादिकं । अथवा षट् आयतनानि उपादानकारणानि आ श्रवद्वाराणि श्रोत्रादीनींद्रियाणि यस्य कर्मणस्तत् षडायतनं कर्मेत्येवमाहुः ॥ ५ ॥ तेऽक्रि यावादिनश्चार्वाकबौद्धाद्याएवमाख्यांति परमार्थमबुध्यमानाअजानंतोविरूपरूपाणि नाना प्रकाराणि शास्त्राणि रूपयंति । तद्यथाहि दानेन महाजोगोदेहिनां सुरगतिश्च शीलेन जा वनयाच मुक्तिस्तपसा सर्वाणि सिध्यंति । तथा पृथिव्यापस्तेजोवायुरिति चत्वारि जूतान्येव संति न कश्चिदात्मा । तथा बौद्धाः सर्वं क्षणिकं निरात्मकमित्यादीनि शास्त्राणि वदंति ते च मूढाअज्ञामनुष्यायदर्शनमादाय गृहीत्वाऽनवदग्रमनंतं संसारं ज्रमंति ॥ ६ ॥

---

॥ टीका–सांप्रतमक्रियावादिनामज्ञानविजृंजितं दर्शयितुमाह । ( सम्मिस्समित्यादि ) स्वकीयया गिरा वाचा स्वाच्युपगमेनैव गृहीते तस्मिन्नर्थे नांतरीयकतया वा समागते स ति तस्याऽयातस्यार्थस्य गिरा प्रतिषेधं कुर्वाणाः सन्मिश्रीजावमस्तित्वं नास्तित्वापगमं ते लोकायतिकादयः कुर्वंति । चशब्दात्प्रतिषेधे प्रतिपाद्येऽस्तित्वमेव प्रतिपादयंति । तथा हि । लोकायतिकास्तावत्स्वशिष्येच्योजीवाद्यजावप्रतिपादकं शास्त्रं प्रतिपादयंतोनांतरी यकतयात्मानं कर्तारं करणं च शास्त्रं कर्मतापन्नांश्च शिष्यानवश्यमच्युपगच्छेयुः । सर्वशू न्यत्वे त्वस्य त्रितयस्याजावान्मिश्रीजावोव्यत्ययोवा । बौद्धाअपि मिश्रीजावमेवमुपगताः । तद्यथा । गंता च नास्ति कश्चिजतयः षड् बौद्धशासने प्रोक्ताः ॥ गम्यतइति च गतिः स्या न्नुतिः कथं शोजना बौद्धी ॥ १ ॥ तथा कर्म च नास्ति फलं चास्तीत्यसति चात्मनि का रके कथं षड्गतयोज्ञानसंतानस्यापि संतानव्यतिरेकेण संवृतिसत्वात् क्षणस्य चास्थितत्वेन क्रियाजावान्न नानागतिसंजवः । सर्वाण्यपि कर्माण्यबंधनानि प्ररूपयंति स्वागमे । तथा पंच

जातकशतानि च बुद्धस्योपदिशंति । तथा । मातापितरौ हत्वा बुद्धशरीरे च रुधिरमुत्पा द्य ॥ अर्हद्वधं च कृत्वा स्तूपं भित्त्वा च पंचैते ॥ १ ॥ निरंतरमावीचिनरकं यांत्येवमादिक स्यागमस्य सर्वशून्यत्वे प्रणयनमयुक्तिसंगतं स्यात् । तथा । जातिजरामरणरोगशोकोत्तम मध्यमाधमत्वानि च नस्युः । एपएव च नानाविधकर्मविपाकोजीवास्तित्वं कर्तृत्वं कर्म वत्त्वं चावेदयति । तथा । गंधर्वनगरतुल्या, माया स्वप्नोपपातधनसदृशा ॥ मृगतृष्णानीहारां बुचंद्रिकालातचक्रसमाइति नाषणाच्च स्पष्टमेव मिश्रीनावोपगमनं बौद्धानामिति । यदि वा नानाविधकर्मविपाकाभ्युपगमात्तेषां व्यत्ययएवेति । तथाचोक्तं । यदि शून्यस्तव पक्षो, मत्पक्षनिवारकः कथं नवति ॥ अथ मन्यसे न शून्यस्तथापि मत्पक्षएवासावित्यादि । त देवं बौद्धाः पूर्वोक्तया नीत्या मिश्रीनावमुपगतानास्तित्वं प्रतिपादयंतोऽस्तित्वमेव प्रति पादयंति । तथा सांख्याअपि सर्वव्यापितया अक्रियमात्मानमभ्युपगम्य प्रकृतिवियोगा न्मोक्षसद्भावं प्रतिपादयंतस्तेप्यात्मनोबंधं मोक्षं च स्ववाचा प्रतिपादयंति । ततश्च बंध मोक्षसद्भावे सति स्वकीयया गिरा सक्रियत्वे गृहीते सत्यात्मनः सन्मिश्रीनावं व्रजंति य तोन क्रियामंतरेण बंधमोक्षौ घटेते । वाशब्दादक्रियत्वे प्रतिपाद्ये व्यत्ययएव सक्रियत्वं तेषां स्ववाचा प्रतिपाद्यते । तदेवं लोकायतिकाः सर्वे नावाभ्युपगमेन क्रियानावं प्रतिपा दयंति । बौद्धाश्च क्षणिकत्वात्सर्वशून्यत्वाच्चाक्रियामेवाभ्युपगमयंतः स्वकीयागमप्रणयनेन चोदिताः संतः सन्मिश्रीनावं स्ववाचैव प्रतिपाद्यंते । तथा सांख्याश्चाक्रियमात्मानमभ्युप गच्छंतोबंधमोक्षसद्भावं च स्वाभ्युपगमेनैव सन्मिश्रीनावं व्रजंति । व्यत्ययं चैतत्प्रतिपादि तं । यदिवा बौद्धादिः कश्चित्स्याद्वादिनासम्यग्घेतुदृष्टांतैर्व्याकुलीक्रियमाणः सन् सम्यगु त्तरं दातुमसमर्थोयत्किंचन नापितया (मुम्मुईहोइत्ति) गजदनापित्वेनाऽव्यक्तनापी नवति । यदिवा प्राकृतशैल्या ठांदसत्वाच्चायमर्थोद्रष्टव्यः । तद्यथा । मूकादपि मूकोमूकमूकोन वति । एतदेव दर्शयति । स्याद्वादिनोक्तं साधनमनुवदितुं शीलमस्येत्यनुवादी तत्प्रतिषे धादननुवादी सद्धेतुनिर्व्याकुलितमनामौनमेव प्रतिपाद्यतइति नावः । अनुनाप्य च प्रति पक्षसाधनं तथाऽदूपयित्वा च स्वपक्षं प्रतिपादयंति । तद्यथा । इदमस्मदभ्युपगतं दर्शन मेकः पक्षोस्येति एकपक्षमप्रतिपक्षतयैकांतिकमविरुद्धार्थानिधायितया निष्प्रतिबाधं पूर्वा पराविरुद्धमित्यर्थः । इदं चैवंनूतमपि सदित्याह । द्वैपक्षावस्येति द्विपक्षं सप्रतिपक्षमनै कांतिकं पूर्वापरविरुद्धार्थानिधायितयाऽविरोधिवचनमित्यर्थः । यथाच विरोधिवचनत्वं तेषां तथा प्राग्दर्शितमेव। यदि त्वेतदस्मदीयं दर्शनं द्वैपक्षावस्येति द्विपक्षं कर्मबंधनिर्ज रणं प्रतिपक्षद्वयसमाश्रयणात् । तत्समाश्रयणं चेहामुत्र वेदना चौरपारदारिकादीना मिव । तेहि करचरणनासिकादिकामिहैव पुष्पकल्पां स्वकर्मणोविडंबनामनुनवंत्यमुत्र च नरकादौ तत्फलनूतां वेदनां समनुनवंतीति । एवमन्यदपि कर्मोनयवेद्यमभ्युपगम्य

ते । तच्चेदं । प्राणी प्राणिज्ञानमित्यादिपूर्ववत् । तथेदमेकः पक्षोस्येत्येकपक्षं इहैव जन्मनि तस्य वेद्यत्वात् । तच्चेदमविज्ञोपचितं परिज्ञोपचितमीर्यापथं स्वप्नादिकं चेति । तदेवं स्याद्वादिनाभियुक्ताः स्वदर्शनमेवमनंतरोक्तया नीत्या प्रतिपादयंति । तथा स्याद्वादिसाधनोक्तौ लवायतनं लवं नवकंबलोदेवदत्तइत्यादिकमाहुरुक्तवंतः । च शब्दादन्यच्च दूषणाभामादिकं । तथा कर्मच एकपक्षद्विपक्षादिकं प्रतिपादितवंतइति । यदिवा षडायतनानि उपादानकारणानि आश्रवद्वाराणि श्रोत्रेंद्रियादीनि यस्य कर्मणस्तत्षडायतनं कर्मेत्येवमाहुरिति ॥५॥ सांप्रतमेव तद्दूषणायाह । ( तएवमखंतीत्यादि ) ते चार्वाकबौद्धादयोऽक्रियावादिनएवमाचक्षते । सद्भावमबुध्यमानामिथ्यामलपटलावृतात्मानः परमात्मानं च व्युद्ग्राहयंतोविरूपरूपाणि नानाप्रकाराणि शास्त्राणि प्ररूपयंति । तद्यथा । दानेन महाभोगोदेहिनां सुरगतिश्च शीलेन ॥ भावनया च विमुक्तिस्तपसा सर्वाणि सिध्यंति ॥ १ ॥ तथा पृथिव्यापस्तेजोवायुरित्येतान्येव चत्वारि भूतानि विद्यंते नापरः कश्चित्सुखदुःखभागात्मा विद्यते । यदि चैतान्यप्यविचारितरमणीयानि न परमार्थतः संतीति स्वप्नेंद्रजालमरुमरीचिकानिचयद्विचंद्रादिप्रतिभासरूपत्वात्सर्वस्येति । तथा सर्वं क्षणिकं निरात्मकं मुक्तिस्तु शून्यता दृष्टेस्तदर्थाः शेषभावनाइत्यादीनि नानाविधानि शास्त्राणि व्युद्ग्राहयंत्यक्रियात्मानोऽक्रियावादिनइति । तेच परमार्थमबुध्यमानायद्दर्शनमादाय गृहीत्वा बहवोमनुष्याः संसारमनवदग्रमपर्यवसानमरहट्टघटीन्यायेन भ्रमंति पर्यटंति । तथाहि । लोकायतिकानां सर्वशून्यत्वे प्रतिपाद्ये न प्रमाणमस्ति । तथाचोक्तं । तत्त्वान्युपप्लुतानीति, युक्त्यभावेन सिध्यति ॥ नास्ति चेत्सैव नस्तत्त्वं, तत्सिद्धौ सर्वमस्तु सत् ॥ १ ॥ नच तत्प्रत्यक्षमेवैकं प्रमाणं । अतीतानागतभावतया पितृनिबंधनस्यापि व्यवहारस्यासिद्धेस्ततः सर्वसंव्यवहारोच्छेदः स्यादिति । बौद्धानामप्यत्यंतक्षणिकत्वेन वस्तुत्वाभावः प्रसक्तति । तथाहि । यदेवार्थक्रियाकारि तदेव परमार्थतः सत् । नच क्षणः क्रमेणार्थक्रियां करोति । क्षणिकत्वहानेर्नापि यौगपद्येन तत्कार्याणामेकस्मिन्नेव क्षणे सर्वकार्यापत्तेर्नचैतद्दृष्टमिष्टं वा । नच ज्ञानाधारमात्मानं गुणिनमंतरेण गुणभूतस्य संकलनाप्रत्ययस्य सद्भावइत्येतच्च प्रागुक्तप्रायं । यच्चोक्तं दानेनमहाभोगो,इत्यादि तदार्हतैरपि कथंचिदिष्यतएवेति नचाभ्युपगमाएव बाधायैप्रकल्प्यंतइति ॥ ६ ॥

णाइच्चो उएइ ण अत्थमेति, ण चंदिमा वड्ढति हीयती वा ॥ स
लिला ण संदंति ण वयंति वाया, वंझो णियतो कसिणे हु लोए
॥७॥ जहाहि अंधे सह जोतिणावि, रूवाइ णो पस्सति हीणणे
त्ते॥ संतंपि ते एवमकिरियवाई, किरियं ण पस्संति निरुद्धपन्ना ॥ ८॥

अर्थ–हवे सर्व शून्यवादिनो नेद कहेछे. ते शून्यवादी एम कहेछे के समस्त लोक प्रसिद्ध जगत्प्रदीप समान एवो ( णाइच्चो के० ) सूर्य नथी वली ते सूर्य (णउएइके०) उगतो नथी तथा ( णअच्छमेति के० ) अस्तपणं थातो नथी ए जे देदीप्यमान सूर्य मंमल देखायछे ते मात्र चित्तनो भ्रम जाणवो मृगतृष्णा समान ए सर्वे भ्रमछे तथा ( णचंदिमावड्ढति हीयती के० ) चंद्रमानी कला वृद्धि पामती नथी तेम हीन पण थती नथी एटले शुक्ल पक्षादिने विषे जे वृद्धि प्रमुख चंद्रमानी देखायछे ते सर्व भ्रम छे ( वा के० ) अथवा तथा ( सलिला के० ) नदीना पाणी ते ( णसंदंति के० ) नथी श्रवता एटले नदीन्हदादिक पण नथी तथा ( णवयंतिवाया के० ) वायरो पण वातो नथी ( वंजोणियतो कसिणे हुलोए के० ) तो हु इति निश्चे ए लोक संपूर्ण वंध्यसमान अर्थ शून्य छे अर्थात् ए जगतमां कांइज नथी जे कांइ देखायछे ते सर्व स्वप्नेंद्रजाल समान जाणवुं ॥ ७ ॥ ( जहाहि अंधेसह जोतिणावि के० ) जेम जाति अंध एटले नेत्रहीन पुरुष दीपे करी सहित छतां पण ( हीणणेत्ते के० ) हीननेत्रपणाने लीधे ( रूवाइ के० ) रूपादिक जे घटपटादिक विद्यमान पदार्थोछे तेने ( णोपस्सति के० ) देखी शके नही ( संतंपिते एवमकिरियवाई के० ) तेम ते अक्रियावादिउंमां छतिक्रिया विद्यमान छता पण ते ( किरियं के० ) क्रियाने ( निरुद्धपन्ना के० ) जेमनी प्रज्ञा एटले बुद्धिनिरोध थइछे अर्थात् बुद्धिहीन एवाते अक्रियावादी लोको पोतामां क्रिया विद्यमान छता पण तेने ( णपस्संतिके०) मिथ्यात्वादिक दोषेकरी नथी देखता. ॥ ८ ॥

---

॥ दीपिका–आदित्योनोजच्छति नास्तमेति । कोर्थः । आदित्यएव तावन्न विद्यते कुतस्तस्योजमनमस्तगमनं च । यच्चेदं ज्वलत्तेजोमंडलं दृश्यते तद्भ्रांतमतीनां द्विचंद्रप्रतिनासमृगतृष्णातुल्यमिति । तथा न चंद्रमावर्धते हीयते वा सलिलानि पर्वतनिर्झरेभ्यो न स्यंदंते न स्रवंति वाता न वांति । किंबहुना कृत्स्नः संपूर्णोप्ययं लोकोवंध्योर्थशून्योनियतोनिश्चितोभावरूपइत्यर्थः । सर्वमिदं यडुपलभ्यते तन्मायास्वप्नेंद्रजालप्रायमिति ॥ ७ ॥ यथाह्यंधोजात्यंधः पश्चाद्वा हीननेत्रोगतचक्षुर्घटपटादिरूपाणि ज्योतिषा प्रदीपादिनाऽपि सद्वर्तमानोन पश्यति । एवंतेप्यक्रियावादिनः सदपि घटपटादिकं वस्तु न क्रियां चास्तित्वादिकां परिस्पंदादिकां वा न पश्यंति । यतोनिरुद्धाआच्छादिता प्रज्ञा ज्ञानं येषांते निरुद्धप्रज्ञाः अतएव ते न जानंतीति ॥ ८ ॥

---

॥ टीका–पुनरपि शून्यमताविर्नावनायाह । ( णाइच्चो उएईत्यादि ) सर्वशून्यवादिनोह्यक्रियावादिनः सर्वाप्यक्षामादित्योजमनादिकामेव क्रियां तावन्निरुंधंतीति दर्शयति । आदित्योहि सर्वजनप्रतीतोजगत्प्रदीपकल्पोदिवसादिकालविनागकालकारी सएव तावन्न

विद्यते कुतस्तस्योज्जमनमस्तगमनं वा । यच्च जाज्वल्यमानं तेजोमंडलं दृश्यते तद्भ्रांतमतीनां द्विचंद्रादिप्रतिभासं मृगतृष्णिकाकल्पं वर्तते । तथा न चंद्रमावर्धते शुक्लपक्षे नाप्युत्तरपक्षे प्रतिदिनमपहीयते नसंधानसलिलानि उदकानि स्यंदंते पर्वतनिर्झरेन्न्यो न स्रवंति तथा वाताः सततगतयोन वांति । किंबहुनोक्तेन कृत्स्नोप्ययं लोकोवंध्यो ऽर्थशून्योनियतोनिश्चितोनावरूपइति यावत् । सर्वमिदं यदुपलन्यते तन्मायास्वप्नेंद्रजालमिति ॥ ७ ॥ एतत्परिहर्तुकामआह ( जहाहि अंधेइत्यादि ) यथा ह्यंधोजात्यंधः पश्चाद्वा हीननेत्रोऽपगतचक्षुः रूपाणि घटपटादीनि ज्योतिषापि प्रदीपादिनापि सहवर्तमानोन पश्यति नोपलन्नते एवं तेप्यक्रियावादिनः सदपि घटपटादिकं वस्तु तत्क्रियां चाऽस्तित्वादिकां परिस्पंदादिकां वा क्रियां न पश्यंति । किमिति यतोनिरुद्धा आछादिता ज्ञानावरणादिना कर्मणा प्रज्ञा ज्ञानं येषां ते तथा । तथाहि । आगोपालांगनादिप्रतीतः समस्तांधकारक्षयकारी कमलाकरोद्घाटनपटीयानादित्योज्जमः प्रत्यहं नवन्नुपलक्ष्यते । तत्क्रियाच देशाद्देशांतरावाप्त्याऽन्यत्र देवदत्तादौ प्रतीताऽनुमीयते । चंद्रमाश्च प्रत्यहं क्षीयमाणः समस्तक्षयं यावत्पुनः कलाभिवृद्ध्या प्रवर्धमानः संपूर्णावस्थायां यावदध्यक्षेणैवोपलक्ष्यते । तथा सरितश्च प्रावृषि जलकल्लोलाविलाः स्यंदंत्योदृश्यंते वायवश्च वातास्तृक्षनंगकंपादिभिरनुमीयंते । यच्चोक्तं नवता सर्वमिदं मायास्वप्नेंद्रजालकल्पमिति तदसत् । यतः सर्वाभावे कस्यचिद् मायारूपस्य सत्यस्याभावान्मायायाएवाऽनावः स्यात् । यश्च मायां प्रतिपादयेत् यस्य च प्रतिपाद्यते सर्वशून्यत्वे तयोरेवाभावात्कुतस्तद्व्यवस्थितिरिति । तथा स्वप्नोपि जाग्रदवस्थायां सत्यां व्यवस्थाप्यते तस्याश्चनावे तस्याप्यनावः स्यात्ततः स्वप्नमन्युपगछता नवता तन्नांतरीयकतया जाग्रदवस्थावश्यमन्युपगता नवति तदन्युपगमेच सर्वशून्यत्वहानिः । नच स्वप्नोप्यनावरूपएव स्वप्नेप्यनुनूतादेः सद्भावात् । तथा चोक्तं । अणुहूयदिठचिंतिय, सुयपयइविपारदेव पाणूया ॥ सुमिणस्स निमित्ताइं पुस्सं पावंच णाजावो ॥ १ ॥ इंद्रजालव्यवस्थाप्यपरसत्यत्वे सति नवति तदभावेतु केन कस्य चेंद्रजालं व्यवस्थाप्येत । द्विचंद्रप्रतिनासोपि रात्रौ सत्यामेकस्मिंश्च चंद्रमस्युपलंनकसद्भावे च घटते न सर्वशून्यत्वे । नचानावः कस्यचिदप्यत्यंततुच्छरूपोस्ति । शशविषाणकूर्मरोमगगनारविंदादीनामत्यंताभावप्रसिद्धानां समासप्रतिपाद्यस्यैवार्थस्याभावोन प्रत्येकपदवाच्यार्थस्येति । तथाहि । शशोप्यस्ति विषाणमप्यस्ति किंत्वत्र शशमस्तकसमवायिविषाणं नास्तीत्येतत्प्रतिपाद्यते । तदेवं संबंधमात्रमत्र निषिध्यते नात्यंतिकोवस्त्वनावइति । एवमन्यत्रापि द्रष्टव्यमिति । तदेवं विद्यमानायामप्यस्तीत्यादिकायां क्रियायां निरुद्धप्रज्ञास्तीर्थिकाअक्रियावादमाश्रिताइति । अनिरुद्धप्रज्ञास्तु यथावस्थितार्थवेदिनोनवंति । तथाहि । अवधिमनःपर्यायकेवलज्ञानिनस्त्रैलोक्योदरविवरव

तिनः पदार्थान् करतलामलकन्यायेन पश्यंति । समस्तश्रुतज्ञानिनोपि आगमबलेना तीतानागतानर्थान् विदंति । येऽप्यन्येऽष्टांगनिमित्तपारगास्तेपि निमित्तबलेन जीवादि पदार्थपरिछेदं विदधति ॥ ८ ॥

संवह्नरं सुविणं लरकणं च, निमित्तदेहं च उपाइयं च ॥ अठंग मेयं वहवे अहित्ता, लोगंसि जाणंति अणागताइं ॥ ए ॥ केई निमित्ता तहिया भवंति, केसिं च तं विप्पडिएति णाणं ॥ तेविज्ज भावं अणहिज्जमाणा, आहंसु विज्ञापरिमोरकमेव ॥ पाठांतरे ॥ ( जाणासु लोगंसि वयंति मंदा ॥ १० ॥

अर्थ–( संवह्नरं के० ) ज्योतिषग्रंथ ( सुविणं के० ) स्वप्न शुभाशुभना शास्त्र ( लरकणं के० ) श्रीवत्सादिक लक्षण सामुद्रिक शास्त्र ते च शब्द थकी अभ्यंतर भेदरूप पण जाणवा तथा ( निमित्त के० ) निमित्त प्रसिद्ध शकुनादिक शास्त्र जाणवा ( देहं के० ) देहना लक्षण मत्स तिलकादिक जाणवा ( उपाइयंच के० ) उत्पात ते भूमिकंपादिकनी सूचनाकरनार शास्त्र एम ( अठंगमेयंवहवेअहित्ता के० ) अष्टांगनिमित्तनुं घणा लोक पठन करीने अर्थात् अष्टांगनिमित्त भणीने ( लोगंसिजाणंतिअणागताइं के० ) आलो कने विषे अतीत अनागतादिक वस्तुने जाणेछे. तेटलुं पण ए शून्यवादी जाणता न थी जेम कोइ संनिपाती यथातथ्य वस्तुने उलखे नही तेना दृष्टांते ए शून्यवादी पण जाणीलेवा ॥ ए ॥ तेमां वली ( केईनिमित्तातहियाभवंति के० ) कोइएक निमित्तियायें पोताना मुख थकी निमित्त प्रकाश्यो थको तेनो निमित्त जेम कहे तेमज थायछे एट ले साचो थायछे वली ( केसिंचतंविप्पडिएतिणाणं के० ) कोईकनो निमित्तादि ज्ञान विपर्यासपणाने पामेछे एटले विघटेछे तथा ( तेविज्जभावंअणहिज्जमाणा के० ) ते ए वी वियाना भावनो अभ्यास कस्या विना एटले एवी वियाने अण भण्या थका कहेछे के ( आहंसुविज्ञापरिमोरकमेव के० ) अथवा पाठांतरे ( जाणासुलोगंसिवयंतिमंदाके० ) कोइएक मंद एटले मूर्ख एवा अक्रियावादी प्रमुख एमज कहेछेके अमेज आलोक मांहे अशेष एटले समस्त भावने जाणीयें छैयें ॥ १० ॥

॥ दीपिका–सांवत्सरं ज्योतिषं । स्वप्नप्रतिपादकोग्रंथः स्वप्नः । लक्षणं श्रीवत्सादिकं । निमित्तं शकुनादिकं । देहे भवं दैहं मषतिलकादि । उत्पाते भवमौत्पातिकमुल्कापातदिग्दा हादिकमित्यादि । अष्टांगनिमित्तं । यथा भौमं १ उत्पातं २ स्वप्नं ३ आंतरिक्षं ४ आंगं ५ स्वरं ६ लक्षणं ७ व्यंजनमित्येवं नवमपूर्वतृतीयाचारवस्तुनिर्गतं सुखदुःखादिसूचकं नि

मित्तमधीत्य लोकेऽतीतानागतानि वस्तूनि जानंति। नच शून्यादिष्वेतद्घटते तस्मादप्रमाणकमेव तैरुच्यते ॥ ए ॥ पराभिप्रायमाह। ( केईनिमित्तेत्यादि ) छांदसत्वाल्लिंगव्यत्ययः। कानिचिन्निमित्तानि तथ्यानि सत्यानि भवंति । केषांचित्तु निमित्तानां निमित्तवेदिनां वा तन्निमित्तज्ञानं विपर्यासं व्यत्ययमेति। आर्हतानामपि निमित्तव्यभिचारोदृश्यते किंपुनस्तीर्थिकानां। तदेवं निमित्ते व्यभिचारमुपलभ्यतेऽक्रियावादिनोविद्यासद्भावं विद्यामनधीयानाः ( आहंसुविज्ञापलिमोक्खमेव ) विद्यायाः श्रुतस्य व्यभिचारेण तस्य परिमोक्षं परित्यागमाहुः। अथवा क्रियायाअभावाद्विद्यया ज्ञानेनैव मोक्षं कर्मक्षयरूपमाहुरिति। क्वचिच्चरमपादस्यैवं पाठः। ( जाणासुलोगंसिवयंतिमंदत्ति ) विद्यामनधीत्यैव स्वयमेव लोके भावान् वयं जानीमइति मंदाजडावदंति। मंदत्वं कथमिति चेदुच्यते । सम्यग्विलोकितस्य निमित्तस्य नास्ति व्यभिचारः। यत्रापि दृश्यते व्यभिचारः सोप्यज्ञाततादृगन्यनिमित्तसद्भावात्। यथा किल बुद्धः स्वशिष्यानाकार्योक्तवान्। द्वादशवार्षिकमत्र दुर्भिक्षं भावि। यूयं देशांतरं गच्छत। तेच गच्छंतस्तेनैव निषिद्धाः। मागच्छत यूयं इहाद्यैव पुण्यवान् महासत्त्वः संजातस्तत्प्रभावात्सुभिक्षं भविष्यतीति । तदेवमन्यनिमित्तसद्भावान्नकथंचिन्निमित्तव्यभिचारइति ॥ १० ॥

---

॥ टीका—तदाह । ( संवत्सरमित्यादि ) सांवत्सरमिति ज्योतिषं । स्वप्नप्रतिपादको ग्रंथः स्वप्नस्तमधीत्य। लक्षणं श्रीवत्सादिकं। च शब्दादांतरबाह्यभेदभिन्नं निमित्तं वाक्प्रशस्तशकुनादिकं। देहे भवं देहं मषकतिलकादि। उत्पाते भवमौत्पातिकमुल्कापातदिग्दाहनिर्घातभूमिकंपादिकं। तथाष्टांगंच निमित्तमधीत्य। तद्यथा। भौममुत्पातमांतरिक्षमांगं स्वरं लक्षणं व्यंजनमित्येवं रूपं नवमपूर्वतृतीयाचारवस्तुविनिर्गतं सुखदुःखजीवितमरणलाभाऽलाभादिसंसूचकं निमित्तमधीत्य लोकेऽस्मिन्नतीतानि वस्तूनि अनागतानिच जानंति परिछिंदंति। नच शून्यादिवादेष्वेतद् घटते तस्मादप्रमाणकमेव तैरभिधीयतइति। एवंव्याख्याते सति आह परः। ननु व्यभिचार्यपि श्रुतमुपलभ्यते। तथाहि। चतुर्दशपूर्वविदामपि षट्स्थानपतितत्वमागमउद्घुष्यते किंपुनरष्टांगनिमित्तशास्त्रविदां। अत्र चांगवर्जितानां निमित्तशास्त्राणामानुपुर्वेन छन्दसा त्रयोदशशतानि सूत्रं तावंत्येव सहस्राणि वृत्तिस्ता वत्प्रमाणलक्षणा परिभाषेति। अंगस्य त्रयोदशसहस्राणि सूत्रं तत्परिमाणलक्षणा वृत्तिरपरिमितं वार्तिकमिति ॥ ए ॥ तदेवमष्टांगनिमित्तवेदिनामपि परस्परतः षट्स्थानपतितत्वेन व्यभिचारित्वमतइदमाह। ( केइनिमित्ताइत्यादि ) छांदसत्वात्प्राकृतशैल्या वा लिंगव्यत्ययः। कानिचिन्निमित्तानि तथ्यानि सत्यानि भवंति। केषांचित्तु निमित्तानां निमित्तवेदिनां वा बुद्धिवैकल्यात्तथाविधक्षयोपशमाभावेन तन्निमित्तज्ञानं वि

पर्यासं व्यत्ययमेति । आर्हतानामपि निमित्तव्यभिचारः समुपलभ्यते किंपुनस्तीर्थिकानां । तदेवं निमित्तशास्त्रस्य व्यभिचारमुपलभ्यते ऽक्रियावादिनोविद्यासद्भावमनधीयानाः संतोनिमित्तं तथा चान्यथा च भवतीति मत्वा ते ( आहंसुविक्काचरणंपमोरकमेव ) विद्यायाः श्रुतस्य व्यभिचारेण तस्य परिमोक्षं परित्यागमाहुरुक्तवंतः । यदिवा क्रियायाश्च भावाद्विद्यया ज्ञानेनैव मोक्षं सर्वकर्मच्युतिलक्षणमाहुरिति ! कचिच्चरमपादस्यैवं पाठः ( जाणासुलोगंसिवयंतिमंदत्ति ) विद्यामनधीत्यैव स्वयमेव लोकमस्मिन् वा लोके भावान् स्वयं जानीमएवं मंदाजडावदंति । नच निमित्तस्य तथ्यता । तथाहि । कस्यचित्क्वचित्क्षुतेऽपि गच्छतः कार्यसिद्धिदर्शनाच्छकुनसद्भावेपि कार्यविघातदर्शनादतोनिमित्तबलेनादेशविधायिनां मृषावादएव केवलमिति । नैतदस्ति । नहि सम्यगधीतस्य श्रुतस्यार्थे विसंवादोऽस्ति । यदपि षट्स्थानपतितत्वमुद्घोष्यते तदपि पुरुषाश्रितक्षयोपशमवशेन । नच प्रमाणाभासव्यभिचारे सम्यक्प्रमाणव्यभिचाराशंकां कर्तुं युज्यते । तथाहि । मरुमरीचिकानिचये जलग्राहि प्रत्यक्षं व्यभिचरतीति कृत्वा किंसत्यजलग्राहिणोपि प्रत्यक्षस्य व्यभिचारोयुक्तिसंगतोभवति । नहि मशकवर्तिरग्निसिद्धावुपदिश्यमाना व्यभिचारिणीति सत्यधूमस्यापि व्यभिचारोनहि सुविवेचितकार्यकारणं व्यभिचरतीति । ततश्च प्रमातुरयमपराधोन प्रमाणस्यैव सुविवेचितं निमित्तं श्रुतमपि न व्यभिचरतीति । यश्च क्षुतेपि कार्यसिद्धिदर्शनेन व्यभिचारः शंक्यते सोऽनुपपन्नः । तथाहि । कार्याकूतात् क्षुतेपि गच्छतः कार्यसिद्धिः सापांतरालेंतरशोभननिमित्तबलात्संजातेत्येवमवगंतव्यं । शोभननिमित्तप्रस्थितस्यापीतरनिमित्तबलात्कार्यव्याघातइति । तथाच श्रुतिः । किल बुद्धः सशिष्यानाहूयोक्तवान् यथा द्वादशवार्षिकमत्र दुर्भिक्षं भविष्यतीत्यतोदेशांतराणि गच्छत यूयं ते तद्वचनाद्गच्छंतस्तेनैव प्रतिषिद्धायथा मागच्छत यूयमिहाद्यैव पुण्यवान् महासत्वः संजातस्तत्प्रभावात्सुभिक्षं भविष्यति । तदेवमंतरा परनिमित्तसद्भावात्तद्व्यभिचारशंकेति स्थितं ॥ १० ॥

ते एवमरकंति समिच्च लोगं, तहा तहा समणा माहणा य ॥
सयं कडं णन्नकडं च डुरकं, आहंसुविज्ञा चरणं पमोरकं ॥ ११ ॥
ते चरकुलोगंसिह णायगा उ, मग्गाणुसासंति हितं पयाणं ॥ त
हा तहा सासयमाहु लोए, जंसी पया माणव संपगाढा ॥ १२ ॥

अर्थ—हवे क्रियावादीनो मत दूषवेछे. ( तेएवमरकंतिसमिच्चलोगं के० ) जे.एकली मात्र क्रिया करवा थकीज मोक्षनी वांछना करेछे तेक्रियावादि एवीरीते आख्याति एट

ले कहेछे ते पोताने अभिप्रायें लोकने जाणीने अमे यथावस्थित तत्वना जाणछैए ए वीरीते बोलीने क्रियानुं स्थापन करेछे ( तहातहासमणामाहणाय के० ) तथा तथा एटले ते ते प्रकारें अर्थात् जेवा जेवा प्रकारनी क्रिया प्रवर्त्ते तेम तेम एटले तेवा तेवा प्रकारनुं स्वर्ग नरकादिक फल पण जाणवुं एरीते ते शाक्यादिकना श्रमण ब्राह्मण क्रियाथकीज सिद्धि कहेछे. ( सयंकडंणन्नकडंचडुक्खं के० ) तथाजे कांइ आ जगत् मांहे दुःख सुखछे ते सर्व पोतानुं करेलुं तथा परनुं करेलुं पण नथाय परंतु सर्व नवितव्यतानुं करेलुं थायछे हवे एमना मतनुं निराकरण करेछे ( आहंसुविज्ञाचरणंपमोक्खं के० ) तीर्थंकर गणधरादिक विद्या एटले ज्ञान अने चरण एटले चारित्र एणेकरी मोक्षछे एटले संसारीजीवोने ज्ञान अने क्रियानेसंयोगे करी प्रकर्षे जैनमार्गे मोक्षछे एम कहेछे. ॥ ॥ ११ ॥ ( तेचक्खुलोगंसिहणायगाउ के० ) ते तीर्थंकर गणधरादिक केवाछे तोके लोकमांहे चक्षुने स्थानकेछे तथा आ लोकने विषे नायक एटले स्वामि छता ( मग्गाणुसासंतिहितंपयाणं के० ) आलोकने विषे पोताना प्रजालोकने आ नवें तथा परनवें हितकारी एवो सम्यक् धर्म मार्ग प्रकाशेछे. (तहातहासासयमाहुलोएके०) तथा तथा एटले जेवा जेवा प्रकारें ए लोक पंचास्तिकायरूप ते द्रव्यास्तिक नयना अभिप्रायें शाश्वतो थाय तेवा तेवा प्रकारे कहे अथवा जेमजेम रागद्वेषनी वृद्धि तेम तेम संसारनी वृद्धि थाय एम कहे (जंसी के० ) जे संसारने विषे ( पयासंपगाढा के० ) प्रजा एटले जीव ते रागद्वेषे व्याप्त छता नाना प्रकारे रह्याछे ( माणवके०) तो हे मानव तुं एम जाण ॥१२॥

---

॥ दीपिका– अथ क्रियावादिमतमाह । ये क्रियातएव मोक्षमिछंति तएवमाख्यांति । स्वाभिप्रायेण लोकं स्थावरजंगमात्मकं समेत्य ज्ञात्वा किल वयं यथावस्थितवस्तु ज्ञातारइत्यंगीकृत्य सर्वमस्त्येवेति सनिश्चयं कथयंति । तथा तेन प्रकारेण यथायथा क्रिया तथातथा स्वर्गनरकादिफलमिति । ते श्रमणास्तीर्थिकाब्राह्मणावा क्रियातएव सिद्धिमिछंति। तथा यत्किंचित्संसारे दुःखं तथा सुखं च तत्सर्वं स्वयमात्मनाऽन्येन कालेश्वरादिना । नचैतदक्रियावादे घटते । तत्र हि अक्रियत्वादात्मनोऽकृतयोरेव सुखदुःखयोः संभवः स्यादिति । ( तस्मादाहंसु विज्ञाचरणं पमोक्खंति ) विद्याज्ञानं । चरणंक्रिया । ते द्वे अपि विद्येते कारणत्वेन यस्येति समासंकृत्वा अभ्रीआदित्वान्मत्वर्थीयोच्प्रत्ययः । असौ विद्याचरणोमोक्षः। ज्ञानक्रियासाध्यइत्यर्थः । एवंविधं मोक्षमाहुस्तीर्थकृदादयः॥११॥ ते तीर्थकरादयइहास्मिन् लोके चक्षुर्लोचनतुल्यइत्यर्थः । ते लोके नायकाः प्रधानाः । तुर्विशेषणे । मार्गं ज्ञानादिकं प्रजानां हितं प्राणिनामनर्थवारकं सद्गतिप्रापकं चानुनायं ते कथयंति तथा तथा शाश्वतं लोकं संसारमाहुर्जिनाः । यथायथा मिथ्यात्ववृद्धिः ।

तथाहि । तत्र तीर्थकराहारकवर्ज्याः सर्वएव कर्मबंधाः संभाव्यंते । कर्मबंधाच्च संसारवृद्धिः । अथवा यथायथा रागद्वेषवृद्धिस्तथा तथा संसारोपि शाश्वतइत्याहुः । यस्मिन्संसारे प्रजाजंतवः हेमानव संप्रगाढाः स्थिताः ॥ १२ ॥

---

॥ टीका—सांप्रतं क्रियावादिमतं डुदूषयिषुस्तन्मतमाविष्कुर्वन्नाह् । ( तएवमक्कंतीत्यादि ) ये क्रियातएव ज्ञाननिरपेक्षायादीक्षादिलक्षणायामोक्षमिच्छंति तेएवमाख्यांति तद्यथा । अस्ति माता पिता अस्ति सुचीर्णस्य कर्मणः फलमिति । किंकृत्वा तएवं कथयंति क्रियातएव सर्वं सिध्यतीति स्वाभिप्रायेण लोकं स्थावरजंगमात्मकं समेत्य ज्ञात्वा किल वयं यथावस्थितवस्तुनोज्ञातारइत्येवमभ्युपगम्य सर्वमस्त्येवेत्येवं सावधारणं प्रतिपादयंति न कथंचिन्नास्तीति कथमाख्यांति । तथा तेन प्रकारेण यथायथा क्रिया तथा तथा स्वर्गनरकादिकं फलमिति ते च श्रमणास्तीर्थिकाब्राह्मणावा क्रियातएव सिद्धिमिच्छंति । किंच यत् किमपि संसारे डुःखं तथा सुखं च तत्सर्वं स्वयमेवात्मना कृतं नान्येन कालेश्वरादिना नचैतदक्रियावादे घटते । तत्र ह्यक्रियात्वादात्मनोऽकृतयोरेव सुखडुःखयोः संभवः स्यादेवंच कृतनाशाकृतागमौ स्यातां । अत्रोच्यते । सत्यमस्त्यात्मसुखडुःखादिकं । नन्वस्त्येव । तथाहि । यद्यस्त्येवं सावधारणमुच्येत ततश्च न कथंचिन्नास्तीत्यापन्नमेवंच सति सर्वं सर्वात्मकमापद्येत । तथाच सर्वलोकस्य व्यवहारोच्छेदकः स्यात् । नच ज्ञानरहितायाः क्रियायाः सिद्धिस्तडुपायपरिज्ञानाभावात् । नचोपायमंतरेणोपेयमवाप्यतइति प्रतीतं । सर्वा हि क्रिया ज्ञानवत्येव फलवत्युपलभ्यते । उक्तंच । ज्ञानस्य ज्ञानिनां चैव निंदाप्रद्वेषमत्सरैः ॥ उपेक्षितैश्च विघ्नैश्च ज्ञानघ्नं कर्म बध्यते ॥ १ ॥ पढमं नाणं तउ दया, एवं चिट्ठति सव्वसंजए ॥ अन्नाणी किं काही, किंवा नाहीछेयपावगं ॥ १ ॥ इत्यतोज्ञानस्यापि प्राधान्यं नापि ज्ञानादेवसिद्धिः क्रियारहितस्य पंगोरिव कार्यसिद्धेरनुपपत्तिरित्यालोच्याह् । ( आहंसुविज्ञाचरणं पमोक्खंति ) न ज्ञाननिरपेक्षायाः क्रियायाः सिद्धिरंधस्येव नापि क्रियाविकलस्य ज्ञानस्य पंगोरित्येवमवगम्याहुरुक्तवंतस्तीर्थकरगणधरादयः । किमाहुः । मोक्षं । कथं । विद्यां च ज्ञानं चरणंच क्रिया ते द्वे अपि विद्येते कारणत्वेन यस्येति विगृह्याशैआदित्वान्मत्वर्थीयोच् । असौ विद्याचरणोमोक्षः । ज्ञानक्रियासाध्यइत्यर्थः । तमेवं साध्यं मोक्षं प्रतिपादयंति । यदिवान्यथा वा पातनिका केनैतानि समवसरणानि प्रतिपादितानि । यच्चोक्तं यच्च वक्ष्यते इत्येतदाशंक्याह् । ( तेएवमक्खंतीत्यादि ) अनिरुद्धा क्वचिदप्यस्खलिता प्रज्ञायते ऽनयेति प्रज्ञा ज्ञानं येषां तीर्थकृतां तेऽनिरुद्धप्रज्ञास्तएवमनंतरोक्तया प्रक्रियया सम्यगाख्यांति प्रतिपादयंति । लोकं चतुर्दशरज्ज्वात्मकं स्थावरजंगमाख्यं वा समेत्य केवलज्ञानेन करतलामलकन्यायेन ज्ञात्वा

तथागतास्तीर्थकरत्वं केवलज्ञानं च गताः श्रमणाः साधवोब्राह्मणाः संयताऽसंयताः। लौकिकी वाचोयुक्तिः। किंभूतास्तएवमाख्यांतीति संबंधः। तथातथेति वा क्वचित्पाठः। यथायथा समाधिमार्गोव्यवस्थितस्तथातथा कथयंति। एतच्च कथयंति। यथा यत्किंचित्संसारांतर्गतानामसुमतां दुःखमसातोदयस्वभावं तत्प्रतिपक्षभूतं च सातोदयापादितं सुखं तत्स्वयमात्मनाकृतं नान्येन कालेश्वरादिना कृतमिति। तथा चोक्तं। सव्वो पुव्वकयाणं, कम्माणं पावए फलविवागं॥ अवराहे सुगुणेसुय णिमित्तमित्तं परो होइ॥ १॥ एतच्चाहुस्तीर्थकरगणधरादयः। तद्यथा। विद्या ज्ञानं चरणं चारित्रं क्रिया तत्प्रधानोमोक्षस्तमुक्तवंतोनज्ञानक्रियाभ्यां परस्परनिरपेक्षाभ्यामिति। तथा चोक्तं। क्रियां च संज्ञानवियोगनिष्फलां क्रियाविहीनां च विबोधसंपदं॥ निरस्यताक्लेशसमूहशांतये, त्वया शिवाया लिखितेव पद्धतिः॥ १॥ ११॥ किंच (तेचक्खुलोगंसिहेत्यादि) ते तीर्थकरगणधरादयोऽतिशयज्ञानिनोऽस्मिन् लोके चक्षुरिव चक्षुर्वर्तंते। यथाहि चक्षुर्योग्यदेशावस्थितान् पदार्थान् परिछिनत्ति। एवं तेऽपि लोकस्य यथावस्थितपदार्थाविष्करणं कारयंति। यथाऽस्मिन् लोके ते नायकाः प्रधानाः। तुशब्दो विशेषणे। सदुपदेशदानतोवा नायकाइत्येतदाह। मार्गं ज्ञानादिकं मोक्षमार्गं अनुशासंति कथयंति प्रजायंतइतिप्रजाः प्राणिनस्तेषां। किंभूतं। हितं सद्गतिप्रापकमनर्थनिवारकं। किंच चतुर्दशरज्ज्वात्मके लोके पंचास्तिकायात्मके वा येन प्रकारेण द्रव्यास्तिकनयाभिप्रायेण यद्वस्तु शाश्वतं तत्तथा आहुरुक्तवंतः। यदिवा लोकोयं प्राणिगणः संसारांतर्वर्ती यथायथा शाश्वतोभवति तथातथैवाहुः। तद्यथा। यथायथा मिथ्यादर्शनाभिवृद्धिस्तथातथा शाश्वतोलोकः। तथाहि। तत्र तीर्थकराहारकवर्ज्याः सर्वएव कर्मबंधाः संभाव्यंतइति। तथाच महारंभादिभिश्चतुर्भिः स्थानैर्जीवानरकायुष्कं यावन्निवर्तयंति तावत्संसारानुछेदइति। अथवा यथायथा रागद्वेषादिवृद्धिस्तथातथा संसारोपि शाश्वतइत्याहुः। यथायथा च कर्मोपचयमात्रा तथातथैव संसाराभिवृद्धिरिति। दुष्टमनोवाक्कायाभिवृद्धौ वा संसाराभिवृद्धिरवगंतव्या। तदेवं संसारस्याभिवृद्धिर्भवति। यथाऽस्मिंश्च संसारे प्रजायंतइति प्रजाजंतवः हे मानव। मनुष्याणामेव प्रायशउपदेशार्हत्वान्मानवग्रहणं। सम्यग्नारकतिर्यङ्नरामरभेदेन प्रगाढाः प्रकर्षेण व्यवस्थिताइति॥ १२॥

जे रक्खसा वा जमलोइया वा, जे वासुरा गंधव्वा य काया॥
आगासगामी य पुढोसिया जे, पुणोपुणो विप्परिया सुवंति॥
॥१३॥ जमाहु उहं सलिलं अपारगं, जाणाहि णं भवगहणं डु
मोक्खं॥ जंसी विसन्ना विसयंगणाहिं, दुहउ वि लोयं अणुसंचरंति॥१४

अर्थ–हवे ते नाना प्रकार कहेले. ( जेरक्कसावाजमलोश्यावा के० ) जे राक्षस व्यंतरादिक यमलोकिका जे परमाधार्मिकादिक देवो ( जेवासुरा के० ) जे वैमानिक ज्योतिषादिक देवो ( गंधवाय के० ) गांधर्व एटले विद्याधरादिक तथा ( कायके० ) पृथिविकायादिक ( आगासगामीय के० ) आकाशगामि एवा पक्षीर्उ तथा वायुप्रमुख तथा ( पुढोसियाजे के० ) पृथिविने विषे आश्रित एवा जे अनेक बेंड्रियादिक जीव ते सर्व ( पुणोपुणोविप्परियासुवंति के० ) पोत पोताना कर्मे करी वलीवली चतुर्गतिक रूप संसारमां परिच्रमण करेले ॥ १३ ॥ ( जमाहुउहंसलिलंअपारगं के० ) श्रीतीर्थंकर गणधरादिक ते ए जे उघ एटले संसार तेने अपार स्वयंनूरमण समुड सरखो कहेले ( जाणाहि के० ) एम तुं जाण अंहीं णं वाक्यालंकारेले ( नवगहणं के० ) ते समान संसार गहनले ( डमोरकं के० ) डुर्मोक्ष एटले अत्यंत डुस्तरले ( जंसीविसन्नाविसयंगणाहिं के० ) अस्तिवादीने पणजो एमले एटले सम्यक् प्रवर्तकने पण आ अपार संसारसमुड अत्यंत डुस्तर ले तो नास्तिकवादीने तो अत्यंत डुस्तर होय एमां केवुंज शुं जे आ संसारने विषे सावद्य धर्मना प्रवर्त्तक कुमार्गे पतित पांचेंड्रिय संबंधी विषयना सेवनार तथा अंगना जे स्त्री तेने वश पड्यालता रहेले ते ( डुहउविलोयंअणुसंचरंति के० ) त्रस स्थावररूप बे प्रकारनुं जे लोक तेमांहे राग द्वेषेकरीपरिच्रमणकरे.

---

॥ दीपिका–ये राक्षसाः । राक्षसग्रहणात्सर्वे व्यंतराज्ञेयाः । यमलौकिकात्मानोऽवर्ष्यादयोनवनपतयः । येच सुरावैमानिकाः । चशब्दाज्ज्योतिष्काः । ये गंधर्वाविद्याधराः । कायाः पृथिवीकायादयः षट् । पुनः प्रकारांतरेण जीवान् आकाशगामिनः संप्राप्तलब्धयश्चतुर्विद्यादेवाविद्याधराः पक्षिणोवायवश्च । ये च पृथिव्याश्रिताः पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुःपंचेंड्रियास्ते सर्वेपि कर्मनिः संसारे विपर्यासं परिच्रमणमुपयांति गच्छंति ॥ १३ ॥ यं संसारं समुड्माहुर्जिनाः । किंनूतं । स्वयंनुरमणसलिलौघवदपारं जानीहि त्वं । णमितिवाक्यालंकारे । नवगहनं संसारारण्यं डुःखेन मुच्यतइति डुर्मोक्षं डुस्तरमस्तिवादिनामपि किंपुनर्नास्तिकानां । यस्मिन् संसारे सावद्याचारे विषयाआसक्ताविषयप्रधानाअंगनाविषयांगनास्तानिर्वशीरुताद्विधापि स्थावरजंगमं लोकमनुचरंति गच्छंति संसारे च्रमंतीत्यर्थः ॥ १४ ॥

---

॥ टीका–लेशतोजंतुनेदप्रदर्शनद्वारेण तत्पर्यटनमाह । ( जेरक्कसाइत्यादि ) ये केचन व्यंतरनेदाराक्षसात्मानः । तद्ग्रहणाच्च सर्वेपि व्यंतरा गृह्यंते । तथा यमलौकिकात्मनोऽवर्ष्यादयस्तडपलक्षणात्सर्वेनवनपतयस्तथा येच सुराः सौधर्मादिवैमानिकाः । चशब्दाज्ज्योतिष्काः सूर्यादयस्तथा ये गांधर्वाविद्याधराव्यंतरविशेषावा । तद्ग्रहणं च

प्राधान्यख्यापनार्थं । तथा कायाः पृथिवीकायादयः षडपि गृह्यंतइति । पुनरन्येन प्रकारेण सत्वान्संजिघृक्षुराह । ये केचनाकाशगामिनः संप्राप्ताकाशगमनलब्धयश्चतुर्विधदेवनिकायविद्याधरपक्षिवायवः । तथा येच पृथिव्याश्रिताः पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुःपंचेंद्रियास्ते सर्वेपि स्वकृतकर्मभिः पुनःपुनर्विविधमनेकप्रकारं पर्यासं परिक्षेपमरहट्टघटीन्यायेन परिभ्रमणमुपसामीप्येन यांति गच्छंतीति ॥ १३ ॥ किंचान्यत् । ( जमाहुरित्यादि) । यं संसारसागरमाहुरुक्तवंतस्तीर्थकरगणधरादयः । तद्विदः कथमाहुः स्वयंभुरमणसलिलौघवदपारं । यथा स्वयंभुरमणसलिलोघोन केनचिज्जलचरेण स्थलचरेण वा लंघयितुं शक्यते एवमयमपि संसारसागरः सम्यग्दर्शनिनमंतरेण लंघयितुं न शक्यतइति दर्शयति । जानीहि अवगच्छ। णमिति वाक्यालंकारे। भवगहनमिदं चतुरशीतियोनिलक्षप्रमाणं यथासंभवं संख्येयाऽसंख्येयानंतस्थितिकं दुःखेन मुच्यतइतिदुर्मोक्षं दुरुत्तरमस्तिवादिनामपि किंपुनर्नास्तिकानां । पुनरपि भवगहनोपलक्षितं संसारमेव विशिनष्टि । यत्र यस्मिन् संसारे सावद्यकर्मानुष्ठायिनः कुमार्गपतिताअसत्समवसरणग्राहिणो विषण्णाअवसक्ताविषयप्रधानाअंगनाविषयांगनास्तान्निर्यदि वा विषयाश्चांगनाश्च विषयांगनास्तान्निर्वशीकृताः सर्वत्र सदनुष्ठाने ऽवसीदंति तएवंविषयांगनादिके पंचके विषण्णा द्विधाप्याकाशाश्रितं पृथिव्याश्रितंच लोकं यदि वा स्थावरजंगमलोकमनुसरंति गच्छंति । यदिवा द्विधापि लिंगमात्रप्रव्रज्य याऽविरत्याचरागद्वेषाभ्यां वा लोकं चतुर्दशरज्ज्वात्मकं स्वकृतकर्मप्रेरिताअनुसंचरंति बंभ्रम्यंतइति ॥ १४ ॥

न कम्मणा कम्म खवेंति बाला, अकम्मणा कम्म खवेंति धीरो ॥ मेधाविणो लोभमया वतीता, पाठांतरे (लोभभयावतीता) संतोसिणो नोपकरेंति पावं ॥ १५ ॥ ते तीयउप्पन्नमणागयाइं,लोगस्स जाणंति तहागयाइं॥णेतारो अन्नेसि अणन्नणेया, बुद्धा हु ते अंतकडा भवंति॥१६॥

अर्थ–( नकम्मणाकम्मखवेंतिबाला के० ) अज्ञानी एवो मिथ्यामतिवालुं जीव कर्मजे सावद्यारंभ तेणे करी पूर्वकृतकर्मने खपावे नही परंतु सारुमां नवा कर्मनुं बंध करे ( अकम्मणाकम्मखवेंतिधीरा के० ) आश्रवने सर्व प्रकारें रोधन करवा थकी सैलेसी करणावस्थायें धीर एटले महासत्ववंत एवो पुरुष कर्मने खपावेछे. ( मेधाविणोलोभमयावतीता के० ) जे मेधावि एटले पंडित महानुभाव होय ते लोभमय एटले परिग्रह तेथकी अतीत एटले रहित होय ( संतोसिणोनोपकरेंतिपावं के० ) एम संतोषी थ तो पाप नकरे ॥ १५ ॥ जे पुरुष एवा होय ते केवा थाय ते कहेछे. ( तेतीयउप्पन्नमणागयाइं के० ते ) श्रीवीतराग अतीत, अनागत अने वर्तमान ए त्रणे काल आश्री

(लोगस्सजाणंतितहागयाइं के०) तथागत एटले यथावस्थित जेमछे तेवीरीते लोक मांहे सर्व जीवोना भावी सुखदुःखादिकना जाण एवा थाय परंतु विभंग ज्ञानीनी पेरे आघुंपाछुं नजाणे (णेतारोअन्नेसिअणन्नणेया के०) एवा जीवो अन्य जीवोने संसारनो पार पमाडे परंतु तेने अन्य कोइ तत्वनो देखाडनार नथाय किंतुते दुइतिनिश्चे पोतेज (बुद्धाके०) तत्वना जाण थका (अंतकडाभवंतिके०) कर्मनो अंतकरनार होयछे ॥१६॥

---

॥ दीपिका—कर्मणा सावद्यारंभेण कर्म पापं न क्षपयंति बालामूढाः । अकर्मणा आश्रवनिरोधेन तु कर्म क्षपयंति धीरामहासत्त्वाः । मेधाविनः प्रज्ञावंतोलोभमयं परि ग्रहमेवातीतालोभातीतावीतरागाः संतोषिणः संतुष्टास्ते एवंविधाअवीतरागाअपि पा पं कर्म न कुर्वंति । लोभभयादतीताइति क्वचित्पाठः । लोभश्च भयं च लोभाद्या भयं तस्मादतीताअतएव संतोषिणइति । लोभाइभावं दर्शयताऽपरकपायेभ्योभयस्याधिक त्वमुक्तं ॥ १५ ॥ ते वीतरागाअतीतानि पूर्वजन्मकृतानि प्रत्युत्पन्नानि वर्तमानानि अ नागतान्यागामिभवभावीनि सुखदुःखानि लोकस्य प्राणिगणस्य तथागतानि यथास्थिता नि जानंति ते जिनाः श्रुतकेवलिनोवा ऽन्येषां प्राणिनां मोक्षंप्रति नेतारः प्रापकास्तेच स्वयंबुद्धत्वादन्येन न नीयंते तत्त्वाववोधं कार्यंतइत्यनन्यनेयास्तेबुद्धाज्ञाततत्त्वास्तीर्थंकर गणधरादयोदुनिश्चितमंतकराः संसारपारगाभवंति ॥ १६ ॥

---

॥ टीका—किंचान्यत् । ( णकम्मणेत्यादि ) ते एवमसत्समयसरणाश्रितामिथ्यात्वादि भिर्दोषैरभिभूताः सावद्येतरविशेषानभिज्ञाः संतः कर्मक्षपणार्थमप्युद्यताभिर्विवेकतया सावद्यमेव कर्म कुर्वते । नच कर्मणा सावद्यारंभेण कर्म पापं क्षपयंत्यपनयंत्यज्ञत्वाद्बाला इव बालास्तइति । यथाच कर्म क्षिप्यते तथा दर्शयति । अकर्मणात्वाश्रवनिरोधेन तु अंतगः शैलेश्यवस्थायां कर्म क्षपयंति धीरामहासत्त्वाः सद्वैद्याइव चिकित्सयाऽऽमयानि ति । मेधा प्रज्ञा विद्यते येषांते मेधाविनोहिताहितप्राप्तिपरिहाराभिज्ञालोभमयं परिग्रहमे वातीताः परिग्रहातिक्रमाल्लोभातीतावीतरागाइत्यर्थः । संतोषिणोयेन केनचित्संतुष्टाश्च वीतरागाअपीति । यदिवा यतएवाऽतीतलोभाअतएव संतोषिणइति । तएवंभूताभगवं तः पापमसदनुष्ठानापादितं कर्म न कुर्वंति माददति । क्वचित्पाठः । लोभभयादतीताः । लोभश्च भयं च समाहारद्वंद्वः । लोभाद्या भयं तस्मादतीताः संतोषिणइति । न पुनरु क्ता शंका विधेयेत्यतोलोभातीतत्वेन प्रतिषेधांशोदर्शितः । संतोषिणइत्यनेन च विध्यंश इति । यदिवा लोभातीतग्रहणेन समस्तलोभाभावः । संतोषिणइत्यनेनतु सत्यप्यवीतरा गत्वेनोत्कटलोभाइति । लोभाभावं दर्शयन्नपरकषायेभ्योलोभस्य प्राधान्यमाह । येच लो भातीतास्तेऽवश्यं पापं न कुर्वंतइति स्थितं ॥ १५ ॥ येच लोभातीतास्ते किंभूताभवं

तीत्यतआह । ( तेतीयइत्यादि ) ते वीतरागाअल्पकषायावा लोकस्य पंचास्तिकायात्मकस्य प्राणिलोकस्य वाऽतीतान्यन्यजन्माचरितानि उत्पन्नानि वर्तमानावस्थायीन्यनागतानि च नवांतरनावीनि सुखदुःखादीनि तथागतानि यथावस्थितानि तथैवाऽवितथं जानंति न विनंगज्ञानिनइव विपरीतं पश्यंति । तथाहि । आगमः । अणगारेणं नंतेमाई मिछादिठी रायगिहेण यरेसंमोहए वाणारसीए नयरीए रूवाइं जाणाइ पासइ जावसे दंसणे विवज्ञा से नवतीत्यादि । ते चातीतानागतवर्तमानज्ञानिनः प्रत्यक्षज्ञानिनश्चतुर्दशपूर्वविदोवा ऽप्रत्यक्षज्ञानिनोऽन्येषां संसारोत्तितीर्षूणां नव्यानां मोक्षंप्रति नेतारः सदुपदेशं प्रत्युपदेष्टारोनवंति । नच ते स्वयंबुद्धत्वादन्येन नीयंते तत्वावबोधं कार्यंतइत्यनन्यनेयाहिताहितप्राप्तिपरिहारंप्रति नान्यस्तेषां नेता विद्यतइति नावः । ते च बुद्धाः स्वयंबुद्धास्तीर्थंकरगणधरादयः । तुशब्दश्च शब्दार्थे विशेषणेच । तथाच प्रदर्शितएव । तेच नवांतकराः संसारोपादाननूतस्य वा कर्मणोंतकरानवंतीति ॥ १६ ॥

ते णेव कुव्वंति ण कारवंति, नूताहिसंकाइ डुगुंछमाणा ॥ सयाजता विप्पणवंति धीरा, विण्णत्ति धीरा पाठांतरे (विण्णतिवीरा) य हवंति एगे ॥ १७ ॥ महरे य पाणे वुड्ढे य पाणे, ते आत्तर्ज पासइ सवलोए ॥ उवे हती लोगमिणं महंतं, बुद्धेऽपमत्तेसु परिवएज्ञा ॥ १८ ॥

अर्थ—हवे तेमनी क्रिया केवी होय ते कहेछे. ( ते के० ) ते वीतराग सम्यक् ज्ञानी ते सावद्यानुष्ठानरूप एवी जे ( नूताहि संकाइ डुगुंछमाणा के० ) नूत एटले प्राणी तेनी हिंसानी शंकायें डुगंछित एटले प्राणीनी हिंसाने निंदता थका ( णेवकुव्वंति के० ) पोते हिंसा करे नही तथा ( णकारवंति के० ) अन्य पाशे हिंसा करावे नही. उपलक्षण थकी जे हिंसा करतो होय तेने अनुमोदे नही तेमज मृषा पोते बोले नही बीजा पाशे बोलावे नही तथा बोलताने अनुमोदन आपे नही एरीते सर्व पंचमहाव्रतोने सदाकाल पाले एम ( सयाजता के० ) सर्व काल यत्नवंत एटले पाप थकी निवर्त्ते ( विप्पणवंतिधीरा के० ) संयमने विषे नम्र होय विनयवंत होय एवा धैर्यवंत शुनट तुल्य ठतो संयमरूप नूमिने विषे कर्मरूप शुनटोने जीतवा समर्थ एवो (विण्णत्तिधीरायहवंतिएगोके०) कोइएक शुद्ध सम्यक् मार्ग जाणी धैर्यवंत शूरवीर थाय ते परीसहादिकने जीते ॥ १७ ॥ हवे शुं जाणीने सावद्यानुष्ठान नकरे ते कहेछे. ( महरेयपाणे वुढेयपाणे के० ) महरा एटले बालक ते अंही पृथिविकायादिक तथा बेंडीयादिक लघु जातीना जीवो लेवा तेपण जीवछे अने वुढेय एटले महोटा हस्ति प्रमुख ते पण जीवछे एवुं जाणीने ( तेआत्तउपासइ सवलोए के० ) ते सहुजीवने सर्व चौद रज्वात्मक

लोकने विषे पोतानाआत्म समान देखे ( उविहती लोगमिणं महंतं के० ) ए महांत लोक एटले संसार तेने सारीरीते आलोचीने सर्वस्थानक अशाश्वता जाणीने आ संसारमां कोइ सुख नथी एवो जाणीने ( बुद्ध के० ) जे पंडित तत्वना जाण होय ते ( अप्पमत्तेसुपरिवएज्ञा के० ) अप्रमत्तपणे संयमने विषे प्रवर्त्ते शुद्धो संयम पाले १८

---

॥ दीपिका–ते तीर्थंकरादयः पापं कर्म नैव कुर्वंति स्वयं । नवाऽन्येन कारयंति कुर्वंतमन्यं नानुजानंति भूतानिशंकया प्राणिघातभयेन पापं कर्म जुगुप्समानाः । एवं विधास्ते सदा सर्वकालं यताः संयताविप्रणमंति विविधं संयमानुष्ठानं प्रति प्रव्हीभवंति तत्पराः सुधीराः । तथा एके केचन गुरुकर्माणो (विणत्ति) विज्ञप्तिर्ज्ञानं तन्मात्रेणैव वीरानानुष्ठानेन स्युः । नच ज्ञानमात्रेण सिद्धिः । यतः । अधीत्य शास्त्राणि भवंति मूर्खा, यस्तु क्रियावान् पुरुषः सविद्वान् ॥ संचिंत्यतामौषधमातुरं हि न ज्ञानमात्रेण करोत्यरोगम् ॥ १ ॥ १७ ॥–ये डहराल्पवः कुंथ्वाद्याः सूक्ष्मावा ते सर्वेपि प्राणाः प्राणिनोये च वृद्धाबादरास्तान् सर्वानात्मवत्पश्यति सर्वलोके। तथा लोकमिमं षड्जीवैराकुलत्वान्महांतमुत्प्रेक्षते । अनाद्यनंतत्वाद्वा महांतं । यतोभव्याअपि केचन सर्वेणापि कालेन नसेत्स्यंतीति । यद्यपि द्रव्यतः षड्द्रव्यात्मकत्वात् क्षेत्रतश्चतुर्दशरज्जुमानत्वात्परिमितोलोकस्तथापि कालतोऽनाद्यनंतत्वाद्भावतः पर्यायाणामंतत्वान्महान् लोकस्तमुत्प्रेक्षते । बुद्धोज्ञाततत्त्वोऽप्रमत्तेषु यतिषु तथाभूतएव परिव्रजेत्संयमे ॥ १८ ॥

---

॥ टीका–यावदद्यापि भवांतं न कुर्वंति तावत्प्रतिषेध्यमंशं दर्शयितुमाह । ( तेणेव कुव्वंतीत्यादि ) ते प्रत्यक्षज्ञानिनः परोक्षज्ञानिनोवा विदितवेद्याः सावद्यमनुष्ठानं भूतोपमर्दाभिशंकया पापं कर्म जुगुप्संतः स्वतोन स्वतः कुर्वंति नाप्यन्येन कारयंति कुर्वंतमप्यपरं नानुमन्यन्ते । तथा स्वतोन मृषावादं जल्पंति नान्येन जल्पयंति नाप्यपरं जल्पंतमनुजानंत्येवमन्यान्यपि महाव्रतान्यायोज्यानीति । तदेवं सदा सर्वकालं यताः संयताः पापानुष्ठानान्निवृत्ताविविधं संयमानुष्ठानं प्रति प्रणमंति प्रव्हीभवंति । के ते वीरामहापुरुषाइति । तथैकेचन हेयोपादेयं विज्ञायाऽपिशब्दात्सम्यक् परिज्ञाय वा तदेव निःशंकं यज्जिनैः प्रवेदितमित्येवं कृतनिश्चयाः कर्मणि विदारयितव्ये वीराभवंति। यदिवा परीषहोपसर्गानीकविजयाद्वीरा इति । पाठांतरंवा ( विणति वीराय भवंति एगे ) एके केचन गुरुकर्माणोल्पसत्त्वाः विज्ञप्तिर्ज्ञानं तन्मात्रेणैव वीरानत्वनुष्ठाने नच ज्ञानादेवाऽभिलपितावाप्तिरुपजायते । तथाहि । अधीत्यशास्त्राणि भवंति मूर्खायस्तुक्रियावान पुरुषः सविद्वान् ॥ संचिंत्यतामौषधमातुरं हि न ज्ञानमात्रेण करोत्यरोगं ॥ १ ॥ १७ ॥ कानि

पुनस्तानि नूतानि यद्बंकयाऽरंनं जुगुप्संति संतइत्येतदाशंक्याह । ( डहरेयइत्यादि ) ये केचन डहरेति लघवः कुंथ्वादयः सूक्ष्मावा ते सर्वेपि प्राणाः प्राणिनोये च वृद्धा बादरशरीरिणस्तान्सर्वानप्यात्मतुल्यान् आत्मवत्पश्यति सर्वेस्मिन्नपि लोके यावत्प्रमाणं मम तावदेव कुंथोरपि यथावा मम दुःखमननिमतमेवं सर्वलोकस्यापि सर्वेषामपि प्राणिनां दुःखमुत्पद्यते दुःखादुद्विजंति । यथाचागमः । पुढविकाएणं नंते अक्कंते समाणे केरिसयं वेयणं वेएइइत्याद्याः सूत्रालापकाइति मत्वा तेपि नाक्रमितव्यान संघट्टनीया इत्येवं यः पश्यति तथा लोकमिमं महांतमुत्प्रेक्षते षड्जीवसूक्ष्मबादरनेदैराकुलत्वान्महांतं । यदिवाऽनादिनिधनत्वान्महान् लोकः । तथाहि । कालतोनव्याअपि केचन सर्वेणापि कालेन न सेत्स्यंतीति । यद्यपि द्रव्यतः षड्द्रव्यात्मकत्वात् क्षेत्रतश्चतुर्दशरज्जुप्रमाणतया सावधिकोलोकस्तथापि कालतोनावतश्चानाद्यनिधनत्वात्पर्यायाणां चानंतत्वान्महान लोकस्तमुत्प्रेक्षतइति । एवंच लोकमुत्प्रेक्षमाणोबुद्धोऽवगंतव्यः । सर्वाणि प्राणिस्थानान्यशाश्वतानि तथा नात्रापसदे संसारे सुखलेशोप्यस्तीत्येवं मन्यमानोऽप्रमत्तेषु संयमानुष्ठायिषु मध्ये तथानूतएव परिसमंताद्व्रजेद्यदिवा बुद्धः सन् प्रमत्तेषु गृहस्थेषु अप्रमत्तः सन् संयमानुष्ठाने परिव्रजेदिति ॥ १८ ॥

जे आयउ परउ वा वि णचा, अलमप्पणो होंति अलं परेसिं ॥
तं जोइनूतं च सया वसेज्जा, जे पाउकुज्जा अणुवीति धम्मं॥१ए॥
अत्ताए जो जाणति जो य लोगं, गइं च जो जाणइ णागइं च॥
जो सासयं जाण असासयं च, जातिं मरणं च जणोववायं॥२०॥

अर्थ—( जेआयउपरउवाविणचा के० ) जे कोइ पोताना आत्माने तथा परना आत्माने सम्यक् प्रकारे जाणे एटले जेवीरीते पोताना आत्माने जाणे तेवीरीते परना आत्माने पण जाणे ( अलमप्पणोहोंतिअलंपरेसिं के० ) ते पुरुष पोताने उद्धरवाने समर्थ होय अने बीजाने पण उद्धरवाने समर्थ थाय (तंजोइनूतंचसयावसेज्जा के०) ते ज्योतिनूत प्रकाशवान चंद्रादित्य प्रदीपसमान गुरुने जाणीने सर्व काले सेवे ( जेपाउकुज्जाअणुवीतिधम्मं के० ) जे विचारीने श्रीवीतराग नाषित धर्मना स्वरूपने सम्यक् प्रकारें करी प्रगट करे ॥ १ए ॥ (अत्ताएजोजाणतिजोयलोगं के०) जे पोताना आत्माने सम्यक् प्रकारे जाणे जे लोकालोकनुं स्वरूप जाणे (गइंचजोजाणइणागइंचके०) जे जीवनी गति आगति जाणे अथवा चारे गतिनुं स्वरूप जाणे तथा अनागतनुं स्वरूप जाणे एटले ज्यां गयो थको जीव फरी नआवे एवी जे मोक्षगति तेना स्वरूपने जाणे ( जोसासयंजाणअ

सासयंचके०) तथा जे शाश्वता पदार्थ अने अशाश्वता पदार्थने पण जाणे (जातिंमरणंचज णोववायं के० ) तथा जे जीवना जन्म अने मरणने पण जाणे तथा जन एटले लोक तेनुं उपपात एटले उत्पत्ति देव नारकादिकने विषे थायढे ते पण जाणेढे ॥ २०॥

---

॥ दीपिका–यआत्मनः स्वयं सर्वज्ञोगणधरादिर्वा परतस्तीर्थकरादेर्जीवादीन् पदार्थान् ज्ञात्वा परेन्यउपदिशति सआत्मनस्त्रातुमलं समर्थः परेषांच तं सर्वज्ञं गणधरादिकं वा ज्योतिर्नूतं पदार्थप्रकाशकत्वाच्चंद्रादित्यतुल्यं सदाऽऽवसेत सेवेत नित्यं गुरुसेवी नवेत्। यतः। नाणस्स होइ नागी, थिरयरउदंसणाचरित्तेय ॥ धन्ना आवकडाए गुरुकुलवासं नमुंचंति ॥ १ ॥ ते के इत्याह। ये धर्मं श्रुतचारित्राख्यं साधुधर्मं श्राद्धधर्मंवाऽनुविचिंत्य विचार्य तमेव धर्मं प्राडुष्कुर्युर्यथोक्तानुष्ठानतः प्रकटयेयुस्ते गुरुसेविनः स्युः॥१ए॥ आत्मानं यो जानाति यश्च लोकं चराचरं चशब्दादलोकं च जानाति। यश्च जीवानां गतिमागतिं जानाति अनागतिं कुत्र गतानां नागमनं स्यादिति। यश्च शाश्वतं नित्यं सर्वं वस्तु इव्यास्तिकनयादशाश्वतं वा ऽनित्यं पर्यायनयाश्रयणात् चशब्दान्नित्यानित्यं च सर्वं योजानाति। यदागमः। णेरइआदव्वठया एलासयानावठाएअसासया । एवं तिर्यगादयोपि। अथवा शाश्वतं मोक्षमशाश्वतं नवं तथा जातिमुत्पत्तिं मरणं च नारकादीनां तथा जनानां सत्त्वानामुपपातं जानाति। उपपातोदेवनारकयोरुत्पत्तिरन्येषां ज्ञेया॥२०॥

---

॥ टीका–किंच। (जेआयउइत्यादि) यः स्वयं सर्वज्ञआत्मनस्त्रैलोक्योदरविवरवर्तिपदार्थदर्शी यथावस्थितं लोकं ज्ञात्वा तथा यश्च गणधरादिकः परतस्तीर्थकरादेर्जीवादीन् पदार्थान् विदित्वा परेन्यउपदिशति सएवंनूतोहेयोपादेयवेद्यात्मनस्त्रातुमलमात्मानं संसारावटात्पालयितुं समर्थोनवति। तथा परेषां सडुपदेशदानतस्त्राता जायते तं सर्वज्ञं स्वतएव सर्ववेदिनं तीर्थकरादिकं परतोवेदिनं च गणधरादिकं ज्योतिर्नूतं पदार्थप्रकाशकतया चंद्रादित्यप्रदीपकल्पमात्महितमिछन् संसारडुःखोद्विग्नः कृतार्थमात्मानं नावयन् सततमनवरतमावसेत सेवेत गुर्वंतिकएव यावज्जीवं वसेत्। तथाचोक्तं। नाणस्स होइ नागी, थिरयरउ दंसणे चरित्तेय ॥ धन्ना आवकहाए, गुरुकुलवासं ण मुंचंति। कएवं कुर्युरिति दर्शयति । ये कर्मपरिणतिमनुविचिंत्य माणुस्सखेत्तजाइत्यादि डर्लनां च सद्धर्मावाप्तिं सद्धर्मंवा श्रुतचारित्राख्यं क्षांत्यादिकं दशविधसाधुधर्मं वाऽनुविचिंत्य पर्यालोच्य ज्ञात्वा वा तमेव धर्मं यथानुष्ठानतः प्राडुष्कुर्युः प्रकटयेयुस्ते गुरुकुलवासं यावज्जीवमासेवंतइति। यदिवा ये ज्योतिर्नूतमाचार्यं सततमासेवंति तथा आगमज्ञाधर्ममनुविचिंत्य लोकं पंचास्तिकायात्मकं चतुर्दशरज्ज्वात्मकं वा प्राडुष्कुर्युरिति

क्रिया ॥ १९ ॥ किंचान्यत् । ( अत्ताणमित्यादि ) योह्यात्मानं परलोकयायिनं शरीराद्व्यतिरिक्तं सुखदुःखाधारं जानाति यश्चात्महितेषु प्रवर्त्तते सआत्मज्ञोभवति । येन चात्मा यथावस्थितस्वरूपोऽहंप्रत्ययग्राह्योनिज्ञातोभवति तेनैवायं सर्वोपि लोकः प्रवृत्तिनिवृत्तिरूपोविदितोभवति सएव चात्मज्ञोस्तीत्यादिक्रियावादं भाषितुमर्हतीति द्वितीयवृत्तांतस्य क्रिया । यश्च लोकं चराचरं वैशाखस्थानस्थकटिस्थकरयुग्मपुरुषाकारं चशब्दादलोकं चानंताकाशास्तिकायमात्रं जानाति । यश्च जीवानामागतिमागमनं कुतः समागतानारकास्तिर्यंचोमनुष्यादेवाः केर्वा कर्मभिर्नारकादित्वेनोत्पद्यंतइत्येवं यो जानाति । तथाऽनागतं चाऽनागमनं च कुत्र गतानां नागमनं भवति चकाराद्गमनोपायं च सम्यग्दर्शनज्ञानचारित्रात्मकं योजानाति । तत्रानागतिः सिद्धिरशेषकर्मच्युतिरूपा लोकाग्राकाशदेशस्थानरूपा वा ग्राह्या साच सादिरपर्यवसाना । यश्च शाश्वतं नित्यं सर्ववस्तुजातं द्रव्यास्तिकनयाश्रयादशाश्वतं वा नित्यं प्रतिक्षणविनाशरूपं पर्यायनयाश्रयणात् चकारान्नित्यानित्यं चोभयाकारं सर्वमपि वस्तुजातं योजानाति । तथाहि । आगमः । णेरइयादव्वठ्याएसासयाभावठ्याएअसासया । एवमन्येपि तिर्यगादयोद्रष्टव्याः । अथवा निर्वाणं शाश्वतं संसारीऽशाश्वतस्तत्रतानां संसारिणां स्वकृतकर्मवशगानामितश्चेतश्च गमनादिति । तथा जातिमुत्पत्तिं नारकतिर्यङ्मनुष्यामरजन्मलक्षणां च मरणं वाऽऽयुष्कक्षयलक्षणं । तथा जायंतइति जनाः सत्त्वास्तेषामुपपातं जानाति सच नारकदेवयोर्भवतीति । अत्रच जन्मचिंतायामसुमतामुत्पत्तिस्थानं योनिर्निरूपणीया साच सचित्ताचित्तमिश्राच तथा शीता, उष्णा मिश्राच तथा संवृता विवृता मिश्राचेत्येवं सप्तविंशतिविधेति । मरणं पुनस्तिर्यङ्मनुष्ययोश्च्यवनं ज्योतिष्कवैमानिकानामुद्वर्तनं भवनपतिव्यंतरनारकाणामिति ॥ २० ॥

अहो वि सत्ताण विउट्टणं च, जो आसवं जाणति संवरं च ॥
दुक्खं च जो जाणति निज्जरं च, सो भासिउ मरिहइ किरियवादं
॥ २१ ॥ सद्देसु रूवेसु असज्जमाणो, गंधेसु रसेसु अदुस्समाणे ॥ णो जीवितं णो मरणाहिकंखी, आयाणगुत्ते वलया विमुक्के तिबेमि ॥ २२ ॥ इतिश्री समवसरणमध्ययनं द्वादशमं संमत्तं॥

अर्थ–( अहोविसत्ताण विउट्टणंच के० ) अधोगतियें नरकादिकने विषे अशुभ कर्मने विपाके जीवने शरीर पीडादिक संताप उपजेछे ते सर्व जाणे (जोआसवंजाणतिसंवरंच के० ) जे आश्रव इंद्रिय कषाय योग अने अव्रत इत्यादिक सर्व जाणे तथा संवर ते समिति गुप्ति अने परिसह इत्यादिक सर्व जाणे ( दुक्खंचजोजाणतिनिज्जरंच के० )

तथा पापोदयथकी डुःख उत्पन्न थाय ते जाणे अने उपलक्षणथकी पुण्यना बेता लीश भेद पण जाणे वली निर्जराना बारभेदने पण जाणे ( सोभासिवमरिहइकिरय वादं के० ) तथा बंधना चार भेदने पण जाणे ते परमार्थथकी क्रियावाद बोलवा योग्य थाय ॥ २१ ॥ एवा जे सम्यक् वादी तेने फल देखाडेछे. ( सदेसुरूवेसुअसज्जमा णो के० ) शब्द जे वीणा वंश प्रमुख श्रोत्रेंद्रियने सुखना आपनार तेने विषे तथा रू प ते अनेक काष्टकर्म चित्रकर्म तथा लिप्यकर्मादिकने विषे असज्जमान एटले तेना उपर रागद्वेषने टालतो थको तथा ( गंधेसुरसेसुअडुस्समाणे के० ) गंधने विषे, रसने विषे अडुसमान एटले द्वेषने अण करतो थको ( णोजीवितंणोमरणाहिकंखी के० ) जीवितव्य अने मरणनी वांछा नकरे समता भावे वर्ते ( आयाणगुत्ते के० ) आदान एटले संयम तेने विषे गुप्त एटले तेनो रक्षपाल छतो (वलयाविमुक्के के०) वलय एटले माया तेना थकी विमुक्त छतो संयम पाले तिबेमिनो अर्थ पूर्ववत् जाणवो ॥२२॥ इतिश्री द्वितियसूत्रकृतांगनेविषे समवसरण नामे बारमा अध्ययननो अर्थ समाप्त थयो.

---

॥ दीपिका–सत्त्वानां स्वकर्मभुजामधोनारकादौ विकुट्टनीं पीडां योजानाति । यश्चाश्र वं संवरं च जानाति तथा डुःखं चशब्दात्सुखंच तथा तपसा निर्जरां च जानाति । कोर्थः । बंधहेतून् कर्मक्षयहेतूंश्च तुल्यतया जानाति । यतः ॥ यथाप्रकारायावंतः, संसा रावेशहेतवः ॥ तावंतस्तद्विपर्यासा, निर्वाणावेशहेतवः ॥१॥ सएव तत्त्वतोभाषितुं वक्तुम र्हति क्रियावादं जीवाद्यस्तित्वरूपमिति । अत्रान्यमतखंडनं वृत्तितोज्ञेयं ॥ २१ ॥ शब्दे षु रूपेषु मनोज्ञेषु असज्जन् संगमकुर्वन् गंधेषु रसेष्वमनोज्ञेषु अद्विष्यन् द्वेषमकुर्वन् । श ब्दादिषु इंद्रियविषयेष्विष्टानिष्टेषु रागद्वेषरहितइत्यर्थः । एवंविधोजीवितमसंयमजीवितं ना भिकांक्षेत् परीषहोपसर्गैः पीडितोमरणमपि नाभिकांक्षेत् । आदानं संयमस्तेन गुप्तः स हि वलयं भाववलयं माया तया विमुक्तइति । ब्रवीमीति पूर्ववत् ॥ २२ ॥ समाप्तं सम वसरणाख्यं द्वादशमध्ययनं ॥

---

॥ टीका–किंच ( अहोविइत्यादि ) सत्वानां स्वकृतकर्मफलभुजामधस्तान्नारकादौ डु ष्कृतकर्मकारिणां विविधां विरूपां वा कुट्टनां जातिजरामरणरोगशोककृतां शरीरपीडां च शब्दात्तदभावोपायं योजानाति । इदमुक्तंभवति । सर्वार्थसिद्धादारतोध सप्तमीं नरकभु वं यावदसुमंतः सकर्माणोविवर्तंते तत्रापि ये गुरुतरकर्माणस्तेऽप्रतिष्ठाननरकयायिनोभ वंतीत्येवं योजानीते तथा आश्रवत्यष्टप्रकारकं कर्म येन स आश्रवः सच प्राणातिपात रूपोरागद्वेषरूपोवा मिथ्यादर्शनादिकोवेति तं तथा संवरणमाश्रवनिरोधरूपं यावदशेषयो

गनिरोधस्वनावं चकारात्पुण्यपापे च योजानीते तथा इःखमसातोदयरूपं तत्कारणं च योजानाति सुखं च तद्विपर्ययनूतं योजानाति तपसा निर्जरांच। इदमुक्तं नवति। यः कर्मबंधहेतून् तद्विपर्यासहेतूंश्च तुल्यतया जानाति। तथाहि। यथाप्रकारायावंतः, संसारावेशहेतवः॥ तावंतस्तद्विपर्यासा, निर्वाणावेशहेतवः॥ १॥ सएव परमार्थतोनाषितुं वक्तुमर्हति। किंतदित्याह। क्रियावादमस्ति जीवोऽस्ति पुण्यमस्ति च पूर्वाचरितस्य कर्मणः फलमित्येवं वादमिति। तथाहि।जीवाजीवाश्रवसंवरबंधपुण्यपापनिर्जरामोक्षरूपान वापि पदार्थाः श्लोकद्वयेनोपात्तास्तत्र यश्चात्मानं जानातीत्यनेन जीवपदार्थोलोकमिस्यनेनाजीवपदार्थस्तथा गत्या गतिः शाश्वतेत्यादिनानयोरेव स्वनावोपदर्शनं कृतं। तथाश्रवसंवरौ स्वरूपेणैवोपात्तौ। इःखमित्यनेन तु बंधपुण्यपापानि गृहीतानि तदविना नावित्वाद्दुःखस्य। निर्जरायास्तु स्वानिधानेनैवोपादानं तत्फलनूतस्य मोक्षस्योपादानं इष्टव्यमिति। तदेवमेतावंतएव पदार्थास्तदन्युपगमे नवास्तीत्यादिकः क्रियावादोऽन्युपगतोनवतीति। यश्चैतान् पदार्थान् जानात्यन्युपगच्छसपरमार्थतः क्रियावादं जानाति।ननुचाऽपरदर्शनोक्तपदार्थपरिज्ञानेन सम्यक्त्वादिकं कस्मान्नान्युपगम्यते तडुक्तपदार्थानामेवाघटमानत्वात्। तथाहि। नैयायिकदर्शनेन तावत्प्रमाणप्रमेयसंशयप्रयोजनदृष्टांतसिद्धांतावयवतर्कनिर्णयवादजल्पवितंडाहेत्वानासच्छलजातिनिग्रहस्थानानीत्येते षोडश पदार्थाअनिहिताः। तत्र हेयोपादेयप्रवृत्तिरूपतया येन पदार्थपरिच्छित्तिः क्रियते तत्प्रमीयतेऽनेनेति प्रमाणं। तच्च प्रत्यक्षानुमानोपमानशब्दन्नेदाच्चतुर्धा। तत्रेंद्रियपदार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेशमव्यनिचारिव्यवसायात्मकं प्रत्यक्षं। तदत्रेंद्रियार्थयोर्यः संबंधस्तस्मायडुत्पन्नं नानिव्यक्तं ज्ञानं न सुखादिकमव्यपदेश्यमिति। व्यपदेशत्वेनाशब्दप्राप्तेरव्यनिचारि तद्विचंद्रज्ञानवद्व्यनिचरतीति व्यवसायात्मकमिति। निश्चयात्मकं प्रत्यक्षं तत्रास्य प्रत्यक्षता न बुध्यते। तथाहि। यत्रात्मार्थग्रहणंप्रति साक्षाद्व्याप्रियते तदेव प्रत्यक्षं। तच्चावधिमनःपर्यायकेवलात्मकं। एतच्चापरोपाधिद्वारेण प्रवृत्तेरनुमानवत्परोक्षमिति। उपचारप्रत्यक्षं तु स्यान्नचोपचारस्तत्त्वचिंतायां व्याप्रियतइति। अनुमानमपि पूर्ववच्छेषवत्सामान्यतोदृष्टमिति त्रिधा। तत्र कारणात्कार्यानुमानं पूर्ववत्कार्यात्कारणानुमानं शेषवत्सामान्यतोदृष्टांतनूतमेकं विकसितं दृष्ट्वा पुष्पिताश्चूताजगतीति। यदिवा देवदत्तादौ गतिपूर्वकां स्थानात् स्थानांतरावाप्तिं दृष्ट्वाऽऽदित्ये गत्यनुमानमिति। तत्राप्यन्यथानुपपत्तिरेव गमिका न कारणादिकं तयाविना कारणस्य कार्यंप्रति व्यनिचारात्। यत्रतु सा विद्यते तत्र कार्यकारणादिव्यतिरेकेणापि गम्यगमकनावोदृष्टः। तद्यथा। नविष्यति शकटोदयः कृत्तिकादर्शनादिति। तडुक्तं। अन्यथानुपपन्नत्वं यत्र तत्र त्रयेण किं॥ नान्यथाऽनुपपन्नत्वं यत्र तत्र त्रयेण किं॥ १॥ अपिच प्रत्यक्षस्याप्रामाण्ये तत्पूर्वकस्या

प्यनुमानस्याप्रामाण्यमिति । प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानं । यथा गौर्गवयस्तथा ऽत्रच संज्ञासंज्ञिसंबंधप्रतिपत्तिरुपमानार्थोऽत्रापि सिद्धायामन्यथानुपपत्तावनुमानलक्षण त्वेन तत्रैवांतर्भावात्पृथक्प्रमाणत्वमनुपपन्नमेव । अथ नास्त्यनुपपत्तिस्ततोव्यभिचाराद प्रमाणंतोपमानस्य । शाब्दमपि न सर्वं प्रमाणं किंतह्याप्तप्रणीतस्यैवागमस्य प्रामाण्यान्न चार्हद्व्यतिरेकेणापरस्याप्तता युक्तियुक्तेत्येतच्चान्यत्र निर्लोडितमिति । किंच सर्वमप्येत त्प्रमाणमात्मनोज्ञानं । ज्ञानं चात्मनोगुणः पृथक्पदार्थतयाभ्युपगंतुं न युक्तोरूपरसादी नामपि पृथक्पदार्थतापत्तेः । अथ प्रमेयग्रहणेनेंद्रियार्थतया तेष्वाश्रिताः सत्यमाश्रिता नतु युक्तियुक्ताः । तथाहि । द्रव्यव्यतिरेकेण तेषामभावात्तद्ग्रहणेच तेषामपि ग्रहणं सिद्धमेवेति न युक्तं पृथगुपादानं । प्रमेयं त्वात्मशरीरेंद्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभा वफलदुःखापवर्गाः । तत्रात्मा सर्वस्य द्रष्टोपभोक्ता चेच्छाद्वेषप्रयत्नसुखदुःखज्ञानानुमेयः। सच जीवपदार्थतया गृहीतएवाऽस्माभिरिति । शरीरं तु तस्य भोगायतनं भोगायतनानीं द्रियाणि भोक्तव्याइंद्रियार्थाः । एतदपि शरीरादिकं जीवाजीवग्रहणेनोक्तमस्माभिरिति । उपयोगोबुद्धिरित्येतच्चज्ञानविशेषः । सच जीवगुणतया जीवोपादानतयोपात्तएव । सर्व विषयमंतःकरणं युगपज्ज्ञानानुत्पत्तिलिंगं मनस्तदपि द्रव्यमनःपौद्गलिकमजीवग्रहणेन गृहीतं भावमनस्त्वात्मगुणत्वाज्जीवग्रहणेनेति । आत्मनः सुखदुःखसंवेदनानां निवर्तनका रणं प्रवृत्तिः सापि पृथक्पदार्थतया नाभ्युपगंतुं युक्ता । तथाहि । प्रवृत्तिरित्यात्मेच्छा सा चात्मगुणएवात्माऽभिप्रायतया ज्ञानविशेषत्वादात्मानं दूषयतीति दोषः । तद्यथा । अ स्यात्मनो नवेदं शरीरमपूर्वमनादित्वादस्य नाप्यनुत्तरत्वात्संततेरिति । योयमात्मनोध्यवसा यः सदोषोरागद्वेषमोहादिकोवा दोषः । अयमपि दोषोजीवाभिप्रायतया तदंतर्भावीति न पृथग्वाच्यः । प्रेत्यभावः परलोकसद्भावोयमपि ससाधनोजीवाजीवग्रहणेनोपात्तः । फलमपि सुखदुःखोपभोगात्मकं तदपि जीवगुणे एवांतर्भवतीति न पृथगुपदेष्टव्यमिति । दुःखमित्येतदपि विविधबाधनायोगरूपमिति फलादतिरिच्यते । जन्ममरणप्रबंधोच्छेदरूप तया सर्वदुःखप्रहाणलक्षणोमोक्षः सचास्माभिरुपात्तएवेति । किमित्यनवधारणात्मकः प्रत्ययः संशयोऽसावपि निर्णयज्ञानवदात्मगुणएवेति । येन प्रयुक्तः प्रवर्तते तत्प्रयोजनं तदपीच्छाविशेषत्वादात्मगुणएव । अविप्रतिपत्तिविषयापन्नोऽर्थोदृष्टांतोऽसावपि जीवा जीवयोरन्यतरः। नचैतावनास्य पृथक्पदार्थता युक्ताऽतिप्रसंगादवयवग्रहणेन च तस्योत्त रत्र ग्रहणादिति । सिद्धांतश्चतुर्विधः । तद्यथा । सर्वतंत्राविरुद्धस्तंत्रेऽधिकृतोर्थः सर्वतंत्र सिद्धांतः । यथा स्पर्शनादीनींद्रियाणि स्पर्शादयइंद्रियार्थाः प्रमाणैः प्रमेयस्य ग्रहणमि ति समानं । तंत्रसिद्धः परतंत्रासिद्धः प्रतितंत्रसिद्धांतोयथा सांख्यानां नाऽसतआत्मला भोनच सतः सर्वथाविनाशइति । तथा चोक्तं । नासतोजायते भावोनाभावोजायते सत

इति यत्सिद्धावन्यस्यार्थस्यानुषंगेण सिद्धिः सोधिकरणसिद्धांतः । यथेंद्रियव्यतिरिक्तोज्ञानात्माऽस्ति दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति । तत्रानुषंगिणोर्थाइंद्रियनानात्वं नियतविषयाणींद्रियाणि स्वविषयग्रहणलिंगानि च ज्ञातुर्ज्ञानसाधनानि स्पर्शादिगुणव्यतिरिक्तं द्रव्यं गुणाधिकरणमनियतविषयाश्चेतनाइति । पूर्वार्थसिद्धावेतेऽर्थाः सिध्यंति नैतैर्विना पूर्वार्थः संभवतीति । अपरीक्षितार्थाभ्युपगमात्तद्विशेषपरीक्षणमभ्युपगमसिद्धांतः । तद्यथा । किंशब्दइति विचारे कश्चिदाह । अस्तु द्रव्यं शब्दः सतु किंनित्योऽथानित्यइत्येवं विचारः । सचायं चतुर्विधोपि सिद्धांतोन ज्ञानविशेषादतिरिच्यते । ज्ञानविशेषस्यात्मगुणत्वाद्गुणस्य च गुणिग्रहणेन ग्रहणादपृथगुपादानमिति । अथावयवाः प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि । तत्र साध्यनिर्देशः प्रतिज्ञाय नित्यः शब्दोऽनित्योवेति । हिनोति गमयति प्रतिज्ञातमर्थमिति हेतुः । तथोत्पत्तिधर्मकत्वात्साध्यसाधर्म्यात्तद्धर्मभावे दृष्टांतः । उदाहरणं यथा घटइति । वैधर्म्योदाहरणं यदि नित्यं न भवति तदुत्पत्तिमदपि न भवति यथाकाशमिति । तथा न तथेति वा पक्षधर्मोपसंहारउपनयः । तद्यथा । अनित्यः शब्दः कृतकत्वादघटवत्तथाचायं । अनित्यत्वाभावे कृतकत्वमपि नभवत्याकाशवत् तथाऽयमिति । प्रतिज्ञाहेत्वोः पुनर्वचनं निगमनं तस्मादनित्यइति । तत्रामी पंचाप्यवयवायदि शब्दमात्रं ततः शब्दस्य पौद्गलिकत्वात्पुद्गलानां चाजीवग्रहणेन ग्रहणान्नपृथगुपादानं न्याय्यमथतज्जं ज्ञानं ततोजीवग्रहणेनैवोपादानमिति । ज्ञानविशेषपदार्थताभ्युपगमे च पदार्थबहुत्वं स्यादनेकप्रकारत्वाज्ज्ञानविशेषाणामिति । संशयादूर्ध्वं भवितव्यताप्रत्ययः सदर्थपर्यालोचनात्मकस्तर्कः । यथा भवितव्यमत्र स्थाणुना पुरुषेणवेत्ययमपि ज्ञानविशेषएव । नच ज्ञानविशेषाणां ज्ञातुरभिन्नानां पृथक्पदार्थपरिकल्पनं समनुजानते विद्वांसः । संशयतर्काभ्यामुत्तरकालभावी निश्चयात्मकः प्रत्ययः । निर्णयोयमपि प्राग्वन्न ज्ञानादतिरिच्यते । किंचास्य निश्चयात्मकतया प्रत्यक्षादिप्रमाणांतर्भावान्न पृथक्निर्देशोन्याय्यइति । तिस्रः कथावादोजल्पोवितंडा चेति । तत्र प्रमाणतर्कसाधनोपालंभः सिद्धांताविरुद्धः पंचावयवोपपन्नः प्रतिपक्षपरिग्रहोवादः । सच तत्त्वज्ञानार्थं शिष्याचार्ययोर्भवति । सएव विजिगीषुणा सार्धं छलजातिनिग्रहस्थानसाधनोपालंभोजल्पः । सएव प्रतिपक्षस्थापनाहीनोवितंडेति । तत्रासां तिसृणामपि कथानां भेदएव नोपपद्यते यतस्तत्त्वचिंतायां तत्त्वनिर्णयार्थं वादोविधेयोन छलजल्पादिना तत्त्वागमः कर्तुं पार्यते । छलादिकं हि परवंचनार्थमुपन्यस्यते । नच तेन तत्त्वावगतिरिति । सत्यपि भेदे नैषां पदार्थता यतोयदेव परमार्थतोवस्तुवृत्त्या यस्त्वस्ति तदेव परमार्थतयाऽभ्युपगंतुं युक्तं । वादास्तु पुरुषेच्छावशेन भवंतोऽनियतावर्तंते तेन तेषां परमार्थतेति । किंच पुरुषेच्छानुविधायिनोवादाः कुक्कुटलावकादिष्वपि पक्षप्रति

पक्षपरिग्रहेण नवंत्यतस्तेषामपि तत्त्वप्राप्तिः स्यान्नचैतदिष्यतइति । असिद्धानैकांतिक विरुद्धाहेत्वानासाः । हेतुवदानासंतइति हेत्वानासास्तत्र सम्यग्घेतूनामपि न तत्त्वव्यवस्थितिः किंपुनस्तदानासानां। तथाहि । इह यन्नियतं वस्त्वस्ति तदेव तत्त्वं नवितुमर्हति हेतुवस्तु। क्वचिद्वस्तुनि साध्ये हेतवः क्वचिदहेतवइत्यनियतास्तइति । अथ ठलं अर्थविधातोऽर्थविकल्पोपपत्तेरिति । तत्रार्थविशेषे विवक्षितेऽनिहिते वक्तुरनिप्रायादर्थांतरकल्पना वाक्ठलं । यथा नवकंबलोऽयं देवदत्तः । अत्र.च नवः कंबलोऽस्येति वक्तुरनिप्रायः। विग्रहे च विशेषोन समासे । तत्रायं ठलवादी नवः कंबलोऽस्येत्येतद्भवतानिहितमिति कल्पयति नचायं तथेत्येवं प्रतिषेधयति । तत्र ठलमित्यसदर्थानिधानं। तद्यदि ठलं न तर्हि तत्त्वं तत्त्वं चेन्न तर्हि ठलं परमार्थरूपत्वात्तस्येति। तदेवं ठलं तत्त्वमित्यतिरिक्ता वाचोयुक्तिः। दूषणानासास्तु जातयस्तत्र सम्यक्दूषणस्यापि न तत्त्वव्यवस्थितिरनियतत्वात् । अनियतत्वं च यदेवैकस्मिन् सम्यक् दूषणं तदेवान्यत्र दूषणानासं पुरुषशक्त्यपेक्षत्वाच्च दूषणानासव्यवस्थितेरनियतत्वमिति । कुतः पुनर्दूषणानासरूपाणां जातीनामवास्तवत्वात्तात्वमिति। वादकाले वादी प्रतिवादी वा येन निगृह्यते तन्निग्रहस्थानं तच्च वादिनो साधनांगवचनं प्रतिवादिनस्तद्दोषोद्भावनं विहाय यदन्यदनिधीयते नैयायिकैस्तत्प्रलापमात्रमिति । तच्च प्रतिज्ञाहानिः प्रतिज्ञांतरं प्रतिज्ञाविरोधइत्यादिकमेतच्च विचार्यमाणं न निग्रहस्थानं नवितुमर्हति नवदपिच पुरुषस्यैवापराधं कर्तुमलं न त्वेतत्तत्त्वं नवितुमर्हति। वक्तृगुणदोषौ हि परार्थे अनुमानेऽधिक्रियेते नतु तत्त्वमिति। तदेवं न नैयायिकोक्तं तत्त्वं तत्त्वेनाश्रयितुं युज्यते तस्योक्तनीत्या सदोषत्वादिति।नापि वैशेषिकोक्तं तत्त्वमिति।तथाहि। इव्यगुणकर्मसामान्यविशेषसमवायानावास्तत्त्वमिति । तत्र पृथिव्यप्तेजोवायुराकाशं कालोदिगात्मा मनइति नव इव्याणि । तदत्र पृथिव्यप्तेजोवायूनां पृथग्इव्यत्वमनुपपन्नं । तथाहि । तएव परमाणवः प्रयोगविस्रसाभ्यां पृथिव्यादित्वेन परिणमंतोपि न स्वकीयं इव्यत्वं त्यजंति। नचावस्थानेदेन इव्यनेदोयुक्तोऽतिप्रसंगादिति । आकाशकालयोश्चास्माभिरपि इव्यत्वमभ्युपगतमेव । दिशस्त्वाकाशावयवनूतायाअनुपपन्नत्वं पृथग्इव्यत्वमतिप्रसंगदोषादेव। आत्मनश्च स्वशरीरमात्रव्यापिनउपयोगलक्षणस्याभ्युपगतइव्यत्वमिति। मनसश्च पुजलविशेषतया पुजलइव्येऽतर्नावइति परमाणुवन्नावान्मनसश्च जीवगुणत्वादात्मन्यंतर्नावइति । यदपि तैरनिधीयते यथा पृथिवीत्वयोगात्पृथिवीति तदपि स्वप्रक्रियामात्रमेव । यतोनहि पृथिव्याः पृथग्नूतं पृथिवीत्वमपि येन तद्योगात्पृथिवी नवेदपि तु सर्वमपि यदस्ति तत्सामान्यविशेषात्मकं नरसिंहाकारमुनयस्वनावमिति। तथा चोक्तं । नान्वयः सहनेदत्वा.न्न नेदोन्वयवृत्तितः ॥ मृद्भेदद्वयसंसर्ग, वृत्तिजात्यंतरं घटः ॥ १ ॥ तथा नरस्य सिंहरूपत्वान्न सिंहोनररूपतः ॥ शब्दविज्ञानकार्याणां नेदा

ज्ञात्यंतरं हि सइत्यादि । अथ रूपरसगंधस्पर्शाःरूपिद्रव्यवृत्तेर्विशेषगुणास्तथा संख्या परिमाणानि पृथक्त्वं संयोगविजागौ परत्वापरत्वे इत्येते सामान्यगुणाः सर्वद्रव्यवृत्तित्वा त् । तथा बुद्धिः सुखडुःखेञ्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चात्मगुणाः । गुरुत्वं पृथिव्यु दकयोर्ड्व्यस्वजावत्वेन परोपाधिकत्वं पृथिव्युदकाग्निषु स्नेहोऽजस्येव वेगाख्यः संस्कारो मूर्तद्रव्येष्वेव आकाशगुणः शब्दइति । तत्र संख्यादयः सामान्यगुणारूपादिवद्रव्यस्व जावत्वेन परोपाधिकत्वाद्गुणाएव न जवंति । अथापि स्युस्तथापि न गुणानांपृथक्त्व व्यवस्था । तत्पृथक्त्वजावे इव्यस्वरूपहानेर्गुणपर्यायवत् इव्यमिति कृत्वा नांतरीयक तया इव्यग्रहणेनैव ग्रहणं न्याय्यमिति न पृथग्जावः । किंच तस्य जावस्तत्वमित्युच्यते। जावप्रत्ययश्च यस्य गुणस्य हि जावाद् इव्ये शब्दनिवेशस्तदजिधाने त्वतलावित्यनेन जव ति । तत्र घटोरक्तउदकस्याहारकोजलवान् सर्वैरेव घटउच्यते । अत्र च घटस्य जावोघट त्वं रक्तस्य जावोरक्तत्वं आहारकस्यजावआहारकत्वं जलवतोजावोजलवत्वमित्यत्र घटसा मान्यरक्तगुणक्रियाइव्यसंबंधरूपाणां गुणानां सद्भावात् इव्ये पृथुबुध्नाकारउदकाद्याहरण क्षमे कुटकाख्ये शब्दस्य घटादेरजिनिवेशस्तत्र त्वतलाविह च रक्ताख्यकोगुणोयत्सद्भावात्कत रश्चतद् इव्यं यत्र शब्दनिवेशोयेन जावप्रत्ययः स्यादिति । किमिदानीं रक्तस्य जवोरक्तत्व मिति न जवितव्यं जवितव्यमुपचारेण । तथाहि । रक्तइत्येतद्रव्यत्वेनोपचर्य तस्य सामा न्यं जावइति रक्तत्वमिति । नचोपचारस्तत्वचिंतायामुपयुज्यते शब्दसिद्धावेव तस्य कृता र्थत्वादिति । शब्दश्चाकाशस्य गुणएव न जवति तस्य पौजलिकत्वादाकाशस्य चामूर्तत्वा दिति । शेषं तु प्रक्रियामात्रं न साधनदूषणयोरंगं । क्रियापि इव्यसमवायिनी गुणवत्पृथ गाश्रयितुं न युक्तेति । अथ सामान्यं तद्विधा परमपरंच । तत्र परं महासत्वाख्यं इव्यादि पदार्थव्यापि । तथाचोक्तं । सदिति यतोइव्यगुणकर्मसु सा सत्ता अपरं च इव्यत्वगुण त्वकर्मत्वात्मकं । तत्र न तावन्महासत्तायाः पृथक्पदार्थता युज्यते यतस्तस्यां यः सदि ति प्रत्ययः सकिमपरसत्तानिबंधनउत स्वतएव तत् । यद्यपरसत्तानिबंधनस्तत्राप्ययमेव विकल्पोऽतोऽनवस्था । अथ स्वतएव ततस्तद् इव्यादिष्वपि स्वतएव सत्प्रत्ययोजविष्य तीति किमपरसत्तयाऽजागलस्तनकल्पया विकल्पितया । किंच इव्यादीनां किं सतां सत्तया सत्प्रत्ययउताऽसतां तत् । यदि सतां स्वतएव सत्प्रत्ययोजविष्यति किंतया । असत्यप क्षेतु शशविषाणादिष्वपि सत्तायोगात्सत्प्रत्ययः स्यादिति । तथाचोक्तं । स्वतोर्थाः संतु सत्तावत्सत्तया किं सदात्मनां ॥ असदात्मसु नैषा स्यात्सर्वथाऽतिप्रसंगतइत्यादि । एतदे व दूषणमपरसामान्येऽप्यायोज्यं तुल्ययोगक्षेमत्वात् । किंचास्माजिरपि सामान्यविशेष रूपत्वाद्वस्तुनः कथंचित्तदिष्यतएवेति तस्यच कथंचित्तदव्यतिरेकात्तद्इव्यग्रहणेनैव ग्रह णमिति । अथ विशेषास्ते चात्यंतव्यावृत्तिबुद्धिहेतुत्वेन परैराश्रीयंते । तत्रेदं चिंत्यते ।

या तेषु विशेषबुद्धिः सा नापरविशेषहेतुका ऽऽश्रयितव्याऽनवस्थानयात्। स्वतः समाश्रयणेच तद्वद्द्रव्यादिष्वपि विशेषबुद्धिः स्यान्किंद्रव्यादिव्यतिरिक्तैर्विशेषैरिति । द्रव्यादिव्यतिरिक्तास्तु विशेषाअस्मान्निरप्याश्रीयंते सर्वस्यसामान्यविशेषात्मकत्वादिति । एतत्तु प्रक्रियामात्रं । तद्यथा । नित्यद्रव्यवृत्तयोंऽत्याविशेषानित्यद्रव्याणिच चतुर्विधाः परमाणवोमुक्तात्मानोमुक्तमनांसि चेति निर्युक्तिकत्वादपकर्णयितव्यमिति । समवायस्त्वयुतसिद्धानामाधाराधेयभूतानां यइह प्रत्ययहेतुः ससमवायइत्युच्यते । असावपि नित्यश्चैकश्चाश्रीयते। तस्यच नित्यत्वात्समवायिनोपि नित्याआपद्येरन् । तदनित्यत्वे च तस्याप्यनित्यत्वापत्तिस्तदाधाररूपत्वात्तस्य तदेकत्वाच्च सर्वेषां समवायिनामेकत्वापत्तिस्तस्य चानेकत्वमिति । किंचायं समवायः संबंधस्तस्य च द्विष्ठत्वादयुतसिद्धत्वमेव दंडदंडिनोरिव वीरणानांच कटोत्पत्तौ तद्रूपतया विनाशः कटरूपतयोत्पत्तिरन्वयरूपतया व्यवस्थानमिति दुग्धदध्नोरिवेत्येवं वैशेषिकमतेपि न सम्यक्पदार्थावस्थितिरिति । सांप्रतं सांख्यदर्शने तत्त्वनिरूपणं प्रक्रम्यते । तत्र प्रकृत्यात्मसंयोगात्सृष्टिरुपजायते । प्रकृतिश्च सत्वरजस्तमसां साम्यावस्था ततोमहान् महतोऽहंकारोऽहंकारादेकादशेंद्रियाणि पंचतन्मात्राणि तन्मात्रेभ्यः पंचभूतानीति चैतन्यं पुरुषस्य स्वरूपं सचाकर्ता निर्गुणोऽभोक्तेति। तत्र परस्परविरुद्धानां सत्त्वादीनां गुणानां प्रकृत्यात्मनां नियामकं गुणिनमंतरेणैकत्रावस्थानं न युज्यते कृष्णसितादिगुणानामिव ।नच महदादिविकारे जन्ये प्रकृतिर्वैषम्योत्पादने कश्चिद्धेतुस्तद्व्यतिरिक्तवस्त्वंतरानभ्युपगमादात्मनश्चाकर्तृत्वेनाकिंचित्करत्वात्स्वभाववैषम्याभ्युपगमेतु निर्हेतुकत्वापत्तेर्नित्यं सत्त्वमसत्त्वं वा स्यादिति । उक्तंच। नित्यं सत्त्वमसत्त्वं वा, हेतोरन्यानपेक्षणात् ॥ अपेक्षातोहि भावानां, कादाचित्कत्वसंभवः ॥ १ ॥ अपिच । महदहंकारौ संवेदनादभिन्नौ पश्यामः । तथाहि । बुद्धिरध्यवसायोऽहंकारश्चाहं सुख्यहं दुःखीत्येवमात्मनः प्रत्ययस्तयोश्चिद्रूपतयाऽऽत्मगुणत्वं न जडरूपायाः प्रकृतेर्विकारावेताविति । अपिच येयं तन्मात्रेभ्योभूतोत्पत्तिरिष्यते। तद्यथा। गंधतन्मात्रात्पृथिवी रसतन्मात्रादापः रूपतन्मात्रात्तेजः स्पर्शतन्मात्राद्वायुः शब्दतन्मात्रादाकाशमितिसापि न युक्तिक्षमा । यतो यदि बाह्यभूताश्रयेणैतदभिधीयते तदयुक्तं । तेषां सर्वदाभावान्नकदाचिदनीदृशं जगदिति कृत्वा । अथ प्रतिशरीराश्रयणादेतदुच्यते । तत्र किलत्वगस्थिकठिनलक्षणा पृथ्वी श्लेष्मासृगद्रवलक्षणाआपः पक्तिलक्षणंतेजः प्राणापानलक्षणोवायुः सुषिरलक्षणमाकाशमिति तदपि न युज्यते । यतोऽत्रापि केषांचिच्छरीराणां शुक्रासृग्भवात्पत्तिर्न तत्र तन्मात्राणां गंधोपि समुपलक्ष्यते।अदृष्टस्यापि कारणत्वकल्पनेऽतिप्रसंगः स्यात् । अंडजोद्भिज्जांकुरादीनामप्यन्यतएवोत्पत्तिर्नवंती समुपलक्ष्यते । तदेवं व्यवस्थिते प्रधानमहदहंकारादिकोत्पत्तिर्या सांख्यैः स्वप्रक्रिययाऽभ्युपगम्यते तन्निर्यु

क्तिकमेव स्वदर्शनानुरागेणाभ्युपगम्यतइति । आत्मनश्चाकर्तृत्वाभ्युपगमे कृतनाशोऽकृताग मश्च स्यात् । बंधमोक्षाभावश्च निर्गुणत्वे च ज्ञानशून्यतापत्तिरित्यतोबालप्रलापमात्रं । प्र कृतेश्चाचेतनायाआत्मार्थे प्रवृत्तिर्युक्तिविकलेति । अथ बौद्धमतं निरूप्यते । तत्रहि पदा र्था द्वादशायतनानि । तद्यथा । चक्षुरादीनि पंच रूपादयश्च विषयाः पंच शब्दायतनं धर्मा यतनंच धर्माः सुखादयो द्वादशायतनपरिच्छेदकत्वे प्रत्यक्षानुमाने द्वेएव प्रधाने प्रमाणे । तत्र चक्षुरादींद्रियाण्यजीवग्रहणेनैवोपात्तानि । भावेंद्रियाणितु जीवग्रहणेनेति । रूपाद यश्च विषयाअजीवापादनेनोपात्तान पृथगुपादातव्याः । शब्दायतनं तु पौद्गलिकत्वाच्छब्द स्याजीवग्रहणेन ग्रहणं । नच प्रतिव्यक्ति पृथक्पदार्थता युक्तिसंगतेति । धर्मात्मकं सुखं दुः खंच यद्यसातोदयरूपं ततोजीवगुणत्वाज्जीवेंतर्भावः । अथ तत्कारणं कर्म ततः पौद्ग लिकत्वादजीवइति । प्रत्यक्षं च तैर्निर्विकल्पकमिष्यते तच्चानिश्चयात्मकतया प्रवृत्तिनिवृ त्त्योरनंगमित्यप्रमाणमेव । तदप्रामाण्ये तत्पूर्वकत्वादनुमानमपीति । शेषस्त्वाक्षेपपरिहारो न्यत्र सुविचारितइति नेह प्रतन्यतइत्यनया दिशा मीमांसकलोकायतमताभिहितत्वनिराक रणं सुबुध्या विधेयं । तयोरत्यंतलोकविरुद्धपदार्थानां श्रयणान्न साक्षादुपन्यासः कृतइति । तस्मात्पारिशेष्यसिद्धाअर्हदुक्तानव सप्त पदार्थाः सत्यास्तत्परिज्ञानं च क्रियावादे हेतु र्नापरपदार्थपरिज्ञानमिति ॥ २१ ॥ सांप्रतमध्ययनार्थमुपसंजिहीर्षुः सम्यग्वादपरिज्ञान फलमादर्शयन्नाह । ( सदेसुइत्यादि ) शब्देषु वेणुवीणादिषु श्रुतिसुखदेषु रूपेषु च नय नानंदकारिष्वासंगमकुर्वन् गार्ध्यमकुर्वाणोऽनेन रागोगृहीतस्तथा गंधेषु कुथितकलेवरादि षु रसेषु चांतप्रांताशनादिषु अदुष्यमाणोमनोज्ञेषु द्वेषमकुर्वन्निदमुक्तं भवति । शब्दादिष्विं द्रियविषयेषु मनोज्ञेतरेषु रागद्वेषाभ्यामनपदिश्यमानोजीवितमसंयमजीवितं नाभिकांक्षे न्नापि परीषहोपसर्गैरभिद्रुतोमरणमभिकांक्षेत् । यदिवा जीवितमरणयोरनभिलाषी संय ममनुपालयेदिति । तथा मोक्षार्थिनादीयते गृह्यतइत्यादानं संयमस्तेन तस्मिन्वा सति गुप्तोयदिवा मिथ्यात्वादिनादीयते इत्यादानमष्टप्रकारं कर्म तस्मिन्नादातव्ये मनोवाक्का यैर्गुप्तः समितश्च तथा भाववलयं माया तया विमुक्तोमायामुक्तः । इति परिसमाप्त्यर्थे । ब्र वीमीति पूर्ववत् । नयाः पूर्ववदेव ॥ २२ ॥ समाप्तं समवसरणाख्यं द्वादशमध्ययनमिति ॥

हवे यथातथ्य नामे तेरमो अध्ययन प्रारंनियें ठैयें. बारमां अध्ययनमां जुदा जुदा दर्श नीठना समवसरण कह्या नंतर तेरमां अध्ययनमां यथातथ्य एटले सत्य स्वरूप देखाडे ठे.

आहत्तहीयं तु पवेयइस्सं, नाणप्पकारं पुरिसस्स जातं ॥ सठं
अधम्मं असठं असीलं, संतिं असंतिं करिस्सामि पाठं ॥ १ ॥

अहोयराउंअ समुठिएहिं, तहागएहिं पडिलप्न धम्मं ॥ समा
हिमाघातमजोसयंता, सछारमेवं फरुसं वयंति ॥ २ ॥

अर्थ-( आहत्तहीयंतुपवेयइस्सं के० ) यथातथ्य सम्यक् ज्ञाननो स्वरूप हवे प्रवे दिशुं एटले कहीशुं तथा ( पुरिसस्स के० ) जीवने ( नाणप्पकारं के० ) नानाप्रकारना ज्ञानादिक जे ( जातं के० ) उत्पन्न थाय तेपण हवे कहीशुं तथा ( सउंअधम्मं के० ) सत्पुरुषनुं धर्म जे श्रुत चारित्ररूप जे डुर्गति थकी राखनार ते धर्म अने ( असउंअ सीलं के० ) असत्पुरुष एटले परतीर्थिक तथा ग्रहस्थ अने पासछादिक तेनो सील एटले डुष्टाचार ते कहीशुं तथा (संतिं के०) शांति एटले निर्वाणरूप अने (असंतिं के०) संसारच्रमणरूप ए बन्नेने (करिष्यामि प्राडु के०) प्रगट करी शुं ॥१॥ ( अहोयराउंअस मुठिएहिंके०) रात्रना तेम दिवसना पण सम्यक् प्रकारे उठ्या एटले सावधान थया एवा जे निन्हवादिक जमाली प्रमुख स्वदर्शनी तथा बोटिकादिक अन्यदर्शनी ते(तहागएहिंप डिलप्नधम्मं के० ) तथा प्रकारे तीर्थकरादिक पाशेथी संसारथकी निकलवानुं उपाय एवो जे पंमित धर्म तेने पामीने जमाली प्रमुखनी पेरे कर्मने उदयें ते श्रीतीर्थंकर ना पित एवो ( समाहिमाघात के० ) समाधिवंत एटले सम्यक् दर्शनादिक धर्म तेने ( अ जोसयंता के०) अण सेवता थका कदाग्रहि पणाने लीधे मिथ्यात्वना प्रेख्या स्वछंदे यथा तथा एटले जेम तेम बोलता श्रीसर्वज्ञना मार्गने उछापता अने कुमार्गनो उपदेश कर ता एरीते प्रवर्त्तता (सछार मेवंफरुसंवयंति के०) कदापि पोताने आचारना शिखावनार एवा गुरु जे महानुनाव ते प्रत्यें पण कठोर वचन बोले ॥ २ ॥

---

॥ दीपिका-अथ त्रयोदशं याथातथ्याध्ययनमारन्यते । तस्येदमादिसूत्रं । ( अहत्ते ति ) यथातथानावोयाथातथ्यं तत्त्वज्ञानादिकं पुरुषस्य जंतोर्जातमुत्पन्नं तदहं प्रवेदयि ष्यामि कथयिष्यामि । तुशब्दोविशेषणे । वितथाचारिणस्तद्दोषांश्च कथयिष्यामि । नाना प्रकारं वा चित्रं पुरुषस्य स्वनावं प्रशस्तरूपं प्रवेदयिष्यामि । तथा । सतः सत्पुरुषस्य धर्मं श्रुतचारित्राख्यं शीलमुद्यतविहारित्वं शांतिं निर्वृतिं मोक्षं (करिस्सामिपाउंति) प्राडुष्करि ष्ये प्रकटयिष्यामि । तथाऽसतोऽशोननस्य परतीर्थिकस्य गृहस्थस्य पार्श्वस्थादेर्वा चश ब्दसमुच्चितमधर्मं पापं तथाऽशीलं कुत्सितशीलमशांतिं संसारं प्राडुष्करिष्ये ॥१॥ अहोरा त्रं समुछितानिन्हवाबोटिकाश्च तेन्यः श्रुतधरेन्यस्तथागतेन्योवा तीर्थकृद्योधर्मं श्रुतचा रित्राख्यं प्रतिलन्य प्राप्यापि मंदनाग्यतया जमालिप्रमुखश्वात्मोत्कर्षात्तीर्थकरैराख्यातं समाधिं मोक्षमार्गमजोषयंतोऽसेवमानाः सर्वज्ञोक्तं मार्गं विध्वंसयंति ते निन्हवाबोटिका श्च परेणाचार्यादिना चोदिताः संतस्तं शास्तारं चोदकं पुरुषं निष्ठुरं वदंति ॥ २ ॥

॥ टीका–अथानंतरं त्रयोदशमारभ्यते । अस्य चायमभिसंबंधः । इहानंतराध्ययने परवादिमतानि निरूपितानि तन्निराकरणं चाऽकारि तच्च याथातथ्येन भवति तदिह प्रतिपाद्यते इत्यनेन संबंधेनायातस्यास्याध्ययनस्य चत्वार्यनुयोग द्वाराणि भवंति। तत्राप्युपक्रम द्वारांतर्गतार्थाधिकारोयं । तद्यथा । शिष्यगुणदीपना । अथानंतराध्ययनेषु धर्मसमाधि मार्गसमवसरणाख्येषु यदवितथं याथातथ्येन व्यवस्थितं यच्च विपरीतं वितथं तदपि लेशतोऽत्र प्रतिपादयिष्यतइति । नामनिष्पन्नेतु निक्षेपे याथातथ्यमिति नाम तदधिकृत्य निर्युक्तिकृदाह । " णामतहं ठवणतहं, दव्वतहं चेव होइ जावतहं ॥ दव्वतहं पुण जो जस्स सभावोहिंति दव्वस्स " ॥ २४ ॥ ( णामतहमित्यादि ) अस्याध्ययनस्य याथातथ्य मिति नाम । तच्च यथाशब्दस्य भावप्रत्ययांतस्य भवति । तत्र यथाशब्दोल्लंघनेन तथा शब्दस्य निक्षेपं कर्तुं निर्युक्तिकारस्यायमभिप्रायः । इह यथाशब्दोयमनुवादे वर्तते तथा शब्दश्च विधेयार्थे । तद्यथा । यथेदं तथैवेदं भवता विधेयमित्यनुवादविधेययोश्च विधेयांशएव प्रधानभावमनुभवतीति । यदिवा याथातथ्यमिति तथ्यमतस्तदेव निरूप्यतइति । तत्र यथाभावस्तथ्यं यथावस्थितवस्तुता । तन्नामादिश्चतुर्धा । तत्र नामस्थापने सुगमे । द्रव्यतथ्यं गाथापश्चार्धेन प्रतिपादयति । तत्र द्रव्यतथ्यं पुनर्योयस्य सचित्तादेः स्वभावोद्रव्यप्राधान्याद्यस्य स्वरूपं तद्यथोपयोगलक्षणोजीवः कठिनलक्षणा पृथिवी द्रव्यलक्षणा आपइत्यादि । मनुष्यादेर्वा योयस्य मार्दवादिस्वभावोऽचित्तद्रव्याणां च गोशीर्षचंदनकंबलरत्नादीनां द्रव्याणां स्वभावः । तद्यथा । उण्हे करेइ सीयं,सीए उण्हत्तणं पुण भवेइ ॥ कंबलरयणादीणं, एस सहावो मुणेयव्वो ॥ १ ॥ भावतथ्यमधिकृत्याह । " भावतहं पुण नियमा, णायव्वं ठव्विहंमि भावंमि ॥ अहवा वि नाणदंसण, चरित्तविणएण अज्झप्पे " ॥ २५ ॥ ( भावतहमित्यादि) भावतथ्यं पुनर्नियमतोऽवश्यंभावतया षड्विधे औदयिके भावे ज्ञातव्यं । तत्र कर्मणामुदयेन निर्वृत्तऔदयिकः कर्मोदयापादितोगत्याद्यनुभावलक्षणस्तथा कर्मोपशमेन निर्वृत्तऔपशमिकः कर्मानुदयलक्षणइत्यर्थः । तथा क्षयाज्जातः क्षायिकोऽप्रतिपातिज्ञानदर्शनचारित्रलक्षणस्तथा क्षयाऽपशमाच्च जातः क्षायोपशमिकोदेशोदयोपशमलक्षणः । परिणामेन निर्वृत्तः पारिणामिकोजीवाजीवभव्यत्वादिलक्षणः पंचानामपि भावानां द्विकादिसंयोगान्निष्पन्नः सान्निपातिकइति । यदिवा अध्यात्मभ्यांतरं चतुर्धा भावतथ्यं द्रष्टव्यं । तद्यथा । ज्ञानदर्शनचारित्रविनयतथ्यमिति । तत्र ज्ञानतथ्यं मत्यादिकेन ज्ञानपंचकेन यथास्वमवितथोविषयोपलंभः । दर्शनतथ्यं शंकाद्यतिचाररहितं जीवादितत्त्वश्रद्धानं । चारित्रतथ्यं तु तपसि द्वादशविधे संयमे सप्तदशविधे सम्यगनुष्ठानं । विनयतथ्यं द्विचत्वारिंशद्भेदभिन्ने विनये ज्ञानदर्शनचारित्रतपउपचारिकरूपे यथायोगमनुष्ठानं ज्ञानादीनां तु वितथाऽसेवनेनाऽतथ्यमिति । अत्र च भावतथ्येना

धिकारः । यदि वा नावतथ्यं प्रशस्ताप्रशस्तनेदाद्विधा । तदिह प्रशस्तेनाधिकारं दर्शयितु माह । " जह सुत्तं तह अत्थो, चरणं चारो तहत्ति णायव्वं ॥ संतंमिय पसंसाए, असंतीपगयं डुगुंगाए " ॥ २६ ॥ ( जहसुत्तमित्यादि ) यथा येनप्रकारेण यथापद्धत्त्या सूत्रं व्यवस्थितं तथा तेनैव प्रकारेणार्थोव्याख्येयोनुष्ठेयश्च । एतदर्शयति । चरणमाचरण मनुष्ठातव्यं । यदिवा सिद्धांतसूत्रस्य चारित्रमेवाचरणमतोयथासूत्रं तथा चारित्रमेतदेव चानुष्ठेयमेतच्च याथातथ्यमिति ज्ञातव्यं । पूर्वार्धस्यैव नावार्थं गाथापश्चार्धेन दर्शयितु माह । यद्वस्तुजातं प्रकृतं प्रस्तुतं यथार्थमधिकृत्य सूत्रमकारि तस्मिन्नर्थे सति विद्यमाने यथावद्व्याख्यायमाने संसारोत्तारणकारणत्वेन प्रशस्यमाने वा याथातथ्यमिति नवति विवक्षिते त्वर्थे सत्यविद्यमाने संसारकारणत्वेन वा जुगुप्सायां सत्यां सम्यगनुष्ठीयमाने वा याथातथ्यं न नवति । इदमुक्तं नवति । यदि यथासूत्रं येन प्रकारेण व्यवस्थितं तथैवार्थोयदि नवति व्याख्यायते ऽनुष्ठीयते च संसारनिस्तरणसमर्थश्च नवति ततोयाथातथ्यमिति नवति । असति त्वर्थे क्रियमाणे संसारकारणत्वेन जुगुप्सिते वा नवति याथातथ्यमिति गाथातात्पर्यार्थः । एतदेव दृष्टांतगर्नं दर्शयितुमाह । " आयरियपरंपर्येण आगयं जोउ ठेयवुद्धीए ॥ कोवेइ ठेयवाई जमालिनासंचणासिहत्तित्ति ॥ २७ ॥ ( आयरिएइत्यादि ) आचार्याः सुधर्मस्वामिजंबुनामप्रनवार्यरक्षितादयास्तेषां प्रणालिकापारंपर्यं तेनागतं यद्व्याख्यानं सूत्रानिप्रायस्तद्यथा व्यवहारतयानिप्रायेण क्रियमाणमपि कृतं नवति । यस्तु कुतर्कदर्पाध्मातमानसोमिथ्यात्वोपहतदृष्टिकया ठेकवुध्या निपुणवुध्या कुशाग्रशेमुषीकोहमिति मत्वा कोपयति दूषयति अन्यथा तमर्थं सर्वज्ञप्रणीतमपि व्याचष्टे कृतं कृतमित्येवं ब्रूयात् । वक्तिच नहि मृत्पिंमक्रियाकालएव घटोनिष्पद्यते कर्मगुण व्यपदेशानामुपलब्धेः । सएव ठेकवादी निपुणोहमित्येवं वादी पंडितानिमानी जमालिना समोजमालिनिन्हववत् सर्वज्ञमतविकोपकोविनंक्ष्यत्यरहघट्टघटीयंत्रन्यायेन संसारचक्र वाले वंन्नमिष्यतीति । नचासौ जानाति वराकोयथायं लोकोघटार्थाः क्रियामृत्खननाद्याघट एवोपचरति तासांच क्रियाणां क्रियाकालनिष्ठाकालयोरेककालत्वात् क्रियमाणमेव कृतं नवति । दृश्यते चायं व्यवहारोलोके । तद्यथा । अद्यैव देवदत्ते निर्गते कान्यकुब्जं देवदत्तोगतइति व्यपदेशस्तथा दारुणि छिद्यमाने प्रस्थकोयं व्यपदेशइत्यादि । सांप्रतमन्यथावादिनोऽपायदर्शनद्वारेणोपदेशं दातुकामआह । ण करेति डुःखमोर्क्खं, उङ्ममाणोवि संजमतवेसु ॥ तम्हाअत्तुक्करिसो वज्जेअव्वो जतिजणेणं ॥ २८ ॥ ( णकरेइत्यादि ) योहि डुर्गृहीतविद्यालवदर्पाध्मातः सर्वज्ञवचनैकदेशमप्यन्यथा व्याचष्टे सएवंनूतः सत्संयमतपस्तडुद्यमं कुर्वाणोशारीरिकमानसानां डुःखानामसातोदयजनितानां मोक्षं विनाशं न करोत्यात्मगर्वाध्मातमानसोपि यतएवं तस्मादात्मोत्कर्षोऽहमेव सिद्धांतार्थवेदी नापरः कश्चिन्मत्तु

ह्योस्तीत्येवंरूपोनिमानोवर्जनीयस्त्याज्योयतिजनेन । साधुलोकेनापरोपि ज्ञानिना जात्यादिकोमदोन विधेयः किंपुनर्ज्ञानमदः । तथा चोक्तं ॥ ज्ञानं मददर्पहरं, माद्यति यस्तेन तस्य कोवैद्यः ॥ अगदोयस्य विषायति, तस्य चिकित्सा कथं क्रियते ॥ १ ॥ गतोनामनिष्पन्नो निक्षेपः सांप्रतं सूत्रालापकनिष्पन्नस्य निक्षेपस्यावसर. सच सूत्रे सति नवति । सूत्रंच सूत्रानुगमे सचावसरः प्राप्तोऽतः सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयं । तच्चेदं । (आहत्तहीत्यादि) अस्य चानंतरसूत्रेण सहायं संबंधः । तद्यथा । वलयाविमुक्केत्यन्निहितं । नाववलयं रागद्वेषौ ताच्यां विनिर्मुक्तस्यैव याथातथ्यं नवतीत्याद्यनेन संबंधेनायातस्यास्य सूत्रस्य व्याख्या प्रतन्यते । यथातथानावोयं याथातथ्यं तत्त्वं परमार्थस्तच्च परमार्थचिंतायां सम्यक्ज्ञानादिकं तदेव दर्शयति । ज्ञानप्रकार प्रकारशब्दआद्यर्थे । आदिग्रहणाच्च सम्यग्दर्शनचारित्रे गृह्येते । तत्र सम्यग्दर्शनमौपशमिकक्षायोपशमिकं गृह्यते । चारित्रं तु व्रतसमितिकषायाणां धारणरक्षणनिग्रहादिकं गृह्यते । एतत्सम्यग्ज्ञानादिकं पुरुषस्य जंतोर्यज्जातमुत्पन्नं तदहं प्रवेदयिष्यामि कथयिष्यामि । तुशब्दोविशेषणे । वितथाचारिणस्तद्दोषांश्चाविर्नावयिष्यामि । नानाप्रकारं वा विचित्रं पुरुषस्य स्वनावमुच्चावचप्रशस्ताप्रशस्तरूपं प्रवेदयिष्यामि । नानाप्रकारं स्वनावफलंच पश्चार्धेन दर्शयति । सतः सत्पुरुषस्य शोननस्य सदनुष्ठायिनः सम्यग्दर्शनचारित्रज्ञानवतोधर्मं श्रुतचारित्राख्यं पुनर्गतिगमनधरणलक्षणं वा तथा शीलमुद्युक्तविहारित्वं तथा शांति निर्वृतिमशेषकर्मक्षयलक्षणां (करिस्सामिपाउत्ति) प्राडुष्करिष्ये प्रकटयिष्यामि यथावद्भावयिष्यामि । तथाऽसतोऽशोननस्य परतीर्थिकस्य गृहस्थस्य पार्श्वस्थादेर्वा च शब्दः समुच्चितमधर्मं पापं तथा कुशीलं कुत्सितशीलमशांतिं चानिर्वाणरूपां संसृतिं प्राडुर्नावयिष्यामीति । अत्र च सतोधर्मं शीलं शांतिंच प्राडुष्करिष्याम्यसतश्चाधर्ममशीलमशांतिंचेत्येवं पदघटना योजनीया अनुपात्तस्यच चशब्देनाक्षेपोद्रष्टव्यइति ॥१॥ जंतोर्गुणदोषरूपं नानाप्रकारं स्वनावं प्रवेदयिष्यामीत्युक्तं तद्दर्शयितुकामआह । ( अहोयमित्यादि ) अहोरात्रमहर्निशं सम्यगुत्थितानिन्ह्ववाबोटिकाश्च सदनुष्ठानवंतस्तेन्यः श्रुतधरेन्यस्तथा तथागतेन्योवा तीर्थकृद्भ्योधर्मं श्रुतचारित्राख्यं प्रतिलन्य संसारनिःसरणोपायं धर्ममवाप्यापि कर्मोदयान्मंदनाग्यतया जमालिप्रभृतयश्वात्मोत्कर्षात्तीर्थकृदाद्याख्यात समाधिं सम्यग्दर्शनादिकं मोक्षपद्धतिमजोषयंतोऽसेवतः सम्यगकुर्वाणानिह्नवाबोटिकाश्च स्वरुचिविरचितव्याख्याप्रकारेण निर्दोषं सर्वज्ञप्रणीत मार्गं विध्वंसयति कुमार्गं प्ररूपयंति ब्रुवते चासौ सर्वज्ञएव न नवति । यः क्रियमाणं कृतमित्यध्यक्षविरुद्धं प्ररूपयति । तथा यः पात्रादिपरिग्रहान्मोक्षमार्गमाविर्नावयति । एवं सर्वज्ञोक्तमश्रद्दधानाः अश्रद्धानं कुर्वंतोप्यपरे धृतिसंहननडर्बलतया यथारोपित संयमनारं

बोडुमसमर्थाः कचिद्विपीदंतोऽपरेणाचार्यादिना वत्सलतया चोदिताः संतस्तं शास्तारमनुशासितारं चोदकं पुरुषं वदंति कर्कशं निष्ठुरं निर्जरं प्रतीपं चोदयंतीति ॥ २ ॥

विसोहियं ते अणुकाहयंते, जे आत्तनावेण वियागरेज्जा ॥ अघाणिए हो इ बहूगुणाणं, पाठांतरे (बहूणिवेसे) जे णाणसंकाइ मुसं वदेज्जा ॥३॥ जे यावि पुठा पलिउं चयंति, आयाणमठं खलु वंचयित्ता ॥ असाहुणो ते इह साहुमाणी, मायत्रि एसंति अणंतघातं ॥ ४ ॥

अर्थ—ते स्वाग्रहि पुरुष ( विसोहियंते के० ) ते विशोधित शुद्धनिर्दोषमार्ग तेने ( अणुकाहयंते के० ) आचार्यनी प्ररूपणा थकी उन्नापिने कहे एटले ( जेआत्तनावेणवियागरेज्जा के० ) जे पोताना नावे एटले स्वछंदे बोले ( अघाणिएहोइबहूगुणाणं के० ) ते अहाछंद पणा थकी घणा गुणा जे ज्ञानादिक तेनो आस्थान थाय केमके ए स्वानिनिवेश मिथ्यात्वना नाव थकी करीने ( जेणाणसंकाइ के० ) जे ज्ञान शंका एटले श्रीजिनागमनेविषे शंका लावीने ( मुसंवदेज्जा के० ) मृषाबोले स्वकल्पित जेवो रुचे तेवो बोले तेणे करीने घणा गुणानो आस्थान एटले कुनाजन थाय ॥ ३ ॥ ( जे आविपुठापलिउंचयंति के० ) जे कोइ पूछे जे तमे कोनी पासेथी नण्या छो तेवारे पोताना आचार्यनुं नाम गोपवीने बीजानुं नाम कहे ( आयाणमठंखलुवंचयित्ता के० ) ते निश्चे थकी आत्मार्थ जे मोक्षनो अर्थ तेने वंचेछे एतावता ते मुक्तिने नपामे ( असाहुणोतेइहसाहुमाणी के० ) परमार्थथकी ते असाधु थको पण आ जगतने विषे पोतामां साधुपणु करी माने तथा बीजाउने कहीने पोतामां साधु पणो मनावे ( मायत्रिएसंतिअणंतघातं के० ) ते मायावी साधु आसंसारनेविषे अनंत घात पामे एटले अनंत काल पर्यंत संसारमां परिब्रमण करे ॥ ४ ॥

---

॥ दीपिका—विशोधितोमोक्षमार्गस्तं ते कदाग्रहिणोगोष्ठामाहिलवदनुपश्चादाचार्यप्ररूपणातः कथयंति अनुकथयंति । ये आत्मोत्कर्षादात्मनावेन स्वानिप्रायेणाचार्यपारंपर्यागतमप्यर्थं व्युदस्यान्यथा व्यागृणीयुर्व्याख्यांति । आचार्यपरंपरामज्ञात्वा स्वानिप्रायेण सूत्रार्थव्याख्यानं महतेऽनर्थाय । इदमेव दर्शयति । सएवंनूतोऽस्थानिकोऽनाधारोबहूनां ज्ञानादिगुणानां स्यात् । कचित्पाठः । ( अघाणिएहोइबहूणिवेसत्ति ) अस्यार्थः । अस्थानमनाजनं सम्यक्ज्ञानादीनां । किंनूतोबहुरनर्थकारकत्वेनाऽसदनिनिवेशोयस्य सबहुनिवेशः । ते पुनः किंनूताइत्याह । ये ज्ञानशंकया मृषा वदेयुः । कोर्थः । जिनोक्तागमे शंकां कुर्वत्ययं तदुक्तएव नस्यादिति । अथवा ज्ञानशंकया पांमित्यानिमानेन मृषा

वदेयुः ॥ ३ ॥ येऽज्ञाततत्त्वाः परेण पृष्टाः कस्मादाचार्यादधीतं नवद्भिरिति ते स्वमाचार्यं ज्ञानाभिमानेन ( पलिउंचयंतित्ति ) निन्हुवते । अथवा सदपि प्रमादस्खलितमाचार्यादिना पृष्टाः संतोमातृस्थानेनावर्णवादभीतानिन्हुवते । ते एवं कुर्वाणाआदानं मोक्षमर्थं वंचयंति । एवं कुर्वाणास्तेऽसाधवइहास्मिन् जगति साधुमानिनोमायान्विताएष्यंति या स्यंत्यनंतशोघातं विनाशं संसारं वा । एकं तावत्स्वयमसाधवोद्वितीयं साधुमानिनः । उक्तंच । पावं काऊण सयं, अप्पाणं सुद्धमेव ववहरइ ॥ दुगुणं करेइ पावं, बीअं बालस्स मंदत्तं ॥१॥ तदेवमात्मोत्कर्षदोषाद्बोधिलाभमप्युपहत्यानंतभवभाजः प्राणिनः स्युरिति ॥४॥

॥ टीका–किंच । ( विसोहियमित्यादि ) विविधमनेकप्रकारं शोधितः कुमार्गप्ररूपणापनयनद्वारेण निर्दोषतां नीतोविशोधितः सम्यक्दर्शनज्ञानचारित्राख्योमोक्षमार्गस्तमेवंभूतं मोक्षमार्गं ते स्वाग्रहग्रस्तागोष्ठामाहिलवदनुपश्चादाचार्यप्ररूपणातः कथयंत्यनुकथयंति । ये चैवंभूताआत्मोत्कर्षात्स्वरुचिविरचितव्याख्याप्रकारव्यामोहिताआत्मभावेन स्वाभिप्रायेणाचार्यपारंपर्येणायातमप्यर्थं व्युदस्यान्यथा व्यागृणीयुर्व्याख्यानयेयुस्तेहि गंभीराभिप्रायं सूत्रार्थं कर्मोदयात्पूर्वापरेण यथावत्परिणामयितुमसमर्थाः पंडितमानिनउत्सूत्रं प्रतिपादयंति । आत्मनावव्याकरणं च महतेऽनर्थायेति दर्शयति । सएवंभूतः स्वकीयाभिनिवेशादस्थानिकोऽनाधारोबहूनां ज्ञानादिगुणानामभाजनं भवतीति । ते चामी गुणाः । सुस्सूसइ पडिपुछइ, सुणेइ गेण्हइ य ईहएआवि ॥ तत्तो अपोहएवा, धारेइ करेइ वा सम्मं ॥१॥ यदि वा गुरुशुश्रूषादिना सम्यक्ज्ञानावगमस्ततः सम्यगनुष्ठाने च मतः सकलकर्मक्षयलक्षणोमोक्षइत्येवंभूतानां गुणानामनायतनमसौ । क्वचित्पाठः । ( अट्ठाणिएहोंतिबहूणिवेसत्ति ) अस्यायमर्थः । अस्थानमभाजनमसौ भवति सम्यक्ज्ञानादीनां गुणानां । किंभूतोबहुरनर्थसंपादकत्वेनासदभिनिवेशोयस्य सबहुनिवेशः । यदिवा गुणानामस्थापनिकोऽनाधारोबहूनां दोषाणां च निवेशः स्थानमाश्रयइति । किंभूताः पुनरेवं भवंतीति दर्शयति । ये केचन दुर्गृहीतज्ञानलवाऽवलेपिनोज्ञाने श्रुतज्ञाने शंका ज्ञानशंका तया मृषावादं वदेयुः । एतदुक्तं भवति । सर्वज्ञप्रणीते आगमे शंकां कुर्वंत्ययं तत्प्रणीतएव नभवेदन्यथा वाऽस्यार्थः स्यात् । यदिवा ज्ञानशंकया पांडित्याभिमानेन मृषावादं वदेयुर्यथाहं ब्रवीमीति तथैव युज्यते नान्यथेति ॥ ३ ॥ किंचान्यत् । ( जेयाविपुट्ठ इत्यादि ) ये केचनाविदितपरमार्थाः स्वल्पतया समुत्सेकिनोऽपरेण पृष्टाः कस्मादाचार्यात्सकाशादधीतं श्रुतं भवद्भिरिति । ते तु स्वकीयमाचार्यं ज्ञानावलेपेन निन्हवानोऽपरं प्रसिद्धं प्रतिपादयंति । यदिवा मयैवैतत्स्वतउत्प्रेक्षितमित्येवं ज्ञानावलेपात् ( पलिउंचयंतित्ति ) निन्हुवते । यदिवा सदपि प्रमादस्खलितमाचार्यादिना लोचनादिके अवसरे पृ

थाः संतोमातृस्थानेनाऽवर्णवादनयान्निन्दुवते । तएवं पलिउंचकानिन्हवं कुर्वाणाश्रादौ यतइत्यादानं ज्ञानादिकं मोक्षोवा तमर्थं वंचयंति भ्रंशयंत्यात्मनः । खलुरवधारणे। वंचयं त्येव.। एवमनुष्ठायिनश्चासाधवस्ते परमार्थतस्तत्त्वचिंतायामिहास्मिन् जगति साधुविचा रेवा साधुमानिनआत्मोत्कर्षायाऽसदनुष्ठानमानिनोमायान्वितास्ते एष्यंति यास्यंत्यनंत शोबहुशोघातं विनाशं संसारं वा अनवदग्रसंसारकांतारमनुपरिवर्तयिष्यंतीति। दोषद्वय डुष्टत्वात्तेपामेकं तावत्स्वयमसाधवोद्वितीयं साधुमानिनः । उक्तंच । पावं काऊण सयं, अप्पाणं शुद्धमेव ववहरइ ॥ डुगुणं करेइ पावं, वीयं बालस्स मंदत्तं ॥ १ ॥ तदेवमा त्मोत्कर्षदोषाद्वोधिलानमप्युपहत्यानंतसंसारनाजोनवंत्यसुमतइति स्थितं ॥ ४ ॥

जे कोहणे होइ जगछनासी, विउसियं जे उ उदीरएज्जा. ॥ अंधे
.व से दंमपहं गहाय, अविउसिए घासति पावकम्मी ॥ ५ ॥
जे विग्गहीए अनायनासी, न से समे होइ अझंझपत्ते ॥ उव
वायकारी य हरीमणे य, एगंतदिठीय अमाइरूवे ॥ ६ ॥

अर्थ–( जे कोहणेहोइजगछनासी के० ) जे क्रोधी थाय ते जगतार्थनाषी होय जगतार्थनाषी एटले जेमां जेवो दोष होय तेने तेवो कहे अर्थात् काणाने काणो कहे खोडाने खोडो कहे टुंटाने टुंटो कहे पांगलाने पांगलो कहे कोढीने कोढी कहे एवो प्रगट निठुर नाषण करनार होय (विउसियंजेउ के०) जे उपशमावेलो एवो जे कलह तेने वली ( उदीरएज्जा के० ) उदीरे ए पुरुषने जे फल थाय ते कहेछे. (सेके०) ते पुरुष ( अंधेवदंमपहंगहाय के० ) जेम कोइ आंधलो पुरुष लाकडी ग्रहण करीने मार्गने वि षे जातो. थको अनेक कंटक चतुष्पदादिके करी पीडाय तेम ( अविउसिए के० ) अ कोविद एवोजे कलहकारी ( पावकम्मी के०) पापकर्माचारी जीव ते पण (घासतिके०) चतुर्गतिक संसारमांहे डुःख पामे ॥ ५ ॥ ( जेविग्गहीए के० ) जेकोइ विग्रह एटले कलहकारी होय ते यद्यपि क्रिया तो केटलीक करे तथापि ते क्रिया विग्रह एटले युद्ध प्रिय थाय तथा ( अनायनासी के० ) अन्यायनो बोलनार होय ( नसेसमेहोइअझंझ पत्ते के० ) ते पुरुष कलहरहित एवा सम्यक् दृष्टी तेना सरखो समनावी नहोय ते माटे साधु कलहकारी नहोय परंतु साधु केवो होय ते कहेछे. ( उववायकारीयहरीम णेय के० ) उपपातकारी एटले आचार्यनी आज्ञापालक तथा लज्जावंत मनवालो होय एटले अनाचार करतो थको आचार्यादिक थकी लज्जा पामे तथा ( एगंतदिठीय के० ) एकांतदृष्टी एटले जीवादिक पदार्थनो ज्ञाता होय एकांत श्रद्धावंत होय तथा ( अमाइरूवे के० ) मायारहित होय एवा पुरुषने साधु कहिए. ॥ ६ ॥

॥ दीपिका–यः स्वजावेन क्रोधनोरोषी जवति यश्च जगदर्थजापी योयथावस्थितः पदार्थस्तं तथैव जापते । तद्यथा । ब्राह्मणं डोडमिति वक्ति वणिजं किराटमिति शूद्रमाजीरमिति श्वपाकं चांमालमिति काणं काणमेव वक्ति । खंजं खंजमेव चौरं चौरमिति । अंधमंधमित्यादि कविणं योवक्ति सजगदर्थजापी निष्ठुरजापीत्यर्थः । व्यवसितं समाप्तं द्वंद्व कलहं यः पुनरुदीरयेत् प्रज्वालयेत् सोंऽधइव । यथांधोदंडमेवं गोदंडमार्गं गृहीत्वा व्रजन् घृष्यते कंटकश्वापदादिजिः पीडयते । एवं सोपि ( अविघोसियंति ) अपशांतकलहः पापकर्मा घृष्यते पीडयते संसारपीडाजिः ॥ ५ ॥ योविग्रहिकः कलहप्रियोऽन्यायजापी न समोमध्यस्थोजवति अझंझा प्राझंझा माया कलहोवा मायाप्राप्तः कलहप्राप्तोवा सरागद्वेषवान् मायावांश्च जवतीत्यर्थः । एतद्दोषदर्शी उपपातकारी आचार्यादेशकरः ह्रीर्लज्जासंयमस्तत्र मनोयस्य सह्रीमनाः एकांतेन तत्त्वेषु दृष्टिर्यस्य सएकांतदृष्टिः । एगंतसड्डिन्तिपाठे एकांतश्रद्धावान् जिनागमे । अमायि निर्मायं रूपं यस्यस तथा छद्मरहितइत्यर्थः ॥ ६ ॥

---

॥ टीका–मानविपाकमुपदर्श्याधुना क्रोधादिकषायदोषमुद्भावयितुमाह । ( जेकोहणे इत्यादि ) योह्यविदितकषायविपाकः प्रकृत्यैव क्रोधनोजवति तथा जगदर्थजापी यश्च जवति । जगत्यर्थाजगदर्थाये यथा व्यवस्थिताः पदार्थास्तानाजापितुं शीलमस्य जगदर्थजापी तद्यथा ब्राह्मणं डोडमिति ब्रूयात्तथा वणिजं किराटमिति शूद्रमाजीरमिति श्वपाकं चांडालमित्यादि तथा काणं काणमिति तथा खंजं कुब्जं वडजमित्यादि तथाकुष्टिनं क्षयिणमित्यादि योयस्य दोषस्तं तेन खरं परुषं ब्रूयात् यः सजगदर्थजापी। यदिवा जयार्थजापी यथैवात्मनोजयोजवति तथैवाविद्यमानमप्यर्थं जापते तच्छीलश्च येन केनचित्प्रकारेणाऽसदर्थजापणेनाप्यात्मनोजयमिछतीत्यर्थः । ( विउसियंति ) विविधमवसितं पर्यवसितमुपशांतं द्वंद्वं कलहं यः पुनरप्युदीरयेत् । एतडुक्तं जवति । कलहकारिजिर्मिथ्याडुष्कृतादिना परस्परं क्षामितेपि तदुद्ब्रूयाद्येन पुनरपि तेषां क्रोधादयोजवंति । सांप्रतमेतद्विपाकं दर्शयति । यथाह्यंधश्चक्षुर्विकलोदंडपथं गोदंडमार्गं प्रमुखोज्ज्वलं गृहीत्वाऽऽश्रित्य व्रजन् सम्यगकोविदतया घृष्यते कंटकश्वापदादिजिः पीडयते एवमसावपि केवलं लिंगधार्यनुपशांतक्रोधः कर्कशजाष्यधिकरणोदीपकस्तथा ( अविउसियत्ति ) अनुपशांतद्वंद्वः पापमनार्यं कर्मानुष्ठानं यस्यासौ पापकर्मा घृष्यते चतुर्गतिके संसारे यातनास्थानगतः पौनःपुन्येन पीडयतइति ॥५॥ किंचान्यत् । (जेविग्गहिएइयादि ) यः कश्चिदविदितपरमार्थोविग्रहोयुद्धं सविद्यते यस्यासौ विग्रहिकोयद्यपि प्रत्युपेक्षणादिकाः क्रियाविधत्ते तथापि युद्धप्रियः क्वचिद्भवति तथाऽन्याय्यं जापितुं शीलमस्य सोऽन्यायजापी यत्किंचन जाप्यऽस्था

ननाथी गुर्वाद्यधिक्षेपकरोवा यश्चैवंभूतोनासौ समोरक्तद्विष्टतया मध्यस्थोभवति । तथा नाप्यझंझां प्राप्तोकलहप्राप्तोवा भवत्यमायाप्राप्तः । यदिवा अझंझाप्राप्तैरकलहप्राप्तैः सम्यग्दृष्टिभिरसौ समोन भवति यतः, अतोनैवंविधेन भाव्यमपित्वक्रोधनेनाकर्कशभाषिणा चोपशांतयुध्दानुदीरकेण न्यायभाषिणाऽझंझाप्राप्तेन मध्यस्थेन च भाव्यमिति । एवमनंतरोद्दिष्टदोषवर्जीसन्नुपपातकार्याचार्यनिर्देशकारी यथोपदेशं क्रियासु प्रवृत्तः । यदिवोपायकारित्ति) सूत्रोपदेशप्रवर्तकस्तथा न्हीर्लज्जासंयमोमूलोत्तरगुणभेदभिन्नस्तत्र मनोयस्यासौ न्हीमनाः । यदिवाऽनाचारं कुर्वन्नाचार्यादिभ्योलज्जते सएवमुच्यते । तथैकांतेन तत्त्वेन जीवादिषु पदार्थेषु दृष्टिर्यस्यासावेकांतदृष्टिः। पाठांतरंवा (एगंतसड्डित्ति ) एकांतेन श्रद्धावान् मौनींद्रोक्तमार्गे एकांतेन श्रद्धालुरित्यर्थः। चकारः पूर्वोक्तदोषविपर्यस्तगुणसमुच्चयार्थः । तद्यथा । ज्ञानपलिउंचकोक्रोधीत्यादि । तावदझंझाप्राप्तइति स्वतएवाह । ( अमाइरूवेत्ति ) अमायिनोरूपं यस्यासावमायिरूपोऽशेषच्छद्मरहितइत्यर्थः। न गुर्वादीन् छद्मनोपचरति नाप्यन्येन केनचित्सार्धं छद्मव्यवहारं विधत्तइति ॥ ६ ॥

स पेसले सुहुमे पुरिसजाए, जच्चन्निए चेव सुउज्जुयारे ॥ बहुंपि
अणुसासिए जे तहच्चा, समे हु से होइ अझंझपत्ते ॥ ७ ॥ जे
आवि अप्पं वसुमंति मत्ता, संखाय वायं अपरिक्ख कुज्जा ॥ त
वेण वाहं सहिउत्ति मत्ता, अण्णं जणं पस्सति बिंबभूयं ॥ ८ ॥

अर्थ-( सपेसले के० ) तेने आचार्यादिके घणो शिखव्यो छतो पण यथार्थ तेवाज भावें वर्ते पण गुरु वचन विरोधि नथाय तेने पेशल एटले मनोहर विनयादिक गुणवंत जाणवो. तथा (सुहुमे के०) सूक्ष्म भावनो देखनार तथा (पुरुषजात के०) परमार्थथकी पुरुषार्थनो साधक तथा (जच्चन्निए के०) तेवीज जातिसहित सत्कुलोत्पन्न जाणवो (चेव के० ) निश्चय थकी ( सुउज्जुयारे के० ) ते ऋजु आचारी एटले सरल मार्गे प्रवर्त्ते तेवा पुरुषने ( बहुंपिअणुसासिएजेतहच्चा के० ) आचार्यादिके घणो शिखाव्यो छतो मुखनुं राग फेरवे नही अर्थात् प्रसन्न मन राखे ( समेहुसेहोइअझंझपत्ते के० ) ते पुरुष श्रीवीतराग समान कलह रहित थाय ॥ ७ ॥ ( जेयाविअप्पंवसुमंतिमत्ता के० ) जे कोइ लघुप्रकृति पोताने आत्माने वसुमंत एटले संयमवंत जाणीने ( संखायवायंअपरिक्खकुज्जा के० ) सम्यक् परमार्थ अपरीक्ष थको आत्मोत्कर्ष अभिमान करे ( तवेणवाहंसहिउत्तिमत्ता के० ) तथा हुंज तपे करी सहितछुं माहारा समान बीजो कोइ तपस्वी नथी एवीरीते जाणीने अभिमान धारण करी ( अण्णंजणंपस्सतिबिंबभूयं के० ) अन्य जन ने बिंबभूत गुणशून्य आकार मात्र देखे एटले जलचंद्रमानी पेरे जाणे ॥ ८ ॥

